श्रीः

हरिदास-संस्कृत-ग्रन्थमाला

१३६



श्रीः

# भट्टिकाव्यम्

## 'चन्द्रकला' 'विद्योतिनी' सहितम्

परीक्षोपयोगि ७-११ सर्गात्मकम्।

द्वितीयो भागः



पं० शेषराज शर्मा

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

१३६

श्रीमद्भट्टिविरचितं

# भट्टिकाव्यम्

## सप्तमाद्येकादशसर्गपर्यन्तम्

'चन्द्रकला' 'विद्योतिनी' संस्कृत-हिन्दी-

व्याख्याद्वयोपेतम्

व्याख्याता

साहित्यसुधाकर-काव्यतीर्थ—

पण्डित-श्रीशेषराजशर्मा शास्त्री



प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस सिटी।

सं० २००७ ] [ सन् १९५१

# कथासारः

## सप्तमः सर्गः ।

ततो वर्षर्तुः प्रादुरभूत् । वर्षाप्रभञ्जनः पयोधराश्च स्वस्ववैभवं प्रकाशयामासुः । माल्यवत्पर्वतवास्तव्यो रामस्तानालोक्य सीतास्मृत्याऽसहिष्णुतया परिदेवयामास, विरहवर्द्धकांस्तांस्तान् पदार्थानुपालभत च । वर्षाऽपगमानन्तरं रामः शरत्समीपे ... सङ्घविस्तृतं शुक्लमम्बरतलमपश्यल्लक्ष्मणं संबोध्य तत्कालभवाननेकान् पदार्थान् वर्णितवांश्च । स वार्षिके काले व्यतीतेऽपि सीताऽन्वेषणाऽनुद्यतं सुग्रीवं निनिन्द । इदं चाऽवोचद्रामः-"हे लक्ष्मण ! त्वया स सुग्रीवो निष्ठुरमुपालम्भनीय" इति । लक्ष्मणश्च भासुरं कार्मुकं गृहीत्वा सुग्रीवाऽन्तिकं गन्तुमुपचक्रमे । मारुतिर्विनीतत्वेन लक्ष्मणं किष्किन्धां निनाय । शोभनललनाभिरावृतः सुग्रीवो लक्ष्मणं प्रणम्य कृतज्ञताज्ञापनं चकार कथयामास च-"हे प्रभो ! साम्प्रतमहं जनकनन्दिनीगवेषणाऽर्थं सर्वत्रगान्वानरान्प्रहिणोमी"ति । एवं च स तस्मिन्नेवाऽहनि रामदर्शनवाञ्छां स्फुटीचकार । ततः सुग्रीवः सीतामार्गणार्थं प्रतिदिशं बहून्वानरान्प्रेषितुमभिप्रायं बबन्ध तेषु च समयोचिताऽऽचाराऽऽचरणाय बहूपदेशविशेषांश्च सूचयामास, निर्दिष्टवांश्च मासपूरणात्प्रागेवागमनाय । तथैव स सहाङ्गदं जाम्बवन्नीलमहितं कपिनिकरपरिवृतं हनूमन्तं दक्षिणां दिशं प्रस्थापयितुं चेयेष । रामो मैथिलीमार्गणपरायणान्वानरान्वीक्ष्य स्वमनोरथं पूर्णकल्पं कल्पयामास । स स्वकीयमभिज्ञानमङ्गुलीयकं सीतायै प्रदातुं हनूमति समर्पितवान् । ततस्ते पवननन्दनादयः कपयः आत्मभर्त्रादेशपालनार्थं रामकामनापूरणार्थं चाऽनेकदेशेषु प्रस्थिताः । एवं तेऽनेकस्थानेषु भ्रान्ता विक्रमं च प्रकाशितवन्तः ।

अथैकस्मिन्नचलकटक उपविश्य ते नैकविधान्विहगान्विलोकयामासुः एकां सुन्दरीं नारीं च ददृशुः तां कुशलं च प्रपच्छुः । सा च वरोरूः सहासं तेषां स्वागतं चकार, स्वादुभिः फलैः शीतलेन सलिलेन च तांस्तर्पयामास । "कस्येयं नगरी"ति कपीनामनुयोगे साऽब्रवीत्—"विश्वकर्मनिर्मिता पुरीयं दानवराजस्य । स च स्थितभेदनाद्बलिद्विषा निषूदितः । अहं च मेरुसावर्णेर्नाम तस्य दानवेन्द्रस्य स्वयंप्रभा नाम दुहिताऽस्मि । आत्मनियोगाऽनुष्ठानाऽर्थं युष्माकं बहिर्निर्गमनेच्छा चेत्पाणिभिर्दृशः पिधध्वम् , बहिरहं प्रापयिष्यामि वः" इति । तदनु सा तेषामनुरोधमनुसरन्ती तान् बहिर्निष्कासितवती । ततश्च रसातलान्निष्क्रम्य ते वानराः प्रभुनिर्दिष्टां वेलामतिक्रान्तां ज्ञात्वा बहुविधां व्यथामनुबभूवुः, एकैकशोऽनेकप्रकारान् वितर्कांश्च प्रकाशितवन्तः । तत्र च जाम्बवदङ्गदहनूमन्तः प्रायोपवेशननिश्चयं कृतवन्तः । ततस्तदन्तिकं संपातिर्नाम गृध्रराजो भक्षणाऽभिलाषेण प्रायात् । अनन्तरं ते कपयो गृध्रमुखे पतिष्यत

आत्मनो विगर्ह्य राघवकार्याचरणपुरःसरं प्राणत्यागिनं जटायुषं प्राशंसन्। ततः स गृध्रराजः सम्पातिः स्वाऽनुजस्य जटायुषो नामाऽऽकर्ण्य वानरपरिचयमप्राक्षीत्। ते च वानरा "वयं रामदूता" इत्यभिधाय सीताऽन्वेषणप्रकारमकथयन्, अवधिसमापनेन प्राबोधयंश्च स्वकीयां विवशताम्। विहगपतिः सम्पातिस्त्रिकूटकूटे स्थितायां लङ्काऽभिधानायां रावणनगर्यां विद्यमानां सीतां सूचितवान्। ततस्ते सकला अपि कपयः सहर्षकलकलाः सन्तो महेन्द्राख्यमद्रीन्द्रं प्रास्थिषत, तस्य मञ्जुले निकुञ्जे स्थित्वा तोयधिं चाऽपश्यन्। ततस्तेऽङ्गदप्रमुखा वलीमुखा मैथिलीगवेषणार्थं मारुतिं प्रेषितवन्तः।

---

## अष्टमः सर्गः।

अथ पवननन्दनो वेगाऽतिशयेन व्योमाऽगाहत। अयने च स एकां राक्षसीं वदनप्रवेशनेनोदरं भित्त्वा हतवान्, तत्राऽन्तरे स्वपित्रा शक्राद्रक्षितं मैनाकं नाम पर्वतं व्यलोकयत्। स च पर्वतः क्षणं यावत्स्वस्मिन् विश्रमाऽर्थं फलमूलोपयोगाऽर्थं च रामदूतमाञ्जनेयं प्रार्थितवान्। पवनतनयश्च स्वपितृसखं मैनाकं विनयाऽतिशयेनाऽनुजीविवदनुनीतवान्, स्वस्य जानकीविचयनस्याऽप्रतिबन्धनीयत्वं व्याचख्यौ, रावणपुरे विक्रमप्रकाशनं प्रतिज्ञाय ततः सुदूरमपससार च। तस्मिन्नवसरे सुरप्रेरिता सुरसा नाम नागजननी तद्विक्रमधैर्यपरीक्षाऽर्थं पुरतोऽवततार। श्वसनसूनुश्चाऽणुरूपं गृहीत्वा तस्याः शतयोजनमास्यं प्रविश्य निरगात्। ततः स सीताविदिक्षया रक्षःसमूहव्याप्तं रत्नाकरतीरं स्वस्वरूपाऽप्रकाशनपूर्वकं क्रमितुमुपाक्रमत, मिथो विरुद्धं प्रलपद्भिर्ब्रह्मराक्षसै रक्षोभिः पिशाचैश्च संयुक्तां निरातङ्कां लङ्कां नाम राक्षसराजपुरीमगच्छत्। तस्मिन्समये पूर्वस्यां दिशीन्दुरुदितः। प्रभञ्जननन्दनो मैथिलीकुशलप्रवृत्तिप्रबोधाऽर्थं सूक्ष्मरूपेण यातुधाननिकेतनेषु समचारीत्, आत्मपराक्रममप्रकाशयन्ननेकविधाभिर्भुवनाऽभिरामललनाभिः समलङ्कृतं दशवदनभवनमभिजगाम।

ततः समीरणकुमारो दशाऽऽननसदनं परिहरन् पुष्पकाऽभिधानं व्योमयानं समगमत्, तत्र च पुरन्दरपुरजेतारं यातुधाननेतारं कैलाससङ्काशं राक्षसेशमीक्षितवान्। अभिमतया दयितया समं रहोऽवस्थितं दशमुखं दृष्ट्वा मैथिलीमनवाप्य व्यथितचित्तो मारुतिर्यत्र तत्र पर्यटितुमारभत। चिन्ताक्रान्तचेताः सोऽशोकवनिकामाराद्व्यालोकयत्, अतिरुचिरायां तस्यां शनैः प्राविशच्च। स तत्र समन्ततः परिभ्रमितुमारेभे। तत्र च तं केसरिकुमारं शुभशकुनसूचकाः शकुनयोऽभिह्लदन्। तदा रामदयिता सीता चाऽनेकप्रकारं शुभनिमित्तमदर्शत्। अनन्तरमञ्जनानन्दनः पतिविप्रयोगान्मलिनाननां च्युतस्मितां जनकतनयामपश्यत्। तत्रैव प्रसङ्गे सीताऽनुनयाऽर्थं दशमुखः सुमुखीभिः परिवृतोऽभ्यागात्। स च तां नैकधाऽनुनीतवान्। पतिव्रता सीता च साध्वी

कुत्सितप्रार्थनां समुपस्थापयन्तं तं तीव्रवाक्यैर्निरभर्त्सयत्। अथाऽशान्तो दुर्दान्तो रावणः कोपाऽतिशयाक्रान्तः सन् खड्गमुपादाय "हे जानकि! मासाऽभ्यन्तरे मां न प्राप्स्यसे चेत्तर्हि मरिष्यसी" त्युक्त्वा राक्षसीसन्दोहं सीताभयदानाऽर्थं नियुज्य ततो निर्जगाम। तदनु राक्षस्यो रावणादेशाऽनुगुणं सीतामतिपरुषतरवचनमूचुः। अथ त्रिजटाभिधाना राक्षसी सीतापक्षं समवलम्ब्य ता राक्षसीर्भर्त्सितवती, जानकीशुभोदर्कप्रकाशकं स्वस्वप्नं च समवोचत्। ततस्ताः सर्वा अपि राक्षस्यः शयनाय स्वस्वस्थानं प्रययुः।

अथ वातात्मजश्चोपयुक्तं प्रस्तावं निभाल्य सीतामाश्वासयितुं रामसङ्कथां प्रास्तावीत्। सीता च तं कपिरूपिणं रावणमाशङ्कत नानाविधतर्कनं च कृतवती। हनूमांश्च "रामकिङ्करोऽहमि"ति स्वसंस्तवं प्रस्तुतवान्, अब्रवीच्च "माल्यवत्पर्वतवास्तव्यो राम आस्त" इति। अथ पवनतनूजो रामाऽभिज्ञानत्वेनाऽङ्गुलीयकं सीतायै व्यतरत् स्वदौत्यं च प्रत्यपीपदत्। मृदुलमञ्जुलेन वाक्यकदम्बकेन तामाश्वासितवांश्च हनूमान्। स च रामस्य तस्यामसाधारणं प्रणयं सूचयित्वा ततो रामाऽर्थं प्रतिसन्देशं च प्रार्थयाञ्चक्रे। सीता रामसम्मतं समधिकाऽभिरामं चूडामणिं स्वाभिज्ञानरूपेण पवननन्दने समार्पिपत् रामविषयं बहुप्रकारमनुयोगजातं विधाय तं व्यसर्जयच्च। ततो हनूमान् स्वयशोवृद्ध्यभिलाषुको भूत्वा नन्दनकाननोपमानमशोकवनिकाऽभिधानं रावणोपवनमभनक्।

---

## नवमः सर्गः।

ततस्तरुभङ्गसंविग्ना राक्षस्यो रावणाऽन्तिकं गत्वा कपिकर्तृकं वनभञ्जनं निवेदयामासुः। रावणश्च पवनसूनुनिषूदनायाऽशीतिसहस्रसंख्यकान्किङ्करान्समादिशत्। नानाविधायुधधारिणस्तान्बहूनपि कपिप्रवरः कंचित्कालं युद्ध्वा क्षणेन लोहमुद्गरेण व्यापादितवान्। ततो हतशेषास्ते निशाचरा रावणान्तिकमागत्य सूचितवन्तो हनूमद्विक्रमम्। रावणश्च मारुतिनिग्रहाय पल्लोपयोगेनोच्छूनविग्रहान् स्वान्सचिवात्मजान्व्यसर्जयत्। वलीमुखप्रमुखः पवमाननन्दनोऽपि नादापूरितदिङ्मुखः सन् सपुत्रांस्तान् रावणसचिवाञ्जघान। इत्थं रक्षोजनकदनं विधाय मारुतिः पुनरशोकवनिकां क्रेतुमक्रमीत्। तदनु दशाननः कपिं हन्तुं स्वतनयमक्षकुमारं निर्दिष्टवान्। अक्षकुमारेण सत्रा पवनकुमारस्य घोरं जन्यं समजनि। कियन्तंचित्समयं संग्रामेण यापयित्वा मारुतिरक्षकुमारं हतवान्। भूयोऽप्यारेभे प्रभञ्जननन्दनो रावणोपवनभञ्जनम्।

अथ रावणोऽक्षमथनोदन्तं निशम्य वानरव्यापादनायेन्द्रजितं तदुत्कर्षसंवर्द्धनपुरःसरमाज्ञापयामास। स च रावणिर्जनकपादप्रणतिपूर्वकमाशीःपरम्परां गृहीत्वा निकेतनान्निरयासीत्। अथाऽसौ मतिमान्हनूमांस्तस्मिन्दारुणं वचनं प्रयुज्य स्वविक्रमं प्रकाशयितुमसाधारणं क्रमक्रमीत्। ततस्तयोः कीशरक्षसोरसामान्य आहवः समप-

घत। प्राभञ्जनिरिन्द्रजित्स्यन्दनवाहिनो वाजिनः प्राणैर्वियुयोज। इन्द्रजिदपि ततोऽन्यान्हयानाहर्तुं सूतमशिषत्, अश्वाऽन्तरयुक्तं रथमारुह्य दुर्जयं सैन्यव्यूहमकल्पिष्ट। ततः समस्ता अपि राक्षसा अतिकुपिताः सन्तः कपिवरे शरनिकरमवाकिरन्। क्षतक्षतजो वाततनूजोऽपि द्विषस्तान्यातुधानान्परिघेणाऽहन्। मेघनादोऽपि ब्रह्मपाशेनाऽञ्जनानन्दनमबध्नात्। रक्षोभिर्बद्धो वानरवरेण्यः स विचलितुं शक्तोऽपि ब्रह्मगौरवान्नाऽचलत्। तदनु ते यातुधानास्तमञ्जनासुतं नरदूतं भक्षयितुमिच्छन्तोऽनेकविधं वाग्व्यापारं च प्राकाशयन्। एवं च ते हनूमन्तं ब्रह्मपाशबद्धमपि भूयो वरत्राशृङ्खलादिभिर्बबन्धुः। ततो मेघनादो ब्रह्माऽस्त्रस्य बन्धनान्तराऽसहत्वाद्रक्षःकर्तृकं हनूमद्बन्धनं बुद्ध्वा विषादमन्वभूत्। निशाचराः कपिं गृहीत्वाऽसामान्यपराक्रमं दशवदनमभ्यगमन्, न्यवेदयंश्च तस्मिन्नुपवनभञ्जनात्मकं रक्षोगणप्रमथनरूपं च हनूमदपराधम्। कोपकुटिलाऽऽननो दशाननोऽपि हनूमन्मूर्धकर्तनं समादिशत्। ततो विभीषणो दूतहननेऽयुक्तरूपतां प्रत्यपादयत्। दशकण्ठश्चाऽकुराठतया प्रमदावनयातुधानभञ्जकहनने दोषाऽभावसमर्थनमनेकप्रकारं वाग्व्यापारं च प्रकाशितवान्। ततोऽवोचत्पवमानतनयः—"मादृशे दूते कथं नाम तव मन्युरेवं चाऽऽहिताऽग्निप्रणते विजिगीषापराङ्मुखे धार्मिकप्रमुखे तापसे रामे कथं नाम तव कोपः? हे राक्षसराज! लोकसमृद्धये स्वकल्याणाय च परदारसमर्पणेनैव रामसुग्रीवयोः सख्यं ख्यापय। ततस्ते प्रचुराः कपियूथपाः किङ्कराः सम्पत्स्यन्ते। अत आत्मकल्याणं विमृश्याऽपि मैथिलीं मुञ्च। विराधादिवधेनाऽपि रामस्वरूपं किं त्वया नो न्यरूपी"ति।

एतादृशकपिवचननिशमनोत्तरं कोपकर्कशो राक्षसराजो रावणो निजगाद—"रे वानर! रक्षोयोधान्हतवत उद्यानशाखिनो विनाशयतस्तथाऽपि "दूतोऽस्मी"ति ब्रुवाणस्य तव किमेतद् दूतसमानमाचरणम्?" इति। इत्थमेव रामस्याऽपि दूषणगणमन्यसंसक्तवालिवध उत्कर्षाभावं, रक्षोधर्ममर्मप्रकाशनं, रक्षसां नरवानरैः साकं मैत्र्या अयुक्तरूपतां च प्रतिपाद्य स व्यरंसीत्। तदनु कपिपुङ्गवोऽवोचत्—"हे राक्षसेन्द्र! त्वद्दर्शनाऽर्थं मतिपूर्वकमेवाऽहं तरुनिशाचरनिकरनिषूदनमकार्षम्।" इत्थमेव सोऽनन्यसदृशं रामविक्रमोत्कर्षं च प्रदर्शितवान्। अखर्वगर्वोद्धता रावणोक्तीरप्येकैकशः स्वयुक्तिजालेन वातात्मजो निरास्थत्। वाक्याऽवसाने भूयोऽपि स सीतासमर्पणमनुरुरोध। रावणश्चाऽमर्षकर्कशो भूत्वा मारुतिपुच्छस्योद्दीपनं समादिदेश।

---

## दशमः सर्गः।

अथ पुच्छस्योद्दीपनादनन्तरं हनूमान् दिवमुदपतत्, लङ्कास्थान्यनेकानि यातुधानभवनानि लाङ्गूलाऽनलज्वलितानि व्यधाच्च। ततस्तत्राऽनलप्रज्वलनाद्बालललनावृद्धानप्रभृतयो लङ्कालया जना भृशमाकुलाः समभूवन्। किं बहुना, प्राणरक्षणपरायणत्वेन बहुसंख्यका राक्षसवीरा अप्यधीरतया पलायनलाघवमभ्युपजग्मुः। इत्थङ्कारं लङ्का

दाहनमर्दनादिनोन्मूल्य वीरवरः समीरकुमारो जनकनन्दिनीवन्दनाऽर्थं रामसमीपगमनायाऽनुमतिग्रहणार्थं चाऽशोकवनिकामगमत्। तत्र च भर्तृवियुक्तां निरतिशयसन्तापग्रस्तां सीतां मारुतिरपश्यत्, रामाऽन्तिकगमनाय माल्यवन्तं पर्वतं यातुं स्वकीयां वाञ्छां च न्यवेदयत्। स समवाप्य च ततोऽनुमतिं वियत्प्रत्युदपतत्। ततोऽन्ये हरयो महेन्द्रमद्रिमायास्यतस्तस्य लोकोत्तरं वेगमासाद्य "कुतस्त्योऽयमुपद्रव" इति त्रासं च समनुभूय मुहुर्मुहुर्मुहुः। मारुतिश्च त्वराऽतिशयेन समीरभास्करखगेश्वरानप्यभिभूय महेन्द्राऽचलं समवाप्य वानरनिकरैरात्मानममण्डयद् भृशमशोभत च। ततः पवमाननन्दनोऽतर्किताऽऽत्माऽऽगमनेन कृत्स्नानपि कीशान्हर्षप्रकर्षपरवशान्व्यदधात्। अथ ते समेऽपि प्लवङ्गमा मधुवनाऽभिधानं सुग्रीवकाननं यथेप्सितफलभक्षणजलपानविहरणादिभिरुपदुद्रुवुः। तदनु हनूमांस्तापसवेषाऽलङ्कृतं सलक्ष्मणं विपदां विरामं लोकाऽभिरामं रामं समवालोकयत्। ततः पतिव्रताशिरोमणेर्जानक्याः शिरोमणिं दधन्मारुती रामं प्रणतः। राजमणी रामश्च स्वमनोरथपूरकं पवनतनयं चिन्तामणिसन्निभममन्यत। ततश्च कीशवंशाऽवतंसो हनूमान्सीतादर्शनलङ्काध्वंसनादिकं सर्वमुदन्तं निवेदितवान्। अथ रामोऽनिलजनुषो लक्ष्मणश्च वालितनुजस्य पृष्ठमधिरुह्य कपीन्द्रेण सुग्रीवेणाऽन्यैः कपिभिश्च समं लङ्काऽभियानाऽर्थं सममेव प्रस्थितौ सत्वरमर्णवाऽभ्यर्णं स्थितमद्रीन्द्रं महेन्द्रं च प्रापतुः। ततस्ते महेन्द्रकुञ्जाद्दलनिकरपरिपूरितमतिपरिणाहविलसितमगाधजलं जलनिधिमव्रजन्। तत्र च मन्मथमथितचित्तं रामं दृष्ट्वा तदनुजः शुभलक्षणो लक्ष्मणः प्रबोधनाऽर्थं सक्षणोऽभवत्। ततो लक्ष्मणवचननिशमनसमनन्तरं प्राप्तप्रबोधो रामो निद्रान् रक्षाऽर्थं समन्ततः प्लवङ्गमानादिशत् प्रवालकल्पितं तल्पं चाऽधिष्ठितवान्।

---

## एकादशः सर्गः।

अथ कुमुदबान्धवेऽस्तमासेदुषि ह्रिषत्कल्पैः कमलैः प्रहासो मित्रद्वेष्यैः कुमुदैश्च विषादः समालम्बे। ततो भृगोरिव दिवः पतन्तं कृतोपकारं तमिन्दुमनु बद्धाऽनुरागस्तारागणस्तूर्णं पपात। तादृशाः सविलासाः कटाक्षा मम क्व? विलासलसितानि तानि प्रोक्तानि वा कुत्रे? ति तुलामनासाद्यैव कुमुदबान्धवो लङ्कालयललनाऽवबोधनकालेऽस्तं जगाम। ततः कलहाऽन्तरिताभिर्दोषे दृष्टेऽपि निशाऽतिक्रमविह्वलतया पत्योऽनुनीताः। वल्लभाऽऽलिङ्गितो ललनाजनः स्रस्तशरीरचेष्टो निमीलितलोचनः स्वेदजलरोमाञ्चाद्यनुमेयजीवनोऽभूत्। नवोढा वनिताऽऽलिङ्ग्यमाना शिथिलतनुर्विलोक्यमानाऽपि परिहृतलोचनवृत्तिरनूढमाना च सती प्रियाऽनुरञ्जने मुख्याऽनुरागिणी समभूतत्। ततः प्रथिताऽनुरागा रमणीयाऽरुणोदयलक्ष्मीः सखीव शशाङ्कभविप्रयोगेन विवर्णां मूर्च्छितां सीमन्तिनीमिव द्यां प्रबोधितवती। अथ विषयरसाऽतृष्णः स्त्रापुंलोकः शयननिकेतनाद् दुःखेन बहिर्निरगात्। प्रभाते तरुण्यो नृपमन्दिरेषु स्वर-

बद्धरागं मङ्गलवज्जगुः। भास्करो दुरुत्तरे पङ्क इव तिमिरे मग्नं प्रनष्टमूर्तिप्रविभागं जगद्विस्तारितरश्मिरज्जुः सन् प्रत्युज्जहारेव। समागमसमयेऽज्ञातदशनलब्धैः क्षतैर्जनोऽतिरागादविप्रयुक्तोऽप्यन्योन्यकृतं दन्तक्षताऽपराधमाशङ्कता कामाकुलो लोकः प्रणये काष्ठाऽधिरूढेऽमतिपूर्व प्रयुक्तान्यपि नखरदशनक्षतादिकर्माणि नष्टसंस्कारत्वेन नाऽस्मरत्। नीलकमललोभान्नयनयोः पतन्नलपमत्या कयाचिद् युवत्या करेण निरस्तस्तृष्णाऽऽतुरो धृष्णुर्भृङ्गोऽरुणसरसिजाऽभिसन्धिः संस्तरपाणितलेऽपि संसक्तः। अथ लङ्काऽऽलयो लोकोऽनुकूलवेशं विधाय दशकण्ठप्रबोधकाले राजभवनं गन्तुं प्रचक्रमे। शैलकूटात्प्रवृत्ता जलप्रवाहा इव पुरमन्दिरेभ्यः प्रवृत्ता जनौघा रथ्यासरितः प्रपूर्य राजाङ्गनाऽम्भोधिमपूरयन्त। नानाविधानि यानान्यारुह्य राक्षसवीरा रावणपरिचरणार्थं जग्मुः। ततो गुणनिरपेक्षो द्विजकुञ्जरनिराकरिष्णू रावणोऽभ्युदयार्थं पापाशयान्ब्रह्मराक्षसान् प्रागार्चीत्। तदनु च नित्यकृत्याऽनुष्ठानाऽनन्तरं रावणो जनत्रासकरैः सज्जनबाधकैर्मायाविभी राक्षसैरुपेतः सन् सभामण्डपं विवेश, रत्नप्रकरपरिष्कृतं हैमं सिंहासनं चाऽध्यतिष्ठत्।

इति संस्कृतकथासारः।



# हिन्दी कथासार

## सप्तम सर्ग।

तब वर्षा ऋतुका प्रादुर्भाव हुआ। वर्षा ऋतुके वायु और मेघोंने अपने अपने वैभवको प्रकाशित किया। माल्यवान् पर्वतमें रहनेवाले रामचन्द्रजीने उनको देखकर सीताजीकी स्मृतिसे असहिष्णु होकर विलाप किया और विरहको बढ़ानेवाले तत्तत्पदार्थोंको उपालम्भ ( उलहना ) भी दिया। वर्षाके बीतनेके अनन्तर रामचन्द्रजीने शरत् ऋतुके समीपमें क्रौञ्च पक्षियोंके समूहसे विस्तृत सफेद आकाशतलको देखा और लक्ष्मणजीको सम्बोधन कर तात्कालिक अनेक पदार्थोंका वर्णन भी किया। उन्होंने वर्षाके बीतनेपर भी सीताजीके अन्वेषणमें उद्यत न होनेवाले सुग्रीवकी निन्दा की और लक्ष्मणजी से कहाः—"हे लक्ष्मण! तुम जाकर सुग्रीवको कठोरतापूर्वक उपालम्भ दो" यह सुन लक्ष्मणजीने चमकनेवाले धनुको लेकर सुग्रीवके समीप जानेका उपक्रम किया। इसी बीचमें हनूमान्जी नम्रतापूर्वक लक्ष्मणजीको किष्किन्धामें ले गये। सुन्दरी स्त्रियोंसे घिरे हुए सुग्रीवने लक्ष्मणको प्रणाम करके कृतज्ञताज्ञापन करते हुए कहा—"हे प्रभो! मैं अभी सीताजीके अन्वेषणके लिए सर्वत्र जानेवाले वानरोंको भेजता हूँ" इस प्रकारसे उन्होंने उसी दिन रामदर्शनकी इच्छाको भी प्रकट किया। तब सुग्रीवने सीताजीको ढूँढ़नेके लिए प्रत्येक दिशामें बहुतसे बन्दरोंको भेजनेकी इच्छासे उनको समयके अनुसार आचरण करनेके लिए अनेक उपदेशविशेष भी

दिया, और मास पूरा होनेके पहले ही वापस आनेके लिए निर्देश भी किया। इसी तरहसे उन्होंने अङ्गद, जाम्बवान् और नीलके साथ वानरसमूहसे घिरे गये हनूमान्जी-को दक्षिण दिशामें भेजनेका अभिलाष भी किया। रामचन्द्रजीने सीताजीको ढूंढने-के लिए तत्पर वानरोंको देखकर अपने अभिलाषको पूर्णप्राय विचार किया। उन्होंने अपने अभिज्ञान ( चिह्न ) अंगूठीको सीताजीको देनेके लिए हनूमान्जीको सौंपा। हनूमान् आदि वानरोंने अपने स्वामीकी आज्ञाके पालनके लिए और रामचन्द्रजीके अभिलाषको पूर्ण करनेके लिए भी अनेक देशोंमें प्रस्थान किया। इस प्रकार उन्होंने अनेक स्थानोंमें भ्रमण किया और अपने पराक्रमको भी प्रकाशित किया। अनन्तर एक पर्वतके मध्यभागमें बैठकर उन्होंने अनेक प्रकारके पक्षियोंको और एक सुन्दरी-स्त्रीको भी देखा और उससे कुशलप्रश्न भी किया। उस सुन्दरीने भी हँसकर उनका स्वागत किया और उन्हें स्वादिष्ठ फलोंसे तथा ठण्डे जलसे भी तृप्त किया। "किसकी यह नगरी है" ऐसा वानरोंके प्रश्न करनेपर उसने कहा—"विश्वकर्मासे बनाई गई यह पुरी दानवराजकी है। वे दानवराज मर्यादाको भङ्ग करनेसे विष्णुसे मारे गये। मेरुसाव-र्णि नामके उन्हीं दानवराजकी स्वयंप्रभा नामकी मैं पुत्री हूं। अपना कार्य करनेके लिए तुम लोगोंकी बाहर जानेकी इच्छा हो तो हाथोंसे आँखोंको मूँद लो मैं तुमलोगोंको बाहर कर दूंगी"। तब उसने वानरोंको वैसा करनेपर बाहर निकाल दिया। तब पातालसे निकलकर उनलोगोंने प्रभु (सुग्रीव) से निर्दिष्ट कालको प्रायःबीता हुआ जान-कर दुःखका अनुभव किया। उनलोगोंने एक एक कर अनेक प्रकारके वितर्कोंको प्रकाशित भी किया। उनमें जाम्बवान्, अङ्गद और हनूमान्ने अनशन करनेका निश्चय किया। तब उनके पास संपाति नामके गृध्रराज भक्षणके अभिलाषसे आ गये। उन वानरोंने गृध्रके मुखमें पड़नेवाले अपनी निन्दा कर रामचन्द्रजीका कार्य कर प्राणोंको छोड़ने-वाले जटायुकी प्रशंसा की। तब गृध्रराज सम्पातिने अपने भाई जटायुका नाम सुन-कर वानरोंका परिचय पूछा। तब उन्होंने "हमलोग रामचन्द्रजीके दूत हैं" ऐसा कहकर सीताजीके अन्वेषणका प्रकार कहा तथा अन्वेषणकी अवधि समाप्तप्राय होनेसे अपनी विवशता भी बतलायी। पक्षियोंके पति सम्पातिने त्रिकूट पर्वतकी चोटीमें स्थित लङ्का नामकी रावणपुरीमें विद्यमान सीताकी सूचना की। तब वे समस्त वानर हर्षसे कोलाहल करते हुए पर्वतेन्द्र महेन्द्रको चल पड़े। वहां पहुंचकर उसके सुन्दर कुञ्जमें रहकर उन्होंने समुद्रको भी देखा। तब अङ्गद आदि वानरोंने सीताजीका पता लगानेके लिए हनूमान्जीको भेजा।



## अष्टम सर्ग।

तब हनूमान्जीने अतिशय वेगसे आकाशका अवगाहन किया। मार्गमें उन्होंने एक राक्षसीके मुखमें प्रवेश कर उदरको भेदन करके उसे मार डाला। उस बीचमें अपने

पिताके द्वारा इन्द्रसे रक्षित मैनाक नामके पर्वतको उन्होंने देखा। उन्होंने कुछ काल तक अपने यहां विश्राम करने और फल मूल खाने के लिए भी हनूमान्जीसे प्रार्थना की। हनूमान्जीने अतिशय नम्रतासे भृत्यकी तरह होकर अपने पिताजीके मित्र मैनाकसे अनुनय किया और "सीताजीके अन्वेषणमें प्रतिबन्धकी अनुचितता दरसाई और रावणकी पुरीमें पराक्रमप्रकाशनकी प्रतिज्ञा कर वहांसे सुदूर चले गये। उस अवसरपर देवताओंसे प्रेरित सुरसा नामकी नागमाता हनूमान्जीके पराक्रम और धैर्यकी परीक्षाके लिए सामने अवतीर्ण हुई। हनूमान्जी सूक्ष्मरूप लेकर उसके सौ योजनवाले मुखमें प्रवेश कर निकल गये। तदनन्तर वे सीताजीको देखनेकी इच्छासे राक्षसोंके समूहसे व्याप्त समुद्रके तीरमें अपने स्वरूपका प्रकाशन न कर चलने लगे। तदनन्तर हनूमान्जी परस्पर विरुद्ध प्रलाप करनेवाले ब्रह्मराक्षसोंसे, राक्षसोंसे और पिशाचोंसे संयुक्त, आतङ्कसे रहित लङ्कानामक राक्षसराज रावणकी पुरीको चले गये। उस समयमें पूर्व दिशामें चन्द्र उदित हुए। वायुपुत्र हनूमान्जी सीताकी कुशलप्रवृत्तिको जाननेके लिए सूक्ष्म रूपसे राक्षसगृहोंमें सञ्चरण करने लगे। अपने पराक्रमका प्रकाशन न करते हुए वे अनेक प्रकारकी सुन्दरी ललनाओंसे समलङ्कृत रावणके भवनके संमुख चले। तदनन्तर वायुकुमार रावणभवनका परिहरण करते हुए पुष्पकनामक व्योमयानके पास गये। वहांपर उन्होंने अमरावतीको जीतनेवाले, राक्षसोंके नेता कैलासके सदृश रावणको देखा। अभिमत दयिताके साथ एकान्तमें विद्यमान उसको देख वहां सीताको न पाकर दुःखित चित्तवाले हनूमान्जी इधर उधर घूमने लगे। चिन्तासे आक्रान्त चित्तवाले उन्होंने अशोकवनिकाको दूरसे देखा और अतिशय सुन्दर उस उद्यानमें वे धीरे धीरे घुस गये, और वहाँपर चारों ओर घूमने लगे। वहां हनूमान्जीको शुभशकुनके सूचक पक्षियोंने आह्लादित किया। उस समय रामप्रिया सीताने भी अनेक प्रकारके शुभनिमित्तको देखा। तदनन्तर हनूमान्जीने पतिके वियोगसे मलिन मुखवाली और हास्यसे रहित सीताजीको देखा। उसी अवसरमें सीताजीका अनुनय करनेके लिए रावण अनेक सुन्दरियोंसे घिरकर वहां आया। उसने अनेक प्रकारसे सीताजीका अनुनय किया। पतिव्रता सीताजीने ऐसी कुत्सित प्रार्थनाको उपस्थित करनेवाले उसकी तीव्र वाक्योंसे भर्त्सना की। तब दुर्दान्त रावण कोपसे आक्रान्त चित्तवाला होकर खड्ग लेकर "हे सीते ! एक महीनेके भीतर मुझे स्वीकार नहीं करोगी तो मारी जाओगी" ऐसा कहकर सीताजीको भयभीत करनेके लिए राक्षसियोंको नियुक्त कर वहाँसे निकल पड़ा। उसके बाद राक्षसियाँ रावणकी आज्ञाके अनुसार सीताजीको अतिशय कठोर वचन कहने लगीं। तब त्रिजटा नामकी राक्षसीने सीताजीका पक्ष लेकर उन राक्षसियोंकी भर्त्सना की। उत्तरकालमें सीताजीके शुभसूचक अपने स्वप्नको भी उसने कहा। उसके बाद वे सब राक्षसियां सोनेके लिए अपने अपने स्थानको

चली गयीं। अनन्तर हनूमानूजीने उपयुक्त अवसर देखकर सीताजीको आश्वासन देनेके लिए रामचन्द्रजीकी कथाका प्रस्ताव किया। सीताजीने उनपर वानररूपी राक्षस होनेकी आशङ्का की और अनेक प्रकारकी तर्कना की। हनूमानूजीने "मैं रामका भृत्य हूं" ऐसा कहकर अपना परिचय दिया और कहा भी—"माल्यवान् नामके पर्वतपर रामचन्द्रजी रहते हैं"। हनूमानूजीने रामचन्द्रजीके चिह्नके तौरपर उनकी अंगूठी सीताजीको दे दी और अपने दूतभावका भी प्रतिपादन किया। कोमल और मनोहर वाक्यसमूहसे उन्होंने सीताजीको आश्वासन दिया और रामचन्द्रजीकी उन (सीता) में असाधारण प्रणयकी सूचना कर उनसे रामके लिए प्रतिसन्देश देनेको प्रार्थना की। सीताजीने रामसे सम्मत अत्यधिक मनोहर चूडामणिको अपने अभिज्ञान (चिह्न) के रूपसे वायुपुत्र हनूमानूको सौंपा। सीताजीने रामके विषयमें अनेक प्रकारका प्रश्न कर हनूमानूजीको रुखसत दिया। तब हनूमानूजीने अपने यश-की वृद्धिका अभिलाषी होकर नन्दनवनके सदृश अशोकवनिका नामके रावणके उपवन-को तोड़ डाला।

## नवम सर्ग।

तब वृक्षोंको तोड़नेसे भयभीत होकर राक्षसियोंने रावणके समीप जाकर वानरसे किये गये वनभङ्गका निवेदन किया। रावणने भी हनूमानूजीको मारनेके लिए अस्सी हजार भृत्योंको आज्ञा दी। अनेक प्रकारके आयुधोंको लेनेवाले बहुतेरे राक्षसोंको वानरश्रेष्ठ हनूमानूजीने कुछ कालतक युद्ध कर मार डाला। तब मारे जानेसे बचे-खुचे राक्षसोंने रावणके समीप आकर हनूमानूजीके पराक्रमकी सूचना की। रावणने उनको दण्ड देनेके लिए मांस खानेसे पुष्ट शरीरवाले अपने मन्त्रियोंको भेजा। वानरश्रेष्ठ वायुनन्दनने भी सिंहनादसे दिशामुखोंको पूर्ण कर पुत्रोंके साथ उन रावण-मन्त्रियोंको मारडाला। इस प्रकारसे राक्षसोंका संहार कर हनूमानूजी फिर अशोक वाटिकाको नष्ट करनेमें तुल गये। उसके बाद रावणने वानरको मारनेके लिए अपने पुत्र अक्षकुमारको आज्ञा दी। हनूमानूजीका अक्षकुमारके साथ भयङ्कर संग्राम हुआ। युद्धसे कुछ समय बिताकर हनूमानूजीने अक्षकुमारको मार डाला और फिर भी वे रावणके उपवनको तोड़ने लगे। तब रावणने अक्षवधके वृत्तान्तको सुनकर हनूमानू-जीको मारनेके लिए इन्द्रजित्को उसके उत्कर्षको बढ़ाकर आज्ञा दी। वह भी अपने पिताके चरणोंकी वन्दना कर आशीर्वाद लेकर भवनसे निकला। तदनन्तर हनूमानू-जीने इन्द्रजित्को दारुण वचन कहकर अपने पराक्रमको प्रकाशित करनेके लिए असाधारण क्रमका अवलम्बन किया। उन दोनोंमें असामान्य संग्राम होने लगा। तब हनूमानूजीने इन्द्रजित्के रथको ढोनेवाले घोड़ोंको मार डाला। इन्द्रजित्ने अन्य घोड़ोंको लानेके लिए सारथिको आदेश दिया। अनन्तर अन्य घोड़ोंसे युक्त रथपर

आरूढ होकर इन्द्रजित्‌ने दुर्जय सैन्यव्यूहकी रचना की। तब समस्त राक्षसोंने अत्यन्त कुपित होकर हनूमान्‌जीपर बाणसमूहकी वृष्टि की। रक्ताऽक्त होकर उन्होंने शत्रु उन राक्षसोंको परिघसे मारा। मेघनादने भी ब्रह्मपाशसे हनूमान्‌जीको बाँधा। राक्षसोंसे बांधे गये हनूमान्‌जी बन्धनमोचनके लिए समर्थ होते हुए भी ब्रह्माजीके गौरवसे चलित नहीं हुए। तब हनूमान्‌जीको खानेकी इच्छा करते हुए वे राक्षस अनेक प्रकारसे दुर्वाक्य बोलने लगे। ब्रह्मपाशसे बद्ध हनूमान्‌जीको उनलोगोंने चमड़े की रस्सी और लौहश्रृङ्खला आदिसे बाँध डाला। ब्रह्मपाशके अन्य बन्धनोंको नहीं सहनेके कारण राक्षसोंसे किये गये हनूमान्‌जीके बन्धनको जानकर इन्द्रजित्‌ने विषाद-का अनुभव किया। तदनन्तर राक्षस हनूमान्‌जीको साथमें लेकर असामान्य पराक्रम-वाले रावणके संमुख गये, उन्होंने रावणको हनूमान्‌जीसे किये गये उपवनभञ्जन और राक्षसोंका संहाररूप अपराधका निवेदन किया। क्रोधसे कुटिल मुखवाले रावणने भी हनूमान्‌जीका शिर काटनेके लिए आज्ञा दी। तब विभीषणने दूतहत्याके अनौचि-त्यका प्रतिपादन किया। रावणने भी अशोकवनिकाके और राक्षसोंके ध्वंसक वानरकी हत्याका समर्थन और अन्य भी अनेक वचनोंको प्रकाशित किया। तब हनूमान्‌जीने कहा—"हे राक्षसराज! मेरे ऐसे दूतमें क्यों तुम्हें क्रोध हुआ है? अग्निहोत्रियोंमें झुकनेवाले, किसी देशको जीतनेकी इच्छा न करनेवाले, धार्मिकोंमें प्रमुख तपस्वी राममें कैसे तुम्हें कोप हुआ है? लोककी समृद्धि और अपने कल्याणके लिए भी पर-स्त्री (सीताजी) को सौंपनेसे हो—राम और सुग्रीवमें मैत्री करो। तब प्रचुर वानर-यूथपति तुम्हारे अनुचर हो जायंगे। इसलिए अपने कल्याणको देखकर भी सीताजी-को छोड़ दो। विराध आदि विक्रान्त राक्षसोंके वधसे भी रामचन्द्रजीका स्वरूप तुमने नहीं देखा?"। हनूमान्‌जीका ऐसा वचन सुननेके अनन्तर कोपकर्कश राक्षसराज रावणने कहा—"अरे बन्दर! लड़नेवाले राक्षसोंको मारनेवाले और उद्यानके वृक्षों-को विनष्ट करनेवाले और "मैं दूत हूँ" ऐसा कहनेवाले तेरा क्या यह दूतके समान आचरण है?"। इसी प्रकार वह रामचन्द्रजीके भी दोषोंको और सुग्रीवसे लड़ते हुए वालीके वधमें उत्कर्षके अभावका प्रतिपादन कर राक्षसधर्मका मर्मप्रकाशन और नर-वानरोंके साथ राक्षसोंकी मैत्रीमें अनौचित्य दिखलाकर चुप हुआ। तब हनूमान्‌जीने कहा—"हे राक्षसेन्द्र! तुमको देखनेके लिए मैंने बुद्धिपूर्वक ही वृक्षों और राक्षसोंका ध्वंस कर डाला है"। इसी तरह उन्होंने असाधारण रामपराक्रमके उत्कर्षका भी प्रदर्शन किया। अखर्व गर्वसे उद्धत रावणकी उक्तियोंको भी अपने युक्तिसमूहसे एक एककर हनूमान्‌जीने खण्डित कर डाला। वाक्यके अवसानमें उन्होंने फिर भी उससे सीतासमर्पणका अनुरोध किया। कोपसे कर्कश होकर रावणने भी हनूमान्‌जी-की पूंछको जलानेकी आज्ञा दे दी।

---

# दशम सर्ग ।

तव पूँछके जलनेके अनन्तर हनुमान्जी आकाशकी ओर उछले, और लङ्कामें विद्यमान अनेकों राक्षसोंके भवनोंको पूंछके अग्निसे उन्होंने जला डाला। तब वहाँ-पर आग लगनेसे बालक, स्त्री और वृद्ध आदि लङ्कामें रहनेवाले अतिशय आकुल हुए। अधिकसे क्या ? प्राणरक्षणमें तत्पर होनेसे बहुतेरे वीर राक्षसोंने भी अधीरतापूर्वक पलायनकी लघुताको स्वीकार कर लिया। इसप्रकार लङ्काको दाहन और मर्दन आदिसे उन्मूलित कर वीरवर वायुपुत्र हनूमान्जीने सीताजीका वन्दन करनेके लिये और रामचन्द्रजीके समीप जानेके लिए आज्ञा पानेके लिए भी अशोकवनिकामें गमन किया। वहांपर पतिसे वियुक्त और अतिशय सन्तापसे ग्रस्त सीताजीको हनूमान्ने देखा और उनसे रामके समीप जानेके लिए माल्यवान् पर्वतकी यात्राके निमित्त अपनी इच्छाका निवेदन किया। वे सीताजीसे अनुमति पाकर आकाशकी ओर उछल पड़े। तब अन्य वानर महेन्द्र पर्वतकी ओर आनेवाले हनूमान्जीके लोकोत्तर वेगका अनुभव कर "कहाँसे यह उपद्रव हो रहा है ?" ऐसा सोचकर त्राससे वारंवार मोहित होने लगे। हनूमान्जीने अतिशय वेगसे वायु, सूर्य और गरुडजीको भी अभिभूत कर महेन्द्र पर्वतको पाकर वानरसमूहोंसे अपनेको मण्डित किया और वे अतिशय शोभित भी हो गये। तब हनूमान्जीने अतर्कित अपने आगमनसे संपूर्ण वानरोंको हर्षके उत्कर्षका परवश (अधीन) बना डाला। अनन्तर वे सब वानर मधुवन नामके सुग्रीवके उपवन-में यथेष्ट फलभक्षण, जलपान, विहार आदिसे उपद्रव करने लगे। उसके अनन्तर हनूमान्जीने तपस्वीके वेशसे अलङ्कृत, लक्ष्मणसे युक्त, विपत्तिको हटानेवाले लोकमें अभिराम रामचन्द्रजीका दर्शन किया। तब पतिव्रताओंकी शिरोमणि सीताजीके शिरकी मणिको लेतेहुए हनूमान्जीने रामचन्द्रजीको प्रणाम किया। राजाओंके मणि रामचन्द्रजीने भी अपने मनोरथको पूर्ण करनेवाले वायुपुत्र हनूमान्जीको चिन्तामणिके सदृश माना। तब वानरवंशके अवतंस हनूमान्जीने सीतादर्शन और लङ्काध्वंसन आदि संपूर्ण वृत्तान्तका निवेदन किया। तदनन्तर रामचन्द्रजीने हनूमान्की और लक्ष्मणजीने अङ्गदकी पीठपर आरूढ होकर वानरराज सुग्रीव और अन्य वानरोंके साथ लङ्कामें अभियान करनेके लिए एक वार ही प्रस्थान किया और शीघ्रतासे समुद्रके समीपमें विद्यमान पर्वतेन्द्र महेन्द्रको भी प्राप्त किया। महेन्द्रकुञ्जसे रत्नसमूहसे परिपूरित अतिशय विशालतासे विलसित अगाध जलसे सम्पन्न समुद्रको वे सब पहुँच गये। वहाँपर कामदेवसे मथित चित्तवाले रामचन्द्रजीको देखकर शुभ लक्षणवाले लक्ष्मणजीने उन्हें समझाया। तब लक्ष्मणजीके वचनसे प्रबोध पाकर निद्रासे अलसायेहुए रामचन्द्रजीने रक्षाके लिए चारों ओर वानरोंको आज्ञा दी और पल्लवोंकी सेजमें लेटकर वे सो गये।



# एकादश सर्ग ।

चन्द्रमाके अस्तपर्वतको जानेपर उनके शत्रुसदृश कमलोंने हास्य ( विकास )-का और मित्रतुल्य कुमुदोंने विषादका अवलम्बन किया। अनन्तर भृगुके सदृश आकाशसे गिरते हुए उपकारक उन चन्द्रमाके पीछे प्रणय करनेवाली ताराएँ भी शीघ्र गिर पड़ीं। "वैसे विलासपूर्ण कटाक्ष और विलासशोभित वचन ही मेरे कहाँ हैं" ऐसा सोचकर उपमा न पाकर ही चन्द्रदेव लङ्काकी सुन्दरियोंके जगनेके समयमें अस्त पर्वतको चले गये। तब कलहान्तरिता नायिकाओंने दोषके देखे जाने-पर भी रातके अतिक्रमकी विह्वलतासे पतिको मना लिया। पतिसे आलिङ्गित स्त्री शिथिल शरीरचेष्टासे और मूँदी हुई आंखोंसे युक्त होकर स्वेदजल और रोमाञ्च आदिसे अनुमेय जीवनवाली हुई। नवपरिणीता वनिता पतिके आलिङ्गन करनेपर शिथिल शरीरवाली और पतिके देखनेपर भी लज्जासे नेत्रवृत्तिको अप्रकाशित करती हुई एवम् अभिमानको न करती हुई भी प्रियको अनुरञ्जित करनेमें मुख्य अनुरागिणी हो गयी। तब प्रख्यात अनुराग ( प्रेम वा लौहित्य ) वाली रमणीय अरुणोदयकी शोभाने सखीतुल्य होकर चन्द्ररूप पतिके वियोगसे विवर्ण मूर्च्छित स्त्रीके समान द्योरूप ललनाको प्रबोध दिया। अनन्तर विषयरसमें अतृप्त स्त्रियां और पुरुषोंका समूह शयनगृहसे दुःखसे बाहर निकला। प्रातःकालमें युवती स्त्रियोंने राजमन्दिरोंमें स्वरसे रागका निबन्धन करके मङ्गलपूर्ण गाना गाया। सूर्यने दुरुत्तर कीचड़के सदृश अन्धकारमें मग्न अत एव अस्पष्ट आकारविभागसे युक्त जगत्को किरणरूप रस्सीको फैलाते हुए जैसे उद्धार किया। समागमके समयमें अज्ञात दन्तोंसे लब्ध क्षतोंसे लोकने अत्यन्त रागसे विरहयुक्त न होकर भी परस्परमें किये गये दन्तक्षतके अपराधकी आशङ्का की। कामसे आकुल लोकको प्रेमके काष्ठाऽधिरूढ होनेपर जान बूझकर नहीं किये गये नखक्षत और दन्तक्षत आदि कर्म संस्कार नष्ट होनेसे विस्मृत हो गये। नील कमलों-के लोभसे अपने नेत्रोंमें पड़ते हुए, तृष्णासे आतुर, ढीठ भौंरा अल्पबुद्धिवाली किसी स्त्रीके द्वारा हाथसे हटाये जानेपर उसी (हाथ) में रक्तकमलकी भ्रान्ति होनेसे उस-( स्त्री ) के करतलमें भी संसक्त हुआ। लङ्कावासीलोग अनुकूल वेश बनाकर रावणके प्रबोधसमयमें राजभवनमें जानेके लिए उपक्रम करने लगे। पहाड़की चोटीसे प्रसृत जलप्रवाहोंके सदृश शहरके भवनोंसे प्रवृत्त जनसमुदायने मार्गरूप नदियोंको पूर्ण कर राजाके अङ्गनरूप समुद्रको भर दिया। तब अनेक प्रकारकी सवारियोंपर चढ़कर राक्षसवीर रावणकी सेवाके लिए चले गये। अनन्तर गुणोंको अपेक्षा नहीं करनेवाले और श्रेष्ठ ब्राह्मणोंका प्रत्याख्यान करनेवाले रावणने अभ्युदयके लिए पापपूर्ण अभि-प्रायवाले ब्रह्मराक्षसोंकी पहले पूजा की। तब नित्यकृत्य करनेके अनन्तर रावणने लोकको त्रस्त करनेवाले, सज्जनोंके बाधक, तथा मायावी राक्षसोंके साथ सभामण्डपमें प्रवेश किया और वह रत्नोंके समूहसे परिष्कृत सुवर्णमय सिंहासनपर आरूढ हुआ।

ॐ तत्सत् श्रीरामाऽर्पणमस्तु ॥

# श्लोकानुक्रमणिका




| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| **अ.** | | |
| अंक्लेश्यमसि | ७ | ७८ |
| अक्षारिषुः शरा | ९ | ८ |
| अक्षणोः पत | ११ | ३६ |
| अगाधत ततो | ८ | १ |
| अग्निष्टोमादि | ६ | ७९ |
| अग्न्याहितजन | ६ | १११ |
| अतीते वर्षुके | ७ | १८ |
| अथ क्रमात् | ७ | ५८ |
| अथ ददृशुः | १० | ५१ |
| अथ नयन० | १० | ७१ |
| अथ मृदु० | १० | ६९ |
| अथ लक्ष्मण | १० | ४३ |
| अथ लुलित० | १० | १४ |
| अथ स वल्क | १० | १ |
| अथानुकूलान् | ११ | ३८ |
| अथास्तमासे | ११ | १ |
| अथोपशरदे | ७ | १४ |
| अदेवीद्बन्धु० | ८ | १२२ |
| अद्य सीता मया | ८ | १०० |
| अधिगतमहि | १० | ७३ |
| अधिजलधि | १० | ६७ |
| अधि रामे | ८ | ९३ |
| अध्यासिसिष | ८ | ३८ |
| अध्यासीत् | ८ | ९७ |
| अनंसीच्चरणौ | ९ | ५१ |
| अनुजिज्ञासते | ८ | ३५ |
| अन्याऽऽसक्त | ९ | १३५ |
| अन्योन्यं स्म | ८ | ६ |
| अन्वयाऽऽदि० | ६ | १३२ |
| अपरिमित० | १० | ६२ |
| अपरीक्षित० | १० | ४१ |
| अपलापयमान | ८ | ४४ |
| अपहरद्दिव | १० | ६६ |
| अपि स्तुह्यपि० | ८ | ६२ |
| अप्रतिस्तब्ध० | ९ | ८९ |
| अभायत यथा | ८ | २ |
| अभावे भवताम् | ७ | ७७ |
| अभिज्ञानं | ७ | ९० |
| अभिद्योतिष्यते | ८ | ८९ |
| अभिन्यविक्ष | ८ | ८० |
| अभि…जानन् | ९ | १२१ |
| अभि…प्रोक्तम् | ९ | १२० |
| अभियाता | १० | २० |
| अभियाऽता | १० | २१ |
| अभिष्यन्तः | ९ | ७१ |
| अभीषयन्त | ८ | ४२ |
| अमर्षितमिव | ७ | १०४ |
| अमृक्षित्वा | ७ | ९६ |
| अयं मैथिल्यभि | ८ | ११८ |
| अरासिषुः | ९ | ११ |
| अर्द्धोत्थिता० | ११ | १८ |
| अवग्राहे | ७ | ४८ |
| अवसन्नरुचि | १० | ३४ |
| अवसितं हसि | १० | ६ |
| अवादीत्तिष्ठते | ६ | ९ |
| अवाद्वायुः | ८ | ६१ |
| अवीततृष्णो | ११ | १७ |
| अव्यग्रमुप० | ८ | १४ |
| अव्यर्णो गिरि० | ९ | १६ |
| अशनिरयम् | १० | ६८ |
| अशास जिह्वा | ८ | ७४ |
| असद्बन्धु० | ६ | १३६ |
| असंप्राप्ते | ८ | ११२ |
| असौ दधद् | ८ | १२६ |
| अस्यन्दक्षिन्दु० | ८ | ६६ |
| अस्यपरुष्करान् | ९ | ६५ |
| अह स्वप्नक् | ७ | २५ |
| अह्न धने | १० | ३७ |
| आज्ञां कारय | ८ | ८४ |
| आत्मनः परि० | ७ | ८६ |
| आत्मानमपजा | ८ | २६ |
| आत्रिकूटम् | ६ | १२९ |
| आदरेण गम | ७ | ५६ |
| आबद्धनेत्रा० | ११ | ३२ |
| आरामदर्शनात् | ८ | ८८ |
| आलिङ्गिताया | ११ | १३ |
| आलोचयन्तो | ७ | ४० |
| आवरीतुमिवा० | ९ | २४ |
| आशुश्रुवन् | ८ | ६६ |
| आश्वसीदिव | ९ | ५६ |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| आश्वस्याऽश्वः | ९ | ३४ |
| आस्व साकंम् | ८ | ७९ |
| आहूय रावणः | ९ | ४६ |
| इ. | | |
| इच्छ स्नेहेन | ८ | ७८ |
| इतरो रावणा | ८ | १०६ |
| इति चिन्ताव | ८ | ११० |
| इन्दुं चषक० | ८ | ३६ |
| ई. | | |
| ईर्ष्याविरुग्णाः | ११ | ५ |
| ईश्वरस्य | ८ | ११९ |
| ईषदाढ्यङ्करो | ७ | ८४ |
| उ. | | |
| उच्चैरक्षित | ९ | ४० |
| उच्छ्रायवान् | ७ | ४७ |
| उत्तराहि | ८ | १०७ |
| उदक् शत० | ७ | ५१ |
| उदपतद्वियत् | १० | १८ |
| उन्नयानधि० | ७ | ३७ |
| उपशूरम् | ८ | ८७ |
| उपारंसीच्च | ८ | ५४ |
| उपास्थिषत् | ९ | ९५ |
| उपेक्षिता देव | ११ | ४३ |
| उवाच मारुतिः | ७ | ७६ |
| ऊ. | | |
| ऊचे संवरिषी | ९ | २७ |
| ऋ. | | |
| ऋणाद्बद्ध इव | ८ | १०३ |
| ऋद्धिमान् | १० | ३८ |
| ए. | | |
| एकेन बहवः | ६ | १९ |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| एको द्वाभ्याम् | ६ | १२४ |
| एता दैवासुरो | ७ | ९ |
| एष शोकच्छिद् | ७ | २७ |
| एष्टारमेषिता | ९ | ३१ |
| ऐ. | | |
| ऐक्षिप्रवदमानैः | ८ | ३० |
| क. | | |
| कः कृत्वा राव | ९ | १०९ |
| कच्चिन्नोपावधि | ८ | २८ |
| कपितोयनिधी | १० | २८ |
| कपिनाऽऽम्भो | ९ | ६ |
| कपिपृष्ठगतौ | १० | ४४ |
| कपिर्जगाद | ९ | १२८ |
| कपिश्चङ्क्रमणो | ७ | १६ |
| कन्त्राभिरावृतः | ७ | २४ |
| करपुटनिहितं | १० | ३२ |
| कर्तास्मि कार्यम् | ७ | ३२ |
| कान्ता सहमा | १० | १६ |
| कान्तिं स्वाम् | ८ | ४९ |
| कार्यं सारनिभं | ७ | ३३ |
| कुतोऽधियास्य | ८ | ९० |
| कुमुदवन० | १० | ६३ |
| कुर्याद्योगिनम् | ७ | १० |
| कुर्वन्ति परिसा | ७ | ७ |
| कुर्वन्तो हवम् | ७ | ६१ |
| कुलभार्याम् | ८ | १९ |
| कृते नोपकृतम् | ८ | ८ |
| कृत्वा कर्म | ८ | १२७ |
| कृषीढवं भर्तुरा | ६ | ७७ |
| केन संविद्रते | ८ | १७ |
| केनापि दौष्कुले | ७ | ८८ |
| कोपात्काश्चित् | ८ | ३३ |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| क्व ते कटाक्षाः | ११ | २ |
| क्षणं भद्रावति | ८ | ११ |
| क्षतैरसंचेतित | ११ | २५ |
| क्षितिकुल० | १० | ६० |
| ख. | | |
| खं पराजयमानो | ८ | ६ |
| खरादिनिधनं | ६ | ११७ |
| ग. | | |
| गच्छन्स वारी | १० | २३ |
| गतमङ्कुलिषङ्गं | ६ | ७८ |
| गतासु तासु | ८ | १०२ |
| गते तस्मिन्नुपा | ९ | ५२ |
| गते तस्मिन् स० | ८ | ६७ |
| गतेऽतिभूमिं | ११ | २९ |
| गरुडानिल० | १० | २५ |
| गिरिपरिगत० | १० | ६१ |
| गुरुर्दधाना | ११ | १५ |
| गुरूरुचञ्चत् | ११ | ४१ |
| गृहमानः | ८ | ४५ |
| ग्रहमणिरसनं | १० | ४८ |
| घ. | | |
| घनगिरीन्द्र० | १० | १९ |
| च. | | |
| चकाराधस्पदं | ९ | ६६ |
| चचूंषि कान्ता | ११ | २४ |
| चतुष्काष्ठम् | ६ | ६२ |
| चलपिङ्गल० | १० | २७ |
| चित्रं चित्रम् | १० | २२ |
| चिन्तयन्निमर्थं | ८ | ५६ |
| चिन्तावन्तः | ७ | ७२ |
| चिरेणाऽनुगुण्यं | ८ | ९५ |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| ज. | | |
| जगाद वानरान् | ७ | ९१ |
| जटायुः पुण्यकृत् | ७ | ८१ |
| जरित्वेव | ९ | ४१ |
| जलद इव | ११ | ४७ |
| जलनिधिमग | १० | ५२ |
| जले विक्रम० | ८ | २४ |
| जलपाकीभिः | ७ | १९ |
| जल्पितोत्कृष्ट० | ८ | २९ |
| जूतिमिच्छथ | ७ | ६९ |
| ज्योतिष्कुर्वन् | ९ | ६४ |
| ज्योत्स्नाऽमृतम् | ८ | ६२ |
| त. | | |
| तं जागरूकः | ७ | २३ |
| ततः कपिसमा | ७ | ३४ |
| ततः कपीनाम् | ७ | ३० |
| ततः कर्ता | ७ | १ |
| ततः क्रोधानिल | ९ | ११८ |
| ततः खड्गं समु | ८ | ९४ |
| ततः प्राकारम् | ८ | ५६ |
| ततः प्रास्थिष | ७ | १०२ |
| ततः समाशङ्कि | ११ | ६ |
| ततः ससंमदा | ७ | ५९ |
| ततो जलधि | ७ | ६७ |
| ततो मन्दगतः | ७ | ७९ |
| ततोऽशीति | ६ | ३ |
| तं दृष्ट्वाचिन्तय | ८ | १०४ |
| तमः प्रसुप्तम् | ११ | १० |
| तर्पणं प्रजनि | ७ | २ |
| तत्रोपशायिका | ८ | १२३ |
| तस्मिन् कैलास | ८ | ९१ |
| तस्मिन्नन्तर्घणे | ७ | ६२ |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| तस्मिन्वदति | ८ | ११३ |
| तस्याधिवासे | १० | ३६ |
| तस्यै स्पृहय | ८ | ७९ |
| तान् दृष्ट्वाति० | ६ | १८ |
| तान् विलोक्य | ७ | ४ |
| तांश्चेतव्यान् | ९ | १३ |
| तां पराजय | ८ | ७१ |
| तां प्राविशत् | ८ | ६० |
| तालेन संपा | ११ | १९ |
| तास्तया तर्जिताः | ८ | १०१ |
| ता हनूमान् | ८ | ९० |
| तीव्रमुत्तपमानो | ८ | १५ |
| तृणाय मत्वा | ८ | ९९ |
| ते विज्ञायाऽमि | ६ | ६० |
| तेषां निहन्य | ९ | ७१ |
| त्रिंशत्तमम् | ७ | ८९ |
| त्वं ससर्जिथ | ९ | ४८ |
| त्वयि नस्तिष्ठते | ८ | १२ |
| द. | | |
| दण्डकां दक्षिणेन | ८ | १०८ |
| दध्वान मेघवत् | ९ | ९ |
| दन्तच्छदे | ११ | ३३ |
| दमितारिः | ६ | २० |
| दमित्वाप्यरि० | ६ | ४२ |
| दर्शनीयतमाः | ८ | ११६ |
| दिशो द्योतय | ८ | ४६ |
| दुरुत्तरे | ११ | २० |
| दुष्पानः पुनरे | ९ | १०८ |
| दूतमेकम् | ६ | ११० |
| दूरं समारुह्य | ११ | २ |
| दृष्ट्वा तामभनक् | ९ | ८८ |
| दृष्ट्वा दयितया | ८ | ५५ |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| दृष्ट्वा राघवकांता | ८ | ५८ |
| दृष्ट्वा सुषुप्तम् | ९ | ८२ |
| देहप्रश्नन० | ७ | ८० |
| द्यामिवाह्वयमा | ८ | १८ |
| द्युतित्वा शशिना | ७ | १०७ |
| द्रष्टुं प्रक्रममा | ८ | २५ |
| द्रुतं संस्वरिषी | ९ | २८ |
| द्रुतं द्रुतम् | १० | ११ |
| द्रुमभङ्गध्वनि० | ९ | १ |
| द्विष्कुर्वताम् | ९ | ६३ |
| ध. | | |
| धनुष्पाशभृतः | ९ | ६० |
| धर्मं प्रत्यर्पयन् | ९ | ११५ |
| न. | | |
| नगजानगजा | १० | ९ |
| न च काञ्चन | १० | ५ |
| न प्राणिषि | ९ | ९७ |
| न भवति | १० | ६३ |
| न भवाननु० | ८ | ८६ |
| नरकस्यावतारो | ७ | ८२ |
| न वानरैः | १० | १० |
| नश्यन्ति ददर्श | १० | १२ |
| न सर्वरात्र | ९ | ११२ |
| नायमुद्विजितुम् | ७ | ९२ |
| नारीणामप० | १० | १३ |
| नाविविदिषुम् | ७ | ९९ |
| नावैस्याप्यायि | ७ | १७ |
| नासां मातृष्वसे | ९ | ८० |
| निकुञ्जे तस्य | ७ | १०३ |
| निकृत्तमत्त० | ११ | ४२ |
| निखिलाभवन् | १० | ३ |
| निघानिघ० | ७ | ६५ |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| निजघाना० | ९ | १२६ |
| नित्यमुद्यच्छमा | ८ | ४७ |
| निन्दको रजनि | ७ | १३ |
| निरवत्स्यंश्च | ८ | ६६ |
| निराकरिष्णवो | ७ | ३ |
| निराकरिष्णुः | ११ | ४४ |
| निर्वर्णं कृतम् | ६ | ९४ |
| निष्कोषितव्यान् | ६ | ३० |
| निष्क्रम्यशिक्षया | ७ | ७१ |
| निहतश्च | ७ | ६८ |
| नीवारफल० | ७ | ४६ |
| नेत्रेषुभिः | ११ | २० |
| न्यावधत | ८ | ७ |
| न्याय्यं यदत्र | ७ | ४१ |
| **प.** | | |
| पक्कबालस्त्रियो | ९ | १२० |
| पतिवध | १० | ७२ |
| पयोधरांश्चन्दन | ११ | २७ |
| परस्त्रीभोग० | ९ | १२२ |
| परिखेदित० | १० | २९ |
| परिभावम् | ७ | ५४ |
| परिशेषं न | ८ | ३१ |
| परीक्षितुमुपा० | ८ | ३३ |
| पवितोऽनु | ९ | ३९ |
| पारं जिगमिषन् | ९ | ४३ |
| पिप्रायाद्रि० | ७ | ६४ |
| पिशिताशिनां | १० | ८ |
| पीतौष्ठरागाणि | ११ | २१ |
| पीने भटस्यो० | ११ | ८ |
| पुंसा भयद्वेण | ९ | १२७ |
| पुरःप्रवेशम् | ८ | १२४ |
| पुरुहूतद्विषो | ९ | ३७ |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| पूतं शीतैः | ७ | १०५ |
| पूर्वस्मादन्यवद् | ८ | १०५ |
| पृथङ्गनमस्वतः | ८ | १०९ |
| पृथुगुरुमणि० | १० | ५३ |
| प्रग्राहैरिव | ७ | ४४ |
| प्रचपलमगुरुम् | १० | ४९ |
| प्रजागरातास्र | ११ | २२ |
| प्रणश्यन्नपि | ६ | १३४ |
| प्रणिशाम्य | ६ | १०० |
| प्रण्यगादीत् | ९ | ९९ |
| प्रतुष्टूषुः पुनः | ९ | ६९ |
| प्रदरश्रुरुह० | १० | ५६ |
| प्रबोधकालात् | ११ | ४० |
| प्रमेदिताः | ६ | १७ |
| प्रलापिनो० | ७ | १२ |
| प्रवपाणि शिरो | ६ | ९८ |
| प्रवहन्तं सदा० | ८ | ९२ |
| प्रस्कन्दिकाम् | ७ | ७४ |
| प्रहीणजीवितम् | ९ | १०४ |
| प्राघानिषत | ६ | १०२ |
| प्राचीं तावद्भिः | ७ | ५२ |
| प्राणयन्तमरिं | ६ | १०१ |
| प्रातस्तरां | ११ | ३१ |
| प्रादमयन्त | ८ | ६३ |
| प्रादिद्वृत | ८ | ३४ |
| प्रादुःषन्ति | ९ | ८१ |
| प्रायुङ्क राक्षसीः | ८ | ३६ |
| प्रायोपासनया | ७ | ७३ |
| प्रीतोऽहं भोज | ८ | ८३ |
| **फ.** | | |
| फलान्याहरस्व | ८ | १० |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| **ब.** | | |
| बभूव थाःखि | ७ | ९५ |
| बभौ मरुत्वान् | १० | १९ |
| बलान्यभि | ६ | ५० |
| बहुधा भिन्न | ९ | ३१ |
| बुभुत्सवो द्रुतं | ७ | १०० |
| बाढव्यं किमिव | १० | ७४ |
| बृहद्द्रूर० | ६ | १२३ |
| **भ.** | | |
| भयसंहृष्ट० | ६ | २२ |
| भवत्याशुत्सुको | ८ | ११७ |
| भुवनभर० | १० | ५५ |
| भूयास्त धिष्णुं | ६ | ३३ |
| भृतनिखिल० | १० | ५८ |
| भ्रमी कदम्ब० | ७ | ९ |
| भ्रमुः शिलो० | ७ | ९९ |
| **म.** | | |
| मधुकरविरुतैः | १० | ४७ |
| मधुमास्रुत० | ९ | ८३ |
| मध्वपाययत | ८ | ४१ |
| मन्दायमान० | ८ | ६९ |
| मन्त्रियोगात् | ६ | १२९ |
| मांसोपभोग० | ६ | १६ |
| मा न साक्षीः | ६ | ९० |
| मानेन तल्पेषु | ११ | ५ |
| मायानामीश्वराः | ९ | १२ |
| मायाभिःसुचिरं | ९ | ३८ |
| मायाविभिः | ११ | ३५ |
| मात्रमंस्थाः | ८ | ८१ |
| मितमवदत् | १० | १७ |
| मुंपाथा धनदं | ७ | ३७ |
| मुष्णन्तामिव | ६ | ३१ |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| मृदुभिरपि | १० | ६४ |
| मेघनादः | ९ | ७५ |
| म्रियामहे | ७ | ९० |
| **य.** | | |
| यः पयो दोग्धि | ८ | ८२ |
| यत्नं प्रोर्णवितुं | ७ | ९३ |
| यत्स्वधर्मम् | ९ | १११ |
| यथास्वं संगिरंते | ८ | ३१ |
| यदताप्सीच्छनैः | ९ | २ |
| यथाकल्प्यत् | ९ | ४४ |
| यथार्थ स्वम् | ९ | ४५ |
| यद्युर्विन्ध्यम् | ७ | ५३ |
| यस्यां वासयते | ८ | ६४ |
| यां कारि राज | ७ | ५५ |
| यात यूयम् | ७ | ३६ |
| यानैः समचरंत | ८ | ४२ |
| युष्मानचेतन् | १० | ३६ |
| ये सूर्यमुप० | ८ | १३ |
| योऽपचक्रे | ८ | २० |
| **र.** | | |
| रक्षणं करोषि | ७ | ६६ |
| रघुतनयम् | १० | ३१ |
| रणपण्डितो | १० | २ |
| राक्षसानां मयि | ८ | १२८ |
| राक्षसेन्द्रस्य | ८ | १२१ |
| राघवस्य ततः | ७ | २८ |
| राघवाभ्यां | ८ | १३० |
| रामस्य दयमानः | ८ | ११९ |
| रामस्य शायितं | ८ | १२५ |
| रामादधीत० | ८ | ७१ |
| रावणस्येह | ८ | १२० |
| रावणाय नम० | ८ | ९८ |
| रुचिरोन्नत० | १० | ३३ |
| रोचमानः | ८ | ७३ |
| रोदिति स्मेव | ९ | ९९ |
| रोपभीम० | ९ | १०९ |
| **ल.** | | |
| लङ्कां नाम्ना | ७ | ९४ |
| लाङ्गूलमुद्धनम् | ९ | ७ |
| लोकानशिशिपोः | ९ | ९४ |
| **व.** | | |
| वक्षःस्तनाभ्यां | ११ | ११ |
| वचनं रक्षसाम् | ८ | ८९ |
| वञ्चिवापि | ७ | १०६ |
| वणिक्प्रग्राह० | ७ | ४१ |
| वनान्तप्रेक्षणः | ९ | १०६ |
| वयमद्यैव | ७ | २९ |
| वरिपीष्ट | ९ | २९ |
| वनिष्यमाणम् | ८ | ६३ |
| वल्गैरनत्युल्बण० | ११ | ३० |
| वानरः कुल | ९ | ९३ |
| वानरप्रगुणनवि | ९ | ३६ |
| वानरेषु कपिः | ८ | ११४ |
| विकर्षी याचते | ७ | ११ |
| विकुर्वे नगरे | ८ | २१ |
| विगाढारं | ९ | ३३ |
| विटपिमृग० | १० | ३० |
| विदित्वा शक्तिं | ७ | ९८ |
| विद्युत्प्राशम् | ७ | २६ |
| विद्रुममणि० | १० | ४७ |
| विधूननिशित | ११ | ४६ |
| विनेष्ये क्रोधम् | ८ | २२ |
| विप्रकृष्टम् | ८ | १११ |
| वियति व्यस्य० | ८ | ३ |
| विराधताडका० | ९ | ११९ |
| विराधं तपस्वी | ९ | १३३ |
| विलुलितपुष्प० | ८ | १३१ |
| विलोक्य द्योतनं | ७ | १५ |
| विलोक्य सलिल० | ७ | १०८ |
| विलोचनाम्बु | ९ | ८७ |
| विलोलतां | ११ | १७ |
| विषधरनिलये | १० | ४६ |
| विषसादेन्द्रजित् | ९ | ११ |
| विषण्णा राक्षसाः | ९ | ७३ |
| विष्यन्दमान० | ९ | ५४ |
| विस्फुलिङ्गः | ९ | ७६ |
| वीनामुपसरम् | ७ | ६० |
| वृणाद्वृणम् | ८ | ७० |
| वृतौ प्रकाशम् | ११ | ७ |
| वेदिक्षस० | ७ | ४५ |
| वेश्मान्तर्हणनं | ९ | १०३ |
| वैदेहीं दृष्टवान् | ८ | १२८ |
| व्यतिघ्नतीम् | ८ | ५ |
| व्यतिजिघ्ने | ८ | ४ |
| व्यरमत्प्रधनात् | ८ | ४३ |
| व्रज्यावती | ७ | ७० |
| व्रणकन्दर | १० | २६ |
| व्रणैरवमिषू० | ९ | १० |
| **श.** | | |
| शक्त्यृष्टिपरिघ | ९ | ४ |
| शाखाभिर्वत्र० | ७ | ८७ |
| शतसाहस्रम् | ८ | ३७ |
| शरणमिव | १० | ७० |

| श्लोकः | सर्गः | श्लोकाङ्कः |
|---|---|---|
| शशाङ्कनाथा० | ११ | १६ |
| शशिरहितमपि | १० | ५६ |
| शस्त्रैर्दिदेविषुं | ९ | ३२ |
| शृण्वद्भ्यः प्रति | ८ | ७७ |
| शैलेन्द्रशृङ्गेभ्य | ११ | २९ |
| शैले विश्रयिणं | ७ | २० |
| **स.** | | |
| संयुयूषुम् | ९ | ३५ |
| संवुवूर्षुः | ६ | २६ |
| संशृणुष्व | ८ | १६ |
| संसर्गी परिदाही | ७ | ८ |
| संसिस्मयिषमा | ६ | ४३ |
| संस्तावमिव | ७ | ३९ |
| स गिरिं तरु० | १० | २४ |
| संक्रुध्यसि | ८ | ७६ |
| संघगुवानः | ८ | ४० |
| संगच्छ राम० | ६ | ११३ |
| संग्रामे तान् | ९ | ७२ |
| संघर्षयोगिणः | ९ | ९७ |
| स च विह्वल० | १० | ४२ |
| स जलाम्भोद० | ७ | ३९ |
| संचेरुः सहसा | ७ | ५७ |
| संजानानान् | ८ | २७ |
| संजुघुक्षवः | ९ | १४ |
| संज्वारिणेव | ७ | ६ |
| स त्वं हनिष्यन् | ९ | ४९ |
| सदोद्गार० | ७ | १८ |
| समगध्वम् | ७ | १०१ |
| समगाध्वम् | ७ | १०१ |
| समतां शशि० | १० | ४० |
| समिद्धशरणा | १० | ७ |
| समुपचितजलं | १० | ४४ |
| सम्प्राप्य वानरान् | ७ | ८५ |
| सम्मृष्टसिक्ता० | ११ | ३५ |
| सरसां सरसां | १० | ४ |
| सर्वनारीगुणैः | ९ | ८४ |
| ससैन्यश्छादयन् | ९ | ५८ |
| सांराविणम् | ७ | ४३ |
| सामर्थ्यसंपा | १० | ३ |
| सामोन्मुखेन | ११ | १४ |
| सोम्नैव लोके | ११ | ३२ |
| सा स्तम्बघ्न० | ७ | ६३ |
| सीतान्तिके | ८ | ६७ |
| सीतां दिदृक्षुः | ८ | ४३ |
| सीतारक्षो० | ७ | ४२ |
| सुखावगाहानि | ११ | ३४ |
| सुग्रीवान्तिकम् | ७ | ३१ |
| सुप्रतिष्णात० | ९ | ८३ |
| सुरापाणपरि | ६ | ६६ |
| सुषाम्णीं सर्व० | ६ | ८५ |
| सुषुपुस्ते | ९ | ६८ |
| सुहृद्भिः राम० | ६ | ११४ |
| सूमरोऽभ्रङ्कुर० | ७ | २२ |
| सौमित्रेरति | १० | ७८ |
| स्थितमिव | १० | ४९ |
| स्पृहयालुम् | ७ | २१ |
| स्फटिकमणि | १० | ५० |
| स्फुटपरुषम् | ६ | १३७ |
| स्मरातुरे चेतसि | ११ | २८ |
| स्रस्ताङ्गचेष्टो | ११ | ९ |
| स्रस्ताङ्गयष्टिः | ११ | १२ |
| स्वं कर्म कारयन् | ८ | ४८ |
| स्वां जिज्ञापयिषू | ६ | ३७ |
| स्वामिनो निष्क्रयं | ९ | ६१ |
| **ह.** | | |
| हतराक्षस० | ९ | ११३ |
| हते तस्मिन् | ९ | ४८ |
| हत्वा रक्षांसि | ६ | २३ |
| हरेः प्रगमनम् | ६ | १०७ |
| हृद्योदक० | ७ | ८३ |


—ooo—

प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-पुस्तकालय,

बनारस—१

# भट्टिकाव्यम्

## सप्तमः सर्गः

इतस्तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु विधीयमानः कृद्विक्रियते—

**ततः कर्ता वनाऽऽकम्पं ववौ वर्षाप्रभञ्जनः ।**
**नभः पूरयितारश्च समुन्नेमुः पयोधराः ॥ १ ॥**

**अन्वयः**—ततः वनाऽऽकम्पं कर्ता वर्षाप्रभञ्जनो ववौ, नभः पूरयितारः पयोधराश्च समुन्नेमुः ।

**व्याख्या**—ततः = सुग्रीवस्य किष्किन्धाप्रवेशाऽनन्तरं, वनाकम्पं = काननाकम्पं, कर्ता = साधु कुर्वन्, वर्षाप्रभञ्जनः = प्रावृड्वातः, ववौ=वाति स्म । नभः = आकाशं, पूरयितारः = साधु पूरयन्तः, पयोधराश्च = मेघाश्च, समुन्नेमुः = समुन्नताः ।

॥व्युत्पत्तिः॥ वनाकम्पम्—आ समन्तात् कम्प आकम्पः,"कुगतिप्रादय" इति समासः,वनस्याकम्पस्तं, "कर्ते"ति पदेन योगे "कर्तृकर्मणोः कृति" इति सूत्रेण प्राप्तायाः कर्मणि षष्ठ्याः "न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति निषेधः । कर्ता—साधु करोतीति, "तृन्" इति तृन् । वर्षाप्रभञ्जनः—वर्षासु प्रभञ्जनः, "नभस्वद्वातपवनपवमानप्रभञ्जनाः ।" इत्यमरः । ववौ—"वा गतिगन्धनयोः" इति धातोर्लिट् । नभः—अत्राऽपि "पूरयितार" इति पदेन योगे प्राप्तायाः कर्मणि षष्ठ्या निषेधः । पूरयितारः—साधु पूरयन्तीति, तृन्प्रत्ययः । समुन्नेमुः—"णमु प्रह्वत्वे शब्दे" इति धातोर्लिट् ।

भाषाऽर्थः—किष्किन्धामें सुग्रीवके प्रवेश करनेके अनन्तर वनको अतिशय कम्पित करनेवाला वर्षा ऋतुका वायु वहने लगा और आकाशको व्याप्त करनेवाले मेघ भी उन्नत होने ( बढ़ने ) लगे ॥ १ ॥

**तर्पणं प्रजनिष्णूनां शस्यानाममलं पयः ॥**
**रोचिष्णवः सविस्फूर्जा मुमुचुर्भिन्नवद् घनाः ॥२॥**

**अन्वयः**—रोचिष्णवः सविस्फूर्जा घनाः प्रजनिष्णूनां शस्यानां तर्पणम् अमलं पयो भिन्नवत् मुमुचुः ।

**व्याख्या**—रोचिष्णवः = साधु दीप्यमानाः सविस्फूर्जाः = वज्रनिर्घोषसहिताः,

घनाः = मेघाः, प्रजनिष्णूनां = साधु प्रादुर्भवतां, शस्यानां = वृक्षादिफलानां, तर्पणं = तृप्तिकारकम्, अमलं = निर्मलं, पयः = जलं, भिन्नवत् = भिन्ना इव, मुमुचुः = तत्यजुः ।

※व्युत्पत्तिः※ रोचिष्णवः—साधु रोचन्त इति, "रुच दीप्तावभिप्रीतौ चे"ति धातोः "अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्" इति इष्णुच् प्रत्ययः। "विभ्राड् भ्राजिष्णुरोचिष्णू" इत्यमरः। सविस्फूर्जाः—विस्फूर्जन सहिताः, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति वैकल्पिकः सहशब्दस्य सभावः। प्रजनिष्णूनां–साधु प्रजायन्त इति प्रजनिष्णवस्तेषाम्,"जनी प्रादुर्भावे" इति धातोः पूर्वसूत्रेण इष्णुच्। शस्यानां–"वृक्षादीनां फलं शस्यम्" इत्यमरः। कर्मणि षष्ठी। तर्पणं—तर्पयतीति "तृप तृप्तौ" इत्यस्माद्धातोः "कृत्यल्युटो बहुलम्" इति बहुलग्रहणसामर्थ्यात् कर्तरि ल्युट्। अमलम्—अविद्यमानं मलं यस्मिंस्तत्, तत्, "नञोस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति नञ्बहुव्रीहिः। भिन्नवत्—भिन्नैस्तुल्यं,"मुमुचुः" इति क्रियापदेन योगे "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययः।

※भाषाऽर्थः※ समीचीन प्रकारसे प्रकाशमान और वज्रध्वनिसे युक्त मेघोंने अच्छी तरहसे प्रादुर्भूत होनेवाले शस्योंके तृप्तिकारक निर्मल जलको भिन्नकी तरह छोड़ा ॥२॥

**निराकरिष्णवो भानुं दिवं वर्तिष्णवोऽभितः ॥**
**अलंकरिष्णवो भान्तस्तडित्वन्तश्चरिष्णवः ॥ ३ ॥**

**अन्वयः** = भानुं निराकरिष्णवो दिवम् अभितो वर्तिष्णवः तडित्वन्तः भान्तः अलङ्करिष्णवः चरिष्णवः ( घनाः पयो मुमुचुः इति पूर्वश्लोकेन सम्बन्धः )।

**व्याख्या**—भानुं = सूर्यं, निराकरिष्णवः = निराकरणशीलाः, दिवम् अभितः = आकाशस्योभयत्र, पूर्वपश्चिमयोरिति भावः। वर्तिष्णवः = वर्तनस्वभावाः, तडित्वन्तः = विद्युत्सहिताः, अतएव—भान्तः = दीप्यमानाः, एवं च कृत्वा—अलङ्करिष्णवः = अलङ्करणशीला इव, चरिष्णवः = दिक्सञ्चरणशीलाः ( घनाः = मेघाः, भिन्नवत् = भिन्ना इव, पयः = जलं, मुमुचुः = तत्यजुः )।

※व्युत्पत्तिः※ निराकरिष्णवः—"अलङ्कृञि"त्यादिना इष्णुच्, एवं परत्राऽपि। "निराकरिष्णुः क्षिप्नुः स्यात्"इत्यमरः। दिवम्–"अभितः"इति पदेन योगे "अभितः–परितःसमयानिकषाहाप्रतियोगेऽपि" इति द्वितीया। अभितः–"पर्यभिभ्यां च" इति सूत्रेण "सर्वोभयाऽर्थाभ्यामेव" इति वार्तिकाऽनुसारमुभयाऽर्थे तसिल्। तडित्वन्तः—तडितः सन्त्येषु इति, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप्, "झयः" इति मस्य वः।

※भाषाऽर्थः※ सूर्यको हटानेवाले, आकाशके दोनों ओर रहनेवाले, बिजलीसे

युक्त, अतएव प्रकाशमान, इस प्रकार अलङ्करणशीलके सदृश भ्रमणशील मेघोंने जल छोड़ा ॥ ३ ॥

**तान् विलोक्याऽसहिष्णुः सन् विललापोन्मदिष्णुवत् ।**
**वसन् माल्यवति ग्लास्नू रामो जिष्णुरधृष्णुवत् ॥ ४ ॥**

**अन्वयः**—तान् विलोक्य माल्यवति वसन् जिष्णुः रामः असहिष्णुः ग्लास्नुः सन् उन्मदिष्णुवत् अधृष्णुवत् विललाप ।

**व्याख्या**—तान् = पूर्वोक्तान्, घनानित्यर्थः, विलोक्य = दृष्ट्वा, माल्यवति = माल्यवन्नामके पर्वते, वसन् = निवासं कुर्वन्, जिष्णुः = जयशीलः, रामः = रामचन्द्रः, असहिष्णुः = असहनशीलः, ग्लास्नुः = ग्लानशीलः, सन् = भवन्, उन्मदिष्णुवत् = उन्मदनशीलवत्, उन्मत्तवदित्यर्थः । अधृष्णुवत् (च) = अप्रगल्भ इव च, शोकाऽभिभूतत्वादिति भावः । विललाप = परिदेवयामास ।

**व्युत्पत्तिः** वसन्—"विललापे"ति तिङ्वाच्यक्रियायाः प्राधान्यात् "धातुसम्बन्धे प्रत्ययाः" इति भूते लट्, तत्स्थाने शत्रादेशः । जिष्णुः, ग्लास्नुः—"ग्लाजिस्थश्च स्नुः" इति स्नुः । उन्मदिष्णुवत् = उन्मदिष्णुना तुल्यम्, वतिप्रत्ययः । "सोन्मादस्तून्मदिष्णुः स्यात्" इत्यमरः । अधृष्णुवत्—धर्षणशीलो धृष्णुः, "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुः, न धृष्णुः अधृष्णुस्तेन तुल्यम्, वतिप्रत्ययः ।

**भाषाऽर्थः** उन (मेघों) को देखकर माल्यवान् पर्वतपर रहनेवाले जयशील राम, असहनशील और ग्लानियुक्त स्वभाववाले होकर उन्मत्त और अप्रगल्भकी तरह विलाप करने लगे ॥ ४ ॥

**भ्रमी कदम्बसंभिन्नः पवनः शमिनामपि ॥**
**क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः ॥ ५ ॥**

**अन्वयः**—भ्रमी कदम्बसम्भिन्नः मेघशीकरशीतलः पवनः शमिनाम् अपि क्लमित्वं कुरुते ।

**व्याख्या**—भ्रमी = भ्रमणशीलः, कदम्बसम्भिन्नः = कदम्बपुष्पगन्धसंश्लिष्टः, मेघशीकरशीतलः = घनाऽम्बुकणशीतः, पवनः = वायुः, शमिनाम् अपि = शमनशीलानाम् अपि, क्लमित्वम् = अत्यर्थं ग्लानिं, कुरुते = विदधाति (अन्येषां का कथेति कैमुतिकन्यायेनाऽर्थापत्त्यलङ्कारः)।

**व्युत्पत्तिः** भ्रमी—"शमित्यष्टाभ्यो घिनुण्" इति घिनुण्, "नोदात्तोपदेशस्य मान्तस्यानाचमेः" इत्युपधावृद्धिप्रतिषेधः, एवं शमी क्लमी च साध्यौ । कदम्बसम्भिन्नः—कदम्बस्य विकाराः कदम्बानि, "तस्य विकार" इत्यण्, "पुष्पमूलेषु बहुलम्" इति तस्य लुप्, कदम्बैः संभिन्नः । मेघशीकरशीतलः—मेघस्य शीकराः,

"शीकरोऽम्बुकणाः स्मृताः" इत्यमरः। मेघशीकरैः शीतलः। क्लमित्वं—क्लमनशीलः क्लमी, "क्लमु ग्लानौ" घिनुण्, क्लमिनो भावः क्लमित्वं, "तस्य भावस्त्वतलौ" इति त्वप्रत्ययः। "त्वान्तं क्लीबम्" इति लिङ्गाऽनुशासनसूत्रात् क्लीबता।

॥भाषाऽर्थः॥ भ्रमणशील, कदम्बके फूलोंसे संसृष्ट, मेघकी बूंदोंसे ठण्ढा वायु शमनशील पुरुषोंको भी अत्यन्त ग्लानि उत्पन्न करता है ॥ ५ ॥

**संज्वारिणेव मनसा ध्वान्तमायासिना मया ॥**

**द्रोहि खद्योतसंपर्कि नयनाऽमोषि दुःसहम् ॥ ६ ॥**

**अन्वयः**—संज्वारिणा इव आयासिना मया द्रोहि खद्योतसम्पर्कि नयनामोषि ध्वान्तं मनसा दुःसहम्।

**व्याख्या**—संज्वारिणा इव = रोगशीलेन इव, आयासिना = आयासशीलेन, मया = रामचन्द्रेण, द्रोहि = अपकारशीलं, खद्योतसम्पर्कि = ज्योतिरिङ्गणसंसर्गशीलं, नयनामोषि = नेत्रगतिमोषणशीलं, ध्वान्तम् = अन्धकारः, मनसा = चित्तेन, दुःसहं = दुर्मर्षणीयम्।

॥व्युत्पत्तिः॥ संज्वारिणा—संज्वारणशीलः संज्वारी, तेन, समुपसर्गपूर्वकात् "ज्वर रोगे" इति धातोः "संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्चे"ति सूत्रेण घिनुण्, "अत उपधायाः" इत्युपधावृद्धिश्च। एवं परत्रापि। द्रोहि—द्रुह्यतीति तच्छीलं, "द्रुह जिघांसायाम्" इति धातोः पूर्वसूत्रेण घिनुण्। खद्योतसम्पर्कि—खद्योतैः संपृक्तं तच्छीलं, पूर्ववत्प्रत्ययः, "खद्योतो ज्योतिरिङ्गणः" इत्यमरः। नयनामोषि—आसमन्तात् मुष्णातीति आमोषि, आङुपसर्गपूर्वकात् "मुषस्तेये" इति धातोर्घिनुण्। नयनयोरामोषि। मनसा—"साधकतमं करणम्" इति करणत्वम्। दुःसहं—दुःखेन सह्यत इति, "ईषद्दुःसुषु कृच्छ्राऽकृच्छ्राऽर्थेषु खल्" इति खल्।

॥भाषाऽर्थः॥ ज्वररोगीके सदृश आयासशील मुझ (रामचन्द्र)से अपकारशील, जुगनुओंके सम्पर्कसे युक्त और नेत्रवृत्तिको रोकनेवाला अन्धकार मनसे दुःसह हो रहा है ॥ ६ ॥

**कुर्वन्ति परिसारिण्यो विद्युतः परिदेविनम् ॥**

**अभ्याघातिभिरामिश्राश्चातकैः परिराटिभिः ॥ ७ ॥**

**अन्वयः**—अभ्याघातिभिः परिराटिभिः चातकैः आमिश्राः परिसारिण्यो विद्युतः (माम्) परिदेविनं कुर्वन्ति।

**व्याख्या**—अभ्याघातिभिः = अभिहननशीलैः, दुःखोत्पादनादिति भावः। परि-

राटिभिः = परिरटनशीलैः, चातकैः = सारङ्गैः, आमिश्राः = युक्ताः, परिसारिण्यः = परिसरणशीलाः, विद्युतः = तडितः, ( मां = रामचन्द्रम् ), परिदेविनं = विलापशीलं, कुर्वन्ति = विदधति ।

ॐव्युत्पत्तिःॐ अभ्याघातिभिः—"सम्पृचान्वि"त्यादिना घिनुण् । परिराटिभिः—परिपूर्वकात् "रट परिभाषणे" इति धातोः पूर्ववद्घिनुण् । चातकैः—"अथ सारङ्गः स्तोककश्चातकः समाः ।" इत्यमरः । परिसारिण्यः—पूर्ववद्घिनुण्, स्त्रीत्वविवक्षायाम् "ऋन्नेभ्यो ङीप्, इति ङीप् । परिदेविनं—परिदेवनशीलः परिदेवी, तं पूर्ववत्प्रत्ययः ।

ॐभाषाऽर्थःॐ अभिहननशील और शब्द करनेवाले पपीहोंसे युक्त एवं फैलनेवाली बिजलियां मुझ ( राम ) को विलापशील करती हैं ॥ ७ ॥

**संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः ॥**
**सोढुमाक्रीडिनोऽशक्याः शिखिनः परिवादिनः ॥ ८ ॥**

**अन्वयः**—संसर्गी शीतोऽपि शीकरः परिदाही इव आभाति । आक्रीडिन शिखिनः परिवादिनः ( इव ) सोढुम् अशक्याः ।

**व्याख्या**—संसर्गी = संसर्जनशीलः, शीतोऽपि = शीतलोऽपि, शीकरः = जलबिन्दुः, परिदाही इव = परिदहनशील इव, आभाति = उल्लसति । आक्रीडिनः = नर्तनशीलाः, शिखिनः = मयूराः, पारिवादिन इव = परिवादनशीला इव, सोढुं = मर्षितुम्, अशक्याः = अशक्तिविषयाः, वर्तन्त इति शेषः ।

ॐव्युत्पत्तिःॐ संसर्गी पूर्ववद्घिनुण्, एवमन्यत्र । आक्रीडिनः—आक्रीडन्ते तच्छीला इति, पूर्ववत्प्रत्ययः ।

ॐभाषाऽर्थःॐ संसर्गशील ( स्पर्श करती हुई ) और ठण्ढी पानीकी बूँदें भी जलानेवालीकी तरह प्रतीत हो रही हैं । नाचनेवाले मयूर भी अपवाद ( निन्दा ) फैलानेवालोंके समान असह्य हो रहे हैं ॥ ८ ॥

**एता दैवानुरोधिन्यो द्वेषिण्य इव रागिणम् ॥**
**पीडयन्ति जनं धाराः पतन्त्योऽनपकारिणम् ॥ ९ ॥**

**अन्वयः**—दैवाऽनुरोधिन्यः पतन्त्य एता धारा द्वेषिण्य इव अनपकारिणं रागिणं जनं पीडयन्ति ।

**व्याख्या**—दैवाऽनुरोधिन्यः = भाग्याऽनुरोधात्प्रवर्तनशीलाः, पतन्त्यः = गलन्त्यः, एताः = इमाः, समीपतरस्थिता इत्यर्थः । धाराः = जलसंहतयः, द्वेषिण्य इव = द्वेषणशीला इव, अनपकारिणम् = अनपराधशीलं, रागिणं = रागशीलं, जनं = लोकं, पीडयन्ति = व्यथयन्ति ।

※व्युत्पत्तिः※ दैवाऽनुरोधिन्यः—दैवमनुरुध्यन्तीति तच्छीलाः, घिनुण्। एवमन्यत्राऽपि। अनपकारिणम्—अपकरोतीति तच्छीलोऽपकारी, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः, न अपकारी अनपकारी, तम्। रागी "रञ्ज रागे" इति धातोः पूर्ववत्प्रत्ययः। "रञ्जेरुपसंख्यानम्" इत्यनुनासिकलोपः, यद्वा "संपृचान्वि"–ति सूत्रे अनुनासिकनिर्देशाऽभावेन लोपनिपातनम्।

※भाषार्थः※ भाग्यके अनुरोधसे प्रवृत्त होनेवाली, गिरती हुई ये जल की धारायें द्वेषकारिणियोंके सदृश होकर अपराध न करनेवाले रागशील जनको पीडित कर रही हैं ॥ ९ ॥

**कुर्याद् योगिनमप्येष स्फूर्जावान् परिमोहिनम् ॥**
**त्यागिनं सुखदुःखस्य परिक्षेप्यम्भसामृतुः ॥ १० ॥**

**अन्वयः**—स्फूर्जावान् अम्भसां परिक्षेपी एष ऋतुः सुखदुःखस्य त्यागिनं योगिनम् अपि परिमोहिनं कुर्यात्।

**व्याख्या**—स्फूर्जावान् = वज्रनिर्घोषवान्, अम्भसां = जलानां, परिक्षेपी = परित्यजनशीलः, एषः = अयम्, ऋतुः = वर्षर्तुरित्यर्थः, सुखदुःखस्य = आनन्दव्यथयोः, त्यागिनं = त्यागशीलं, योगिनम् अपि = योगशीलं जनम् अपि, परिमोहिनं = परिमोहनशीलं, कुर्यात् = विदधीत (किमुताऽन्यं जनमिति शेषः, कैमुतिकन्यायेनाऽर्थापत्त्यलङ्कारः)।

व्युत्पत्तिः※ स्फूर्जावान्—स्फूर्जनं स्फूर्जा, "टुओस्फूर्जा वज्रनिर्घोषे" इति धातोः "गुरोश्च हलः" इति अप्रत्ययः, "अजाद्यतष्टाप्" इति टाप्। स्फूर्जाऽस्त्यस्य स्फूर्जावान्, मतुप्प्रत्ययः, "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मस्य वः। अम्भसां–परिक्षेपीति पदेन योगे कर्मणि षष्ठी। परिक्षेपी—परिक्षिपतीति तच्छीलः, परिपूर्वकात् "क्षिप प्रेरणे" इति धातोः पूर्ववद्धिनुण्। सुखदुःखस्य सुखं च दुःखं च सुखदुःखं, तत्र "चाऽर्थे द्वन्द्वः" इति द्वन्द्वसमासः। "विप्रतिषिद्धं चाऽनधिकरणवाचि" इति समाहारत्वम्। "त्यागिनम्" इति पदेन योगे कर्मणि षष्ठी। त्यागिनं = पूर्ववद्धिनुण्। योगिनं = पूर्ववत्प्रत्ययः। एवं परत्राऽपि।

※भाषाऽर्थः※ वज्रके शब्दसे युक्त और जलको छोड़नेवाला यह ऋतु (वर्षाऋतु) सुख दुःख छोड़नेवाले योगीको भी परिमोहित करेगा (औरों की क्या बात है?) ॥

**विकत्थी याचते प्रत्तमविश्रम्भी मुहुर्जलम् ॥**
**पर्जन्यं चातकः पक्षी निकृन्तन्निव मानसम् ॥ ११ ॥**

**अन्वयः**—चातकः पक्षी मानसं निकृन्तन् इव, विकत्थी इव (पर्जन्यो मह्यं जलं ददाति ? इति) अविश्रम्भी (सन्) प्रत्तं जलं पर्जन्यं मुहुः याचते।

**व्याख्या**—चातकः = सारङ्गः, पक्षी = विहगः, मानसं = चित्तं, निकृन्तन् इव = खण्डयन् इव, "विकत्थी ( इव ) = विकत्थनशीलः ( इव ), ( पर्जन्यः = रसदब्दः, मह्यं = चातकाय, जलं = नीरं, ददाति=वितरति ? इति=इत्थम् ) अविस्रम्भी=अविश्वासशीलः सन्, प्रत्तं=प्रदत्तं, जलं=सलिलं, पर्जन्यं = शब्दायमानं मेघं, मुहुः = पुनः पुनः, याचते=प्रार्थयते ।

**ॐव्युत्पत्तिःॐ** पक्षी—पक्षौ स्तोऽस्येति, "अत इनिठनौ" इतीनिः । मानसं—मन एव मानसं, तत् । विकत्थी—व्युपसर्गपूर्वकात् "कत्थ श्लाघायाम्" इति धातोः "वौ कषलसकत्थस्रम्भः" इति घिनुण् । अविस्रम्भी = विपूर्वकात् "स्रम्भु विश्वासे" इति धातोः पूर्ववत्प्रत्ययः, न विस्रम्भी अविस्रम्भीति नञ्समासः । प्रत्तं = प्रोपसर्गपूर्वकात् "डुदाञ् दाने" इति धातोः क्तः, "अच उपसर्गात्तः" इति तत्त्वम् । जलं—मुख्यकर्म । पर्जन्यं = गौणकर्म, "अकथितं च" ति कर्मसंज्ञा, "पर्जन्यौ रसदब्देन्द्रौ" इत्यमरः । याचते—द्विकर्मकोऽयं धातुः ।

**ॐभाषाऽर्थःॐ** पपीहा पक्षी ( "मनको खण्डित करनेवाला आत्मश्लाघी मेघ मुझे जल देगा ?" ऐसा विचार कर ) अविश्वासी होकर प्रदत्त जलको मेघसे बारंबार माँगता है ॥ ११ ॥

**प्रलापिनो भविष्यन्ति कदा न्वेतेऽपलाषिणः ।**
**प्रमाथिनो वियुक्तानां हिंसकाः पापदुर्दुराः ॥ १२ ॥**

**अन्वयः**—प्रलापिनः प्रमाथिनः (चेतस इति भावः ), वियुक्तानां हिंसकाः एते पापदर्दुराः कदा नु अपलाषिणो भविष्यन्ति ?

**व्याख्या**—प्रलापिनः=प्रलपनशीलाः, प्रमाथिनः=प्रमथनशीलाः, वियुक्तानां= वियोगयुक्तानां, मादृशानामिति भावः; हिंसकाः = हिंसनशीलाः, एते = सन्निधिस्थाः, पापदर्दुराः = पापशीलाः भकाः, कदा नु = कस्मिन् काले नु, अपलाषिणः = अपलषणशीलाः, व्यपगतमनोरथा इत्यर्थः । भविष्यन्ति = वेतस्यन्ते ।

**ॐव्युत्पत्तिःॐ** प्रलापिनः—"प्रे लपसृद्रुमथवदवसः" इति घिनुण् । एवं प्रमाथिन इत्यत्राऽपि । वियुक्तानां—"हिंसका" इति पदेन योगे कर्मणि षष्ठी । हिंसकाः—"निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्" इति वुञ्, "युवोरनाकौ" इत्यकादेशः । पापदर्दुराः—पापमस्ति एषां ते पापाः, "अर्श आदिभ्योऽच्" इत्यच्प्रत्ययः, पापाश्च ते दर्दुराः, "विशेषणं विशेष्येण बहुलम्" इति समासस्तस्य "तत्पुरुषः समानाऽधिकरणः कर्मधारयः" इति कर्मधारयसंज्ञा । कदा—"सर्वैकान्यकिंयत्तदः काले दा" इति दाप्रत्ययः । नु—वितर्कद्योतकमेतत्पदम् । अपलाषिणः—अपपूर्वकात् "लष कान्तौ" इति धातोः "अपे च लष" इति घिनुण् ।

ॐभाषाऽर्थःॐ प्रलापशील, चित्तको मथन करनेवाले, अत एव विरहियों-की हिंसा करनेवाले ये पापी मेढ़क कब विफलमनोरथ होंगे ॥ १२ ॥

**निन्दको रजनिंमन्यं दिवसं क्लेशको निशाम् ॥**
**प्रावृष्यनैषीत् काकुत्स्थः कथंचित् परिदेवकः ॥ १३ ॥**

**अन्वयः**—क्लेशक काकुत्स्थः रजनिंमन्यं दिवसं निशां च प्रावृषि निन्दकः परिदेवकः ( सन् ) कथञ्चित् अनैषीत् ।

**व्याख्या**—क्लेशकः = क्लेशनशीलः, काकुत्स्थः = रामचन्द्रः, रजनिम्मन्यः= रजनीमात्मानं मन्यमानं, घनाऽन्धकारयुक्तत्वादिति भावः । दिवसं = वासरं, निशां च = रात्रिं च, प्रावृषि = वर्षर्तौ, निन्दकः = निन्दनशीलः, परिदेवकः = परिदेवनशीलश्च सन्, कथञ्चित्=केनाऽपि प्रकारेण, महता कष्टेनेति भावः । अनैषीत्=नीतवान् ।

ॐव्युत्पत्तिःॐ क्लेशकः—"निन्दहिंसक्लिशे"त्यादिना वुञ् । काकुत्स्थः—ककुत्स्थस्याऽपत्यं पुमान्, "तस्याऽपत्यम्" इत्यण्, "तद्धितेष्वचामादेः" इत्यादिवृद्धिश्च । रजनिंमन्यम् = रजनीमात्मानं मन्यत इति रजनिंमन्यस्तम्, "आत्ममाने खश्च" इति खश्, "अरुर्द्विषदजन्तस्य मुम्" इति मुम्, "खित्यनव्ययस्य" इति पूर्वपदस्य ह्रस्वत्वं च । निन्दकः—पूर्वसूत्रेण वुञ् । परिदेवकः—पर्युपसर्गपूर्वकात् देविधातोर्दिवुधातोश्च "देविक्रुशोश्चोपसर्गे" इति वुञ् ।

ॐभाषाऽर्थःॐ क्लेशशील रामने ( वर्षाके कारण घनान्धकार होनेसे ) रात्रिके सदृश दिनको और रातको वर्षामें निन्दनशील होकर और विलाप करते हुए किसी तरह बिताया ॥ १३ ॥

**अथोपशरदेऽपश्यत् क्रौञ्चानां चेष्टनैः कुलैः ।**
**उत्कण्ठावर्धनैः शुभ्रं रवणैरम्बरं ततम् ॥ १४ ॥**

**अन्वयः**—अथ उपशरदे ( सः ) चेष्टनैः उत्कण्ठावर्धनैः रवणैः क्रौञ्चानां कुलैः ततम् अम्बरं शुभ्रम् अपश्यत् ।

**व्याख्या**—अथ = अनन्तरम्, उपशरदे = शरत्समीपे, ( सः = रामः ), चेष्टनैः = व्यापारशीलैः, उत्कण्ठावर्द्धनैः = औत्सुक्यवर्द्धनशीलैः, रवणैः = शब्दनशीलैः, क्रौञ्चानां = कुञ्चां, कुलैः = समूहैः, ततं = व्याप्तम्, अम्बरम् = आकाशं, शुभ्रं = शुक्लम्, अपश्यत् = दृष्टवान् ।

ॐव्युत्पत्तिःॐ उपशरदे—शरदः समीपे, "अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाऽभावाऽत्ययाऽसम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्याऽन्तवचनेषु" इति समीपाऽर्थेऽव्ययीभावः, "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समा-

साऽन्तष्टच्, "तृतीयासप्तम्योर्बहुलम्" इत्यमभावः । चेष्टनैः, रवणैः—"चलनशब्दाऽर्थादकर्मकाद्युच्" इति युच् । उत्कण्ठावर्द्धनैः—"अनुदात्तेतश्च हलादेः" इति युच् । क्रौञ्चानां—क्रुञ्च एव क्रौञ्चास्तेषां "प्रज्ञादिभ्यश्च" इति स्वाऽर्थेऽण् । "क्रुङ् क्रौञ्च" इत्यमरः ।

ॐभाषाऽर्थःॐ अनन्तर शरद् ऋतु के समीप कालमें रामने चेष्टाशील, उत्कण्ठाको बढ़ानेवाले तथा बोलते हुए क्रौञ्च पक्षियोंके समूहोंसे व्याप्त आकाशको शुक्ल वर्णवाला देखा ॥ १४ ॥

**विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत् ।**
**'पश्य दन्द्रमणान् हंसानरविन्दसमुत्सुकान् ॥ १५ ॥**

**अन्वयः**—द्योतनं चन्द्रं विलोक्य शोचनः ( रामः ) लक्ष्मणम् अवदत्—"दन्द्रमणान् अरविन्दसमुत्सुकान् हंसान् पश्य ।

**व्याख्या**—द्योतनं = साधु द्योतमानं, चन्द्रं = सोमं, विलोक्य = दृष्ट्वा, शोचनः = शोचनशीलः, ( रामः ), लक्ष्मणं = सौमित्रिम्, अवदत् = अब्रवीत् । दन्द्रमणान् = शनैर्गमनशीलान्, अरविन्दसमुत्सुकान् = कमलोत्कण्ठितान्, हंसान् = मानसौकसः, पश्य = विलोकय ।

ॐव्युत्पत्तिःॐ द्योतनं—"द्युत दीप्तौ" इति धातोः "अनुदात्तेतश्चे"त्यादिना युच् । शोचनः—"शुच शोके" इति धातोः "जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः" इति युच् । दन्द्रमणान्=कुटिलं द्रमन्तीति दन्द्रमणास्तान्, "द्रम गतौ" इति धातोः "नित्यं कौटिल्ये गतौ" इति यङन्तात् पूर्वसूत्रेण युचि "अतो लोपः" इत्यल्लोपे "यस्य हलः" इति यलोपः । अरविन्दसमुत्सुकान्—अरविन्देषु समुत्सुकास्तान्, "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तमी, ततो भाष्यकारमते "सह सुपे"ति, कैयटमते "सप्तमी शौण्डैः" इत्यत्र "सप्तमी"ति योगविभागात्समासः । हंसान्—"हंसास्तु श्वेतगरुश्चक्राङ्गा मानसौकसः ।" इत्यमरः ।

ॐभाषाऽर्थःॐ सुन्दरतासे प्रकाशमान चन्द्रमाको देखकर शोकशील रामने लक्ष्मणसे कहा—"भाई ! धीरे धीरे चलनेवाले तथा कमलोंमें उत्कण्ठित हंसोंको देखो ॥ १५ ॥

**कपिश्चङ्क्रमणोऽद्यापि नाऽसौ भवति गर्धनः ।**
**कुर्वन्ति कोपनं तारा मण्डना गगनस्य माम् ॥ १६ ॥**

**अन्वयः**—गर्धनः कपिः अद्य अपि चङ्क्रमणो न भवति । गगनस्य मण्डनाः तारा मां कोपनं कुर्वन्ति ।

**व्याख्या**—गर्धनः = अभिलाषशीलः, स्त्रीष्विति भावः । कपिः = वानरः,

सुग्रीव इत्यर्थः। अद्य अपि = साम्प्रतम् अपि, चङ्क्रमणः = शनैर्गमनशीलः, न भवति = न विद्यते। गगनस्य = आकाशस्य, मण्डनाः = भूषणाः, ताराः = नक्षत्राणि, मां = रामं, प्रियावियुक्तमिति भावः। कोपनं = कोपनशीलं, कुर्वन्ति = विदधति।

ॐव्युत्पत्तिःॐ गर्धनः—"गृधु अभिकाङ्क्षायाम्" इति धातोः "जुचङ्क्रम्ये"त्यादिना युच्, "गृध्नुस्तु गर्धन" इत्यमरः। चङ्क्रमणः = पूर्ववद्युच्, गगनस्य "मण्डना" इति पदेन योगे कर्मणि षष्ठी। मण्डनाः—मण्डनशीलाः, "मडि भूषायाम्" इति धातोः "क्रुधमण्डाऽर्थेभ्यश्च" इति युच्, "अलङ्करिष्णुस्तु मण्डनः" इत्यमरः। कोपनं—पूर्वसूत्रेण युच्।

ॐभाषाऽर्थःॐ—स्त्रियोंमें अभिलाषशील सुग्रीव आज तक ( मेरे कामके लिए ) मन्दगतिशील ( भी ) नहीं हो रहे हैं। आकाशको अलंकृत करनेवाली तारायें ( मदनोद्दीपक होनेसे ) मुझे क्रुद्ध कर रही हैं॥ १६॥

**नाऽवैत्याप्यायितारं किं कमलानि रविं कपिः।**
**दीपितारं दिनाऽऽरम्भे निरस्तध्वान्तसंचयम्॥ १७॥**

**अन्वयः**—कपिः कमलानि आप्यायितारं दिनारम्भे दीपितारं निरस्तध्वान्तसञ्चयं रविं किं न अवैति?।

**व्याख्या**—कपिः = सुग्रीवः, कमलानि = पद्मानि, आप्यायितारं = साधु वर्द्धयन्तं, दिनाऽऽरम्भे = दिवसोपक्रमे, प्रातःकाल इत्यर्थः। दीपितारं=साधु दीप्यमानं, निरस्तध्वान्तसञ्चयं = दूरीकृताऽन्धकारसमूहं, रविं = सूर्यं, किं न अवैति=किं न जानाति ( किमसौ शरदृतुं न जानातीत्यर्थः )।

ॐव्युत्पत्तिःॐ कमलानि—"आप्यायितारम्" इति पदेन योगे प्राप्तायाः कर्मणि षष्ठ्या "न लोकाऽव्यये"त्यादिना निषेधः। आप्यायितारम्—"अनुदात्तेतश्च हलादेः" इति युचि प्राप्ते "न यः" इति तन्निषेधस्ततः "तृन्" इति तृन्। दीपितारं—पूर्ववद्युचि प्राप्ते "सूददीपदीक्षश्च" इति निषेधः। निरस्तध्वान्तसञ्चयं—निरस्तो ध्वान्तसञ्चयो येन तम्।

ॐभाषाऽर्थःॐ सुग्रीव कमलोंको अच्छी तरहसे बढ़ानेवाले, प्रातःकालमें सुन्दर रूपसे प्रकाशमान तथा अन्धकारसमूहको हटानेवाले सूर्यको क्या नहीं जानते हैं? ( अर्थात् शरद् ऋतुके आगमनको नहीं जानते हैं? )॥ १७॥

**अतीते वर्षुके काले प्रमत्तः स्थायुको गृहे॥**
**गामुको ध्रुवमध्वानं सुग्रीवो वालिना गतम्॥ १८॥**

**अन्वयः**—वर्षुके काले अतीते ( अपि ) गृहे स्थायुकः प्रमत्तः सुग्रीवो वालिना गतम् अध्वानं ध्रुवं गामुकः ।

**व्याख्या**—वर्षुके = वर्षणशीले, काले = समये, (वर्षतौं इति भावः), अतीते = व्यतीते, (अपि) गृहे=सद्मनि, स्थायुकः = स्थितिशीलः, अतएव प्रमत्तः = प्रमादयुक्तः सन् , सुग्रीवः = वालिकनिष्ठभ्राता, वालिना = स्वाऽग्रजेन, गतं=प्राप्तम् , अध्वानं = मार्गं, ध्रुवम् = अवश्यं, गामुकः = साधु गन्ता, भविष्यतीति शेषः ।

ॐव्युत्पत्तिःॐ वर्षुके—"लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्" इत्युकञ् प्रत्ययः । स्थायुकः—पूर्वसूत्रेणोकञ् , "आतो युक् चिण्कृतोः" इति युगागमः। अध्वानं—"गामुक" इति पदेन योगे प्राप्तायाः कर्मणि षष्ठ्या "न लोकाव्यये"त्यादिना निषेधः । गामुकः—पूर्ववदुकञ् ।

ॐभाषाऽर्थःॐ वर्षाकाल बीतने पर भी गृहमें स्थितिशील, प्रमत्त सुग्रीव बालिप्राप्त मार्गको निश्चय जानेवाले हैं ॥ १८ ॥

**जल्पाकीभिः सहाऽऽसीनः स्त्रीभिः प्रजविना त्वया ॥**
**गत्वा लक्ष्मण ! वक्तव्यो जयिना निष्ठुरं वचः ॥ १९ ॥**

**अन्वयः**—हे लक्ष्मण ! प्रजविना जयिना त्वया गत्वा जल्पाकीभिः सह आसीनः ( सुग्रीवः ) निष्ठुरं वचः वक्तव्यः ।

**व्याख्या**—हे लक्ष्मण = हे भ्रातः, प्रजविना = प्रकृष्टगमनशीलेन, जयिना = अभिभवनशीलेन, त्वया = भवता, गत्वा = गमनं कृत्वा, जल्पाकीभिः सह = जल्पनशीलाभिः स्त्रीभिः समम् , आसीनः = उपविष्टः, ( सुग्रीवः ), निष्ठुरं = कठोरं, वचः = वचनं, वक्तव्यः = अभिधातव्यः ।

ॐव्युत्पत्तिःॐ प्रजविना—प्रजवतीति प्रजवी, तेन, "जु वेगितायां गतौ" इति सौत्रधातोः "प्रजोरिनिः" इति इनिः । जयिना—"जि अभिभवे" इति धातोः "जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च" इति इनिः । जल्पाकीभिः—"जल्पभिक्षकुट्टलुण्टवृङः षाकन्" इति षाकन् , षित्वात् "षिद्गौरादिभ्यश्चे"ति ङीष् । "सहे"ति पदेन योगे "सहयुक्तेऽप्रधाने" इति तृतीया । आसीनः—आस्त इति, "आस उपवेशने" इति धातोः "लटः शतृशानचावप्रथमासमानाधिकरणे" इति शानच्, "ईदासः" इतीत्वम् । "आसीन" इति गौणकर्मणि प्रथमा । वचः—प्रधानकर्मत्वाद्द्वितीया । वक्तव्यः—वक्तुमर्हः, "ब्रूञ् व्यक्तायां वाचि" इति धातोः समाऽर्थात् "वच परिभाषणे" इति धातोः "तव्यत्तव्याऽनीयरः" इति तव्यत्प्रत्ययः ।

ॐभाषाऽर्थःॐ हे लक्ष्मण ! उत्कृष्टगतिशील और अभिभव करनेवाले तुम्हें बकवाद करनेवाली स्त्रियोंके साथ बैठे हुए सुग्रीवको कठोर वचन कहना चाहिए ॥ १९ ॥

**शैले विश्रयिणं क्षिप्रमनादरिणमभ्यमी ॥**
**न्याय्यं परिभवी ब्रूहि पापमव्यथिनं कपिम् ॥ २० ॥**

**अन्वयः**—( हे लक्ष्मण ! ) क्षिप्रम् अभ्यमी परिभवी ( त्वम् ) शैले विश्रयिणम् अनादरिणं पापम् अव्यथिनं कपिं न्याय्यं ब्रूहि ।

**व्याख्या**—( हे लक्ष्मण ! ) क्षिप्रं = सत्वरम् , अभ्यमी=अभिमुखगमनशीलः, परिभवी = साधु परिभवं जनयन् , ( त्वम् ). शैले=पर्वते, किष्किन्धाद्राविति भावः । विश्रयिणं=स्थितिशीलम् , अनादरिणम्=अनादरशीलं, सीताऽन्वेषणे कालाऽतिक्रमणादिति भावः । अत एव पापं=दुराचारम् , अव्यथिनं=निर्भयशीलं, कपिं=सुग्रीवं, न्याय्यं=न्यायादनपेतं, वच इति शेषः । ब्रूहि=कथय ।

***व्युत्पत्तिः*** अभ्यमी—गत्यादिषु वर्तमानादभिपूर्वकादमधातोः "जिदृक्षी"त्यादिना इनिः । एवमुत्तरत्राऽपि । कपिं—गौणकर्म । न्याय्यं—प्रधानकर्म ।

***भाषार्थः*** हे लक्ष्मण ! शीघ्र सम्मुख जाकर अच्छी तरहसे तिरस्कारकर तुम किष्किन्धा पर्वतमें रहे हुए, मित्रकार्यमें आदर न करनेवाले, पापी और निर्भय स्वभाववाले सुग्रीव को न्यायपूर्ण वचन कहो ॥ २० ॥

**स्पृहयालुं कपिं स्त्रीभ्यो निद्रालुमदयालुवत् ॥**
**श्रद्धालुं भ्रामरं धारुं सद्रुमद्रौ वद द्रुतम्' ॥ २१ ॥**

**अन्वयः**—स्त्रीभ्यः स्पृहयालुं निद्रालुं भ्रामरं श्रद्धालुं धारुम् अद्रौ सद्रुं कपिम् अदयालुवत् वद ।

**व्याख्या**—स्त्रीभ्यः = नारीभ्यः, स्पृहयालुं = साधु स्पृहयन्तं, निद्रालुं = निद्राशीलम् , अस्मत्कार्येऽनवधानच्छयनीय एव सर्वदा स्त्रीभिः स्थितत्वादिति भावः । भ्रामरं = मधु, श्रद्धालुं = साधु अभिलषन्तम् , अत एव—धारुं = साधु पिबन्तं, मध्विति शेषः । अद्रौ = पर्वते, किष्किन्धायामित्यर्थः । सद्रुं = साधु सीदन्तं, कपिं = सुग्रीवम् , ( त्वम् ) अदयालुवत् = अदयनशील इव, वद = ब्रूहि ।

***व्युत्पत्तिः*** स्त्रीभ्यः—"स्पृहयालुम्" इति पदेन योगे "स्पृहेरीप्सित" इति सम्प्रदानत्वम् । स्पृहयालुं—चौरादिकात्स्पृह धातोः "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" इत्यालुच्प्रत्ययः, "अयामन्ताल्वाय्येत्न्विष्णुषु" इत्ययादेशः । निद्रालुं—पूर्वसूत्रेणाऽऽलुच्, "स्वप्नवशयालुर्निद्रालुर्निद्राणशयितौ समौ ।" इत्यमरः । भ्रामरं = भ्रमरैः कृतं, "क्षुद्राभ्रमरवटरपादपादञ्" इति अञ् । "श्रद्धालुम्" इति पदेन योगे प्राप्तायाः कर्मणि षष्ठ्या "न लोकाऽव्यये"त्यादिना निषेधः श्रद्धालुं = पूर्ववदालुच्, "श्रद्धालुः श्रद्धया युक्ते" इत्यमरः । धारुं—साधु धयतीति

धारुस्तं, "धेट् पाने" इति धातोः "दाधेट्सिशदसदो रुः" इति रुः । सद्रुं—पूर्ववद्रुः । अदयालुवत्—पूर्ववदालुच् । अदयालुना तुल्यम्, "तेन तुल्यं क्रिया चेद्वतिः" इति वतिः ।

ॐभाषाऽर्थःॐ स्त्रियोंकी अतिशय स्पृहा करनेवाले, निद्राशील, श्रद्धापूर्वक मधु को पीनेवाले पर्वतमें रहे हुए सुग्रीवको निर्दयके सदृश होकर कहो ॥ २१ ॥

**सृमरो भङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः ॥**
**विदुरो जित्वरः प्राप लक्ष्मणो गत्वरान् कपीन् ॥२२॥**

**अन्वयः** = सृमरो भङ्गुरप्रज्ञो विदुरो जित्वरो लक्ष्मणो भासुरं धनुः गृहीत्वा गत्वरान् कपीन् प्राप ।

**व्याख्या**—सृमरः = साधु गन्ता, भङ्गुरप्रज्ञः = स्वतोभङ्गशीलवेत्ता, विदुरः= साधु ज्ञाता, जित्वरः = साधु जयशीलः, लक्ष्मणः = रामाऽनुजः, भासुरं = भासनशीलं, धनुः = कार्मुकं, गृहीत्वा = आदाय, गत्वरान् = गमनशीलान्, अस्थिरस्वभावानित्यर्थः । कपीन् = वानरान्, प्राप = अगमत् ।

ॐव्युत्पत्तिःॐ सृमरः—"सृघस्यदः क्मरच्" इति क्मरच् । भङ्गुरप्रज्ञः—भङ्गशीला भङ्गुराः, "भञ्जभासमिदो घुरच्" इति घुरच्प्रत्ययः । भङ्गुरान् प्रजानातीति, "प्रे दाज्ञः" इत्यणोऽपवादः कप्रत्ययः । विदुरः—साधु वेत्तीति, "विद ज्ञाने" इति धातोः "विदिभिदिच्छिदेः कुरच्" इति कुरच्, "ज्ञाता तु विदुरः" इत्यमरः । जित्वरः—"इण्नशजिसर्तिभ्यः क्वरप्" इति क्वरप्, "ह्रस्वस्य पिति कृति तुक्" इति तुगागमः । भासुरं—"भासृ दीप्तौ" इति धातोः "भञ्जभासे"त्यादिना घुरच् । गत्वरान्—"गत्वरश्चे"ति निपातनाद्गमेः क्वरप्यनुनासिकलोपः ।

ॐभाषाऽर्थःॐ गमनशील, स्वतः नष्ट होनेवालोंको जाननेवाले, ज्ञाता और जयशील लक्ष्मणजी चमकनेवाले धनुषको लेकर गमनशील बन्दरोंके पास पहुंच गये ॥२२॥

**तं जागरूकः कार्येषु दन्दशूकरिपुं कपिः ॥**
**अकम्प्रं मारुतिर्दीप्रं नम्रः प्रावेशयद् गुहाम् ॥२३॥**

**अन्वयः**—कार्येषु जागरूकः कपिः मारुतिः नम्रः ( सन् ) दन्दशूकरिपुम् अकम्प्रं दीप्रं तं गुहां प्रावेशयत ।

**व्याख्या**—कार्येषु = कृत्येषु, जागरूकः = सावधानः, कपिः = वानरः, मारुतिः = हनूमान्, नम्रः = साधु प्रह्वीभूतः सन्, दन्दशूकरिपुं = हिंस्रशत्रुम्, अकम्प्रम् = अकम्पनशीलम्, अभीरुमिति भावः । दीप्रं = साधुदीप्यमानं, तं = लक्ष्मणं, गुहां = गह्वरं, प्रावेशयत् = प्रवेशितवान् ।

ॐव्युत्पत्तिःॐ जागरूकः—"जागृ निद्राक्षये" इति धातोः "जागरूकः" इति

ऊकः। "जागरूको जागरिता" इत्यमरः। मारुतिः—मारुतस्याऽपत्यं पुमान्, "अत इञ्" इति इञ्। नम्रः—"णम प्रह्वत्वे शब्दे" इति धातोः "नमिकम्पिस्म्यजस-कमहिंसदीपोरः" इति रः। दन्दशूकरिपुं—गर्हितं दशतीति दन्दशूकः, दंशेः "लुपसद-चरजपजभदहदशगृभ्यो भावगर्हायाम्" इति यङन्तात् "जपजभदहदशभञ्जपशां च" इति नुकि अनुस्वारे च "यजजपदशां यङः" इति ऊकः। "दन्दशूकस्तु पुंलिङ्गो राक्षसे च सरीसृपे।" इति कोशः। दन्दशूकानां रिपुस्तम्। अकम्प्रं—"नमिकम्पी"-त्यादिना रः। "चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम्।" इत्यमरः। दीप्रं—"दीपी दीप्तौ" इति धातोः पूर्ववद्रः, तं। विशधातोर्गतिविशेषत्वात् "गतिबुद्धिप्रत्यव-सानाऽर्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" इति अण्यन्ताऽवस्थायां कर्तुः कर्मत्वम्। गुहां—"देवखातबिले गुहा। गह्वरम्" इत्यमरः। प्रावेशयत्—"विश प्रवेशने" इति धातोर्हेतुमण्ण्यन्ताल्लङि रूपम्।

॥भाषार्थः॥ कार्योंमें सावधान वानर हनुमानजीने नम्र होते हुए राक्षसोंके शत्रु, निर्भीक (निडर), प्रकाशमान लक्ष्मणजीको गुफामें प्रवेश कराया॥ २३॥

**कम्राभिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः॥**
**इच्छुः प्रसादं प्रणयन् सुग्रीवः प्रावदन् नृपम्॥ २४॥**

**अन्वयः**—कम्राभिः स्त्रीभिः आवृतः प्रणमन् आत्मनः क्षेमम् आशंसुः प्रसादम् इच्छुः सुग्रीवः नृपं प्रावदत्।

**व्याख्या**—कम्राभिः=कमनशीलाभिः, स्त्रीभिः=नारीभिः, आवृतः=परिवृतः, प्रणमन्=प्रणामं कुर्वन्, ताभिः सहेत्यर्थः। आत्मनः=स्वस्य, क्षेमं=कल्याणम्, आशंसुः=प्रार्थयमानः, प्रसादम्=अनुग्रहम्, इच्छुः=अभिलाषुकः, सुग्रीवः=कपीन्द्रः, नृपं=राजानं, लक्ष्मणमित्यर्थः। प्रावदत्=प्राब्रवीत्।

॥व्युत्पत्तिः॥ कम्राभिः—"कमु कान्तौ" इति धातोः "नमिकम्पी"त्यादिना रः, "कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः।" इत्यमरः। क्षेमम्—"आशंसुः" इति पदेन योगे प्राशायाः कर्मणि षष्ठ्याः "न लोकाऽव्यये"त्यादिना निषेधः। आशंसुः—"सनाशंसभिक्ष उः" इति उः, "आशंसुराशंसितरि" इत्यमरः। इच्छुः—इच्छतीति, "विन्दुरिच्छुः" इति निपातः। नृपं—नॄन्पातीति नृपस्तम्, "आतोऽनुपसर्गे कः" इति कः।

॥भाषार्थः॥ कामुक स्त्रियोंसे घिरे हुए, प्रणाम करते हुए, अपने कल्याणकी इच्छा करनेवाले एवम् अनुग्रहप्रार्थी सुग्रीवने लक्ष्मणको कहा॥ २४॥

**'अहं स्वप्नक् प्रसादेन तव वन्दारुभिः सह॥**
**अभीरुरवसं स्त्रीभिर्भासुराभिरिहेश्वरः॥ २५॥**

**अन्वयः**—अहं तव प्रसादेन वन्दारुभिः भासुराभिः स्त्रीभिः सह अभीरुः ईश्वरः सन् इह स्वप्नक् अवसम् ।

**व्याख्या**—अहं=सुग्रीवः, तव=भवतः, प्रसादेन=अनुग्रहेण, वन्दारुभिः=वन्दनशीलाभिः, भासुराभिः=भासनशीलाभिः, स्त्रीभिः=नारीभिः, सह=समम् , अभीरुः=अभयशीलः, ईश्वरः = ईशनशीलः, सन् इह=गुहायां, स्वप्नक्=निद्रालुः सन् , चिन्ताऽभाववदिति भावः । अवसम्=उषितवान् ।

**व्युत्पत्तिः** वन्दारुभिः—"वदि अभिवादनस्तुत्योः" इति धातोः "शृवन्द्योरारुः" इति आरुः, "वन्दारुरभिवादके" इत्यमरः । भासुराभिः—"स्थेशभासपिसकसो वरच्" इति वरच् । अभीरुः—"ञिभी भये" इति धातोः "भियः क्रुक्लुकनौ" इति क्रुः । ईश्वरः—"ईश ऐश्वर्ये" इति धातोः "स्थेशे"त्यादिना वरच् , "ईश्वरः पतिरीशिता" इत्यमरः । स्वप्नक्—"ञिष्वप् शये" इति धातोः "स्वपितृषोर्नजिङ्" इति नजिङ् ।

**भाषाऽर्थः** मैं आपके अनुग्रहसे स्तुतिशील और भासनशील स्त्रियोंके साथ निर्भय और समर्थ होकर इस गुफामें निश्चिन्त होनेसे निद्राशील हो रहा हूँ ॥ २९ ॥

**विद्युन्नाशं रवेर्भासं विभ्राजं शशलाञ्छनम् ॥**
**रामप्रत्तेषु भोगेषु नाहमज्ञासिषं रतः ॥ २६ ॥**

**अन्वयः**—रामप्रत्तेषु भोगेषु रतः अहं विद्युन्नाशं रवेः भासं विभ्राजं शशलाञ्छनम् न अज्ञासिषम् ।

**व्याख्या**—रामप्रत्तेषु = रामचन्द्रदत्तेषु, भोगेषु=विषयाऽनुभवेषु, रतः=आसक्तः, अहं=सुग्रीवः, विद्युन्नाशं = तडिददर्शनं, रवेः=सूर्यस्य, भासं=भासनशीलां दीप्तिं, विभ्राजं=साधु दीप्यमानं, शशलाञ्छनं=चन्द्रमसं च, न अज्ञासिषं=न ज्ञातवान् , वर्षर्तुरपगतः शरदृतुरायात इति न ज्ञानवानिति भावः ।

**व्युत्पत्तिः** रामप्रत्तेषु—रामेण प्रत्तास्तेषु, "अच उपसर्गात्तः" इति तः । विद्युन्नाशं—द्योतनशीला विद्युतः, "द्युत दीप्तौ" इति धातोः "भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप्" इति क्विप् , "तडित्सौदामनी विद्युच्चञ्चला चपला अपि ।" इत्यमरः । भासं—"भासृ दीप्तौ" इति धातोः पूर्वसूत्रेण क्विप् । विभ्राजं—व्युपसर्गपूर्वकात् "भ्राजृ दीप्तौ" इति धातोः पूर्ववत्क्विप् । शशलाञ्छनं—शशो लाञ्छनं यस्य तम् । अज्ञासिषं—"ज्ञा अवबोधने" इति धातोर्लुङि "यमरमनमातां सक्च" इति सगिटौ ।

**भाषाऽर्थः** रामचन्द्रजीसे दिये गये भोगोंमें आसक्त होकर मैंने बिजलीका अदर्शन सूर्यकी प्रकाशमान दीप्ति और प्रकाशशील चन्द्रको नहीं जाना (अर्थात् भोगोंमें आसक्त होकर मैंने वर्षाका गमन और शरत्का आगमन नहीं जाना ) ॥ २६ ॥

**एष शोकच्छिदो वीरान् प्रभो ! सम्प्रति वानरान् ॥**
**धराशैलसमुद्राणामन्तगान् प्रहिणोम्यहम् ॥ २७ ॥**

**अन्वयः**—हे प्रभो ! एषः अहं सम्प्रति शोकच्छिदो वीरान् धराशैलसमुद्राणाम् अन्तगान् वानरान् प्रहिणोमि ।

**व्याख्या**—हे प्रभो = हे स्वामिन् , एषः = भवत्समीपतरवर्ती, अहं=सुग्रीवः, सम्प्रति = अधुना, शोकच्छिदः = मन्युनिवारणशीलान् , वीरान् = शूरान् , धराशैलसमुद्राणां = पृथिवीपर्वतसागराणाम्, अन्तगान् = सीमागामुकान् , वानरान् = कपीन् , प्रहिणोमि = प्रस्थापयामि ।

ॐव्युत्पत्तिःॐ शोकच्छिदः—शोकं छिन्दन्तीति तान् "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इति क्विप्, तस्य सर्वाऽपहारी लोपः । वीरान्—वीरयन्तीति वीरास्तान्, "शूर वीर विक्रान्तौ" इति धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति पचादित्वादच्, "शूरो वीरश्च विक्रान्त" इत्यमरः । धराशैलसमुद्राणां—धरा च शैलाश्च समुद्राश्च धराशैलसमुद्रास्तेषां, "चाऽर्थे द्वन्द्वः" इति समासः । "धरासमुद्रशैलानाम्" इति पाठान्तरम् । अन्तगान्—अन्तं गच्छन्तीत्यन्यगास्तान् , "अन्ताऽत्यन्ताऽध्वदूरपारसर्वाऽनन्तेषु डः" इति डप्रत्ययः । प्रहिणोमि—प्रपूर्वकात् "हि गतौ वृद्धौ च"इति धातोर्लट् , "हिनुमीना" इति णत्वम् ।

ॐभाषाऽर्थःॐ हे प्रभो ! यह मैं अभी शोकको हटानेवाले, वीर और पृथ्वी, पर्वत तथा समुद्रकी सीमा तक जानेवाले वानरोंको भेजता हूं ॥ २७ ॥

अथ निरधिकारकृतः ।

**राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः ॥**
**सर्ववानरसेनानामाश्वागमनमादिशत् ॥ २८ ॥**

**अन्वयः**—ततो राघवस्य कार्यं कारुः वानरपुङ्गवः सर्ववानरसेनानाम् आशु आगमनम् आदिशत् ।

**व्याख्या**—ततः = कथनाऽनन्तरं, राघवस्य = रामस्य, कार्यं = कृत्यं, सीताऽन्वेषणरूपमित्यर्थः । कारुः = कर्ता, वानरपुङ्गवः = कपिश्रेष्ठः, सुग्रीवः इति भावः । सर्ववानरसेनानां = सकलमर्कटपृतनानाम् , आशु = शीघ्रम् , आगमनम् = आगतिम् , आदिशत् = आदिष्टवान् ।

ॐव्युत्पत्तिःॐ ततः—तस्मादिति, "पञ्चम्यास्तसिल्" इति तसिल् । राघवस्य—रघोरपत्यं पुमान् राघवस्तस्य, "तस्याऽपत्यम्" इत्यण्, "तद्धितेष्वचामादेः" इति आदिवृद्धिश्च । कारुः—करोतीति, "कृपावाजिमिस्वदिसाध्यशूभ्य उण्"

इति औणादिक उण्। एवमाशु इत्यत्राऽपि। वानरपुङ्गवः—पुमांश्चाऽसौ गौः "गोरतद्धितलुकि" इति समासाऽन्तष्टच्। व्युत्पत्तिमात्रमेतत्, पुङ्गवशब्दस्तु प्रधानमाचष्टे, यथाहाऽमरः—"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठाऽर्थगोचराः॥" इति; वानराणां पुङ्गवः।

भाषाऽर्थः—अनन्तर रामका कार्य करने वाले सुग्रीवने सब वानरोंकी सेनाको शीघ्र आनेके लिए आज्ञा दी ॥ २८ ॥

**वयमद्यैव गच्छामो रामं द्रष्टुं त्वरान्विताः।**
**कारका मित्रकार्याणि सीतालाभाय सोऽब्रवीत् ॥ २९ ॥**

**अन्वयः**—सः अब्रवीत्—"सीतालाभाय मित्रकार्याणि कारकाः त्वराऽन्विता वयम् अद्य एव रामं द्रष्टुं गच्छामः"।

**व्याख्या**—सः = सुग्रीवः, अब्रवीत् = अवदत्, सीतालाभाय = सीतां लब्धुं, मित्रकार्याणि = सखिकृत्यानि, रावणवधादीनीति भावः। कारकाः = करिष्यन्तः, त्वराऽन्विताः = त्वरिताः, वयम्, अद्य एव = अस्मिन्दिन एव, रामं = रामचन्द्रं, द्रष्टुं = साक्षात्कर्तुं, गच्छामः = यामः।

※व्युत्पत्तिः※सीतालाभाय—सीतां प्राप्स्याम इति "भाववचनाश्चे"ति क्रियायां क्रियाऽर्थायामुपपदे भविष्यति घञ्। "तुमर्थाच्च भाववचनात्" इति चतुर्थी। मित्रकार्याणि "कारका" इति पदेन योगे प्राप्तायाः कर्मणि षष्ठ्याः "अकेनोर्भविष्यदाधमर्ण्ययोः" इति निषेधाद्द्वितीया। कारकाः—गच्छाम इति क्रिया। तस्यां क्रियायां क्रियाऽर्थायामुपपदे तुमुण्ण्वुलौ भविष्यति काले भवतः। "तुमुण्ण्वुलौ क्रियायां क्रियाऽर्थायाम्" इति ण्वुल्। त्वराऽन्विताः—त्वरयाऽन्विताः, "संभ्रमस्त्वरा" इत्यमरः। द्रष्टुं—"दृशिर् प्रेक्षणे" इति धातोः भविष्यति काले "तुमुण्ण्वुलौ" इत्यादिना तुमुन्। "सृजिदृशोर्झल्यमकिति" इत्यम्।

※भाषाऽर्थः※ सुग्रीवने कहा—"सीताको पानेके लिए मित्रकार्योंको करनेवाले हम लोग शीघ्रता से आज ही रामका दर्शन करने के लिए जाते हैं" ॥ २९ ॥

**ततः कपीनां सङ्घाता हर्षाद्राघवभूतये।**
**पूरयन्तः समाजग्मुर्भयदाया दिशो दश ॥ ३० ॥**

**अन्वयः**—ततो दश दिशः पूरयन्तो भयदायाः कपीनां सङ्घाताः राघवभूतये हर्षात् समाजग्मुः।

**व्याख्या**—ततः = सुग्रीवादेशाऽनन्तरं, दश = दशसंख्यकाः दिशः = आशाः, पूरयन्तः = व्याप्नुवन्तः, भयदायाः = भयं दास्याम इति, कपीनां=वानराणां, सङ्घा-

**एष शोकच्छिदो वीरान् प्रभो ! सम्प्रति वानरान् ॥**
**धराशैलसमुद्राणामन्तगान् प्रहिणोम्यहम् ॥ २७ ॥**

**अन्वयः**—हे प्रभो ! एषः अहं सम्प्रति शोकच्छिदो वीरान् धराशैलसमुद्राणाम् अन्तगान् वानरान् प्रहिणोमि ।

**व्याख्या**—हे प्रभो = हे स्वामिन् , एषः = भवत्समीपतरवर्ती, अहं=सुग्रीवः, सम्प्रति = अधुना, शोकच्छिदः = मन्युनिवारणशीलान् , वीरान् = शूरान् , धराशैलसमुद्राणां = पृथिवीपर्वतसागराणाम्, अन्तगान् = सीमागामुकान् , वानरान् = कपीन् , प्रहिणोमि = प्रस्थापयामि ।

ॐव्युत्पत्तिःॐ शोकच्छिदः—शोकं छिन्दन्तीति तान् "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इति क्विप्, तस्य सर्वापहारी लोपः । वीरान्—वीरयन्तीति वीरास्तान्, "शूर वीर विक्रान्तौ" इति धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति पचादित्वादच्, "शूरो वीरश्च विक्रान्त" इत्यमरः । धराशैलसमुद्राणां—धरा च शैलाश्च समुद्राश्च धराशैलसमुद्रास्तेषां, "चार्थे द्वन्द्वः" इति समासः । "धरासमुद्रशैलानाम्" इति पाठान्तरम् । अन्तगान्—अन्तं गच्छन्तीत्यन्यगास्तान् , "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" इति डप्रत्ययः । प्रहिणोमि—प्रपूर्वकात् "हि गतौ वृद्धौ चे"ति धातोर्लट् , "हिनुमीना" इति णत्वम् ।

ॐभाषार्थःॐ हे प्रभो ! यह मैं अभी शोकको हटानेवाले, वीर और पृथ्वी, पर्वत तथा समुद्रकी सीमा तक जानेवाले वानरोंको भेजता हूं ॥ २७ ॥

अथ निरधिकारकृतः ।

**राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः ॥**
**सर्ववानरसेनानामाश्वागमनमादिशत् ॥ २८ ॥**

**अन्वयः**—ततो राघवस्य कार्यं कारुः वानरपुङ्गवः सर्ववानरसेनानाम् आशु आगमनम् आदिशत् ।

**व्याख्या**—ततः = कथनाऽनन्तरं, राघवस्य = रामस्य, कार्यं = कृत्यं, सीताऽन्वेषणरूपमित्यर्थः । कारुः = कर्ता, वानरपुङ्गवः = कपिश्रेष्ठः, सुग्रीवः इति भावः । सर्ववानरसेनानां = सकलमर्कटपृतनानाम् , आशु = शीघ्रम् , आगमनम् = आगतिम् , आदिशत् = आदिष्टवान् ।

ॐव्युत्पत्तिःॐ ततः—तस्मादिति, "पञ्चम्यास्तसिल्" इति तसिल् । राघवस्य—रघोरपत्यं पुमान् राघवस्तस्य, "तस्याऽपत्यम्" इत्यण्, "तद्धितेष्वचामादेः" इति आदिवृद्धिश्च । कारुः—करोतीति, "कृपावाजिमिस्वदिसाध्यशूभ्य उण्"

इति औणादिक उण् । एवमाशु इत्यत्राऽपि । वानरपुङ्गवः—पुमांश्चाऽसौ गौः "गोरतद्धितलुकि" इति समासाऽन्तष्टच् । व्युत्पत्तिमात्रमेतत्, पुङ्गवशब्दस्तु प्रधानमाचष्टे, यथाहाऽमरः—"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठाऽर्थगोचराः ॥" इति; वानराणां पुङ्गवः ।

भाषाऽर्थः—अनन्तर रामका कार्य करने वाले सुग्रीवने सब वानरोंकी सेनाको शीघ्र आनेके लिए आज्ञा दी ॥ २८ ॥

**वयमद्यैव गच्छामो रामं द्रष्टुं त्वरान्विताः ।**
**कारका मित्रकार्याणि सीतालाभाय सोऽब्रवीत् ॥ २९ ॥**

**अन्वयः**—सः अब्रवीत्—"सीतालाभाय मित्रकार्याणि कारकाः त्वराऽन्विता वयम् अद्य एव रामं द्रष्टुं गच्छामः" ।

**व्याख्या**—सः = सुग्रीवः, अब्रवीत् = अवदत्, सीतालाभाय = सीतां लब्धुं, मित्रकार्याणि = सखिकृत्यानि, रावणवधादीनीति भावः । कारकाः = करिष्यन्तः, त्वराऽन्विताः = त्वरिताः, वयम्, अद्य एव = अस्मिन्दिन एव, रामं = रामचन्द्रं, द्रष्टुं = साक्षात्कर्तुं, गच्छामः = यामः ।

**व्युत्पत्तिः**—सीतालाभाय—सीतां प्राप्स्याम इति "भाववचनाश्चे"ति क्रियायां क्रियाऽर्थायामुपपदे भविष्यति घञ् । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । मित्रकार्याणि "कारका" इति पदेन योगे प्राप्तायाः कर्मणि षष्ठ्याः "अकेनोर्भविष्यदाधमर्ण्ययोः" इति निषेधाद्द्वितीया । कारकाः—गच्छाम इति क्रिया । तस्यां क्रियायां क्रियाऽर्थायामुपपदे तुमुण्ण्वुलौ भविष्यति काले भवतः । "तुमुण्ण्वुलौ क्रियायां क्रियाऽर्थायाम्" इति ण्वुल् । त्वराऽन्विताः—त्वरयाऽन्विताः, "संभ्रमस्त्वरा" इत्यमरः । द्रष्टुं—"दृशिर् प्रेक्षणे" इति धातोः भविष्यति काले "तुमुण्ण्वुलौ" इत्यादिना तुमुन् । "सृजिदृशोर्झल्यमकिति" इत्यम् ।

**भाषाऽर्थः** सुग्रीवने कहा—"सीताको पानेके लिए मित्रकार्योंको करनेवाले हम लोग शीघ्रता से आज ही रामका दर्शन करने के लिए जाते हैं" ॥ २९ ॥

**ततः कपीनां सङ्घाता हर्षाद्राघवभूतये ।**
**पूरयन्तः समाजग्मुर्भयदाया दिशो दश ॥ ३० ॥**

**अन्वयः**—ततो दश दिशः पूरयन्तो भयदायाः कपीनां सङ्घाताः राघवभूतये हर्षात् समाजग्मुः ।

**व्याख्या**—ततः = सुग्रीवादेशाऽनन्तरं, दश = दशसंख्यकाः दिशः = आशाः, पूरयन्तः = व्याप्नुवन्तः, भयदायाः = भयं दास्याम इति, कपीनां=वानराणां, सङ्घा-

ताः = समूहाः, राघवभूतये = रामस्य काऽपि सम्पत्स्यादिति, हर्षात् = प्रमोदात्, समाजग्मुः = समायाताः ।

॥व्युत्पत्तिः॥ भयदायाः—भयोपपदपूर्वकात् "डुदाञ् दाने" इति धातोः क्रियाऽर्थायां क्रियायाम् "अण्कर्मणि च" त्यण् "आतो युक्चिण्कृतोः" इति युगागमश्च। राघवभूतये—क्रियाऽर्थायां क्रियायामुपपदे "भाववचनाश्चे"ति भविष्यति क्तिन्। हर्षात्—"विभाषा गुणेऽस्त्रियाम्" इति हेतौ पञ्चमी ।

॥भाषाऽर्थः॥ सुग्रीवके आज्ञा देनेके अनन्तर दश दिशाओंको व्याप्त करते हुए (राक्षसोंको) "भय देंगे" ऐसा विचार कर वानरोंके समूह "रामकी कोई सम्पत्ति हो" ऐसा सोच कर हर्षसे आ गये ॥ ३० ॥

सुग्रीवाऽन्तिकमासेदुः सादयिष्याम इत्यरिम् ॥
करिष्यन्त इवाऽकस्माद् भुवनं निर्दशाननम् ॥ ३१ ॥

अन्वयः—"अरिं सादयिष्याम" इति अकस्मात् भुवनं निर्दशाननं करिष्यन्त इव (ते) सुग्रीवाऽन्तिकम् आसेदुः ।

व्याख्या—अरिं = शत्रुं, सादयिष्यामः = व्यापादयिष्यामः, इति = इत्थं, विचार्येति शेषः; अकस्मात् = अतर्कितं यथा तथा, भुवनं = लोकं, निर्दशाननं=रावणरहितं, करिष्यन्त इव = विधास्यन्त इव, (ते = वानराः) सुग्रीवाऽन्तिकं = सुग्रीवसमीपम्, आसेदुः = आगताः ।

॥व्युत्पत्तिः॥—सादयिष्यामः—"आसेदुः" इति क्रियार्थायां क्रियायाम् "लृट् शेषे च" इति चकारात् क्रियाऽर्थायां क्रियायामुपपदे भविष्यति लृट्। निर्दशाननं—निर्गतो दशाननो यस्मात्तत्। करिष्यन्तः—"लृट् शेषे च"इति लृट्। अत्र क्रियाऽर्थायाः क्रियायाः अन्यः शुद्धो भविष्यत्कालः शेषः। आसेदुः-आङुपसर्गपूर्वकात् "षद्लृ विशरणगत्यवसादनेषु" इति धातोर्लिट्।

॥भाषाऽर्थः॥ "शत्रुको मारेंगे" ऐसा विचारकर अकस्मात् जैसे लोकको रावणहीन करेंगे ऐसे वानर सुग्रीव के समीप आ पहुंचे ॥ ३१ ॥

कर्ताऽस्मि कार्यमायातैरेभिरित्यवगम्य सः ॥
काकुत्स्थपादपच्छायां शीतस्पर्शामुपागमत् ॥ ३२ ॥

अन्वयः—स "आयातैः एभिः कार्यं कर्तास्मि" इति अवगम्य शीतस्पर्शां काकुत्स्थपादपच्छायाम् उपागमत् ।

व्याख्या—सः = सुग्रीवः, आयातैः = आगतैः, एभिः = वानरैः, कार्यं=कृत्यं सीताऽन्वेषणादिकर्मिति भावः। कर्तास्मि = विधातास्मि, इति = एवम्, अवगम्य =

ज्ञात्वा, शीतस्पर्शां = शीतलाऽऽमर्शनाम्, अनुद्वेजनकरीमिति भावः । काकुत्स्थपादपच्छायां=रामवृक्षाऽनातपम्, उपागमत=उपगतः ।

※व्युत्पत्तिः※ कर्तास्मि—"अनद्यतने लुट्" इत्यनद्यतने भविष्यति लुट् । शीतस्पर्शां—स्पृश्यत इति स्पर्शः, स्पर्शतन्मात्र इत्यर्थः, "स्पृश संस्पर्शने" इति धातोः "अकर्तरि च कारके संज्ञायाम्" इति घञ्; शीतः स्पर्शो यस्याः सा शीतस्पर्शा, ताम् । काकुत्स्थपादपच्छायां-पद्यन्त इति पादाः, "पदरुजविशस्पृशो घञ्" इति घञ्, पादैः पिबतीति पादपो वृक्षः, "आतोऽनुपसर्गे कः" इति कः, "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः । काकुत्स्थः पादप इवेति काकुत्स्थपादपः, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति समासः । तस्य छाया काकुत्स्थपादपच्छाया, ताम् ।

※भाषाऽर्थः※ सुग्रीव "आये हुए इन वानरोंसे कार्य करूंगा" ऐसा समझकर शीतस्पर्शवाली रामरूप वृक्षकी छायाके पास पहुंचे ॥ ३२ ॥

**कार्यं सारनिभं दृष्ट्वा वानराणां समागमम् ।**
**अवैन्नाशं दशाऽऽस्यस्य निर्वृत्तमिव राघवः ॥३३॥**

**अन्वयः**—राघवो वानराणां समागमं दृष्ट्वा कार्यं सारनिभं दशाऽऽस्यस्य नाशं ( च ) निर्वृत्तम् इव अवैत् ।

**व्याख्या**—राघवः = रामः, वानराणां = कपीनां, समागमं = सम्प्राप्तिं, दृष्ट्वा = विलोक्य, कार्यं = कृत्यं, सारनिभं = सीतालाभतुल्यं, दशाऽऽस्यस्य = रावणस्य, नाशं = विनाशं च, निर्वृत्तम् इव = निष्पन्नम् इव, अवैत् = ज्ञातवान् ।

※व्युत्पत्तिः※ सारनिभं-सरति कालान्तरे तिष्ठतीति कर्तरि कारके "सृ स्थिरे" इति घञ् । सारेण सदृशं, तत् । "सारो बले स्थिरांऽशे च न्याय्ये क्लीबं वरे त्रिषु ।" इति "निभसङ्काशनीकाशप्रतीकाशोपमादयः ।" इति चामरः । दशाऽऽस्यस्य—दश आस्यानि यस्य तस्य । अवैत्-अवपूर्वात् "इण् गतौ" इति धातोर्लङ् ।

※भाषाऽर्थः※ रामने वानरोंका आना देखकर कार्यको सीतालाभ के सदृश और रावणविनाशको भी निष्पन्नके तुल्य जाना ॥ ३३ ॥

अतः परं भावेऽकर्तरि च कारक इत्यधिकृत्य कृदुच्यते—

**ततः कपिसमाहारमेकनिश्चायमागतम् ।**
**उपाध्याय इवाऽऽयामं सुग्रीवोऽध्यापिपद् दिशाम् ॥ ३४ ॥**

**अन्वयः**—ततः सुग्रीव उपाध्याय इव कपिसमाहारम् एकनिश्चायम् आगतं दिशाम् आयामम् अध्यापिपत् ।

**व्याख्या**—ततः = कपिसमागमनाऽनन्तरं, सुग्रीवः = कपीश्वरः, उपाध्याय इव = अध्यापक इव, कपिसमाहारं = वानरसमूहम्, एकनिश्चायम् = एकराशिताम्,

आगत = प्राप्तं, दिशाम् = आशानाम्, आयामं = दैर्घ्यम्, अध्यापिपत् = बोधितवान्, अमुकाऽमुका दिक् ईदृशीति बोधितवानिति भावः।

ॐव्युत्पत्तिःॐ उपाध्यायः—उपेत्य अस्मादधीयत इत्युपाध्यायः, "इङश्च" इति घञ्। उपाध्यायलक्षणं यथा—

"एकदेशं तु वेदस्य वेदाऽङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥" इति।

कपिसमाहारं—"गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ" इति कर्मत्वम्। एकनिश्रायम् "परिमाणाख्यायां सर्वेभ्य" इति घञ्। एकश्चाऽसौ निश्रायस्तं, "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति समासः। अध्यापिपत्—णिजन्तादध्युपसर्गपूर्वकात् "इङ् अध्ययने" इति धातोर्लुङि रूपम्।

ॐभाषाऽर्थःॐ वानरोंके आगमनके अनन्तर सुग्रीवने अध्यापककी तरह वानरों के समूहको एक राशिके भावको प्राप्त दिशाओंकी दीर्घताका बोध कराया॥ ३४॥

**सजलाऽम्भोदसंरावं हनुमन्तं सहाऽङ्गदम्।**
**जाम्बवं नीलसहितं चारुसन्द्रावमब्रवीत्॥ ३५॥**

**अन्वयः**—( सः ) सजलाम्भोदसंरावं सहाऽङ्गदं हनुमन्तं नीलसहितं चारुसन्द्रावं जाम्बवं च अब्रवीत्।

**व्याख्या**—( सः = सुग्रीवः ) सजलाऽम्भोदसंरावं = सतोयमेघध्वनिं, सहाऽङ्गदम् = अङ्गदसहितं, हनुमन्तम् = आञ्जनेयं, नीलसहितं = नीलनामकवानरोपेतं, चारुसन्द्रावं = सुन्दरगतिं, जाम्बवं च=जाम्बवन्तम् ऋक्षराजं च अब्रवीत् = अवदत्।

ॐव्युत्पत्तिःॐ सजलाऽम्भोदसंरावं–जलेन सहितः सजलः, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सहस्य सभावः। अम्भांसि ददातीति अम्भोदः, "आतोऽनुपसर्गे क" इति कः सजलश्चाऽसौ अम्भोदः सजलाऽम्भोदः। संरवणं संरावः समुपसर्गपूर्वकात् "रु शब्दे" इति धातोः "उपसर्गे रुव" इति घञ्। 'आरवाराव-संरावविरावाः" इत्यमरः। सजलाऽम्भोदस्येव संरावो यस्य सः, "सप्तमी विशेषणे बहुव्रीहौ" इति सप्तमीति पदज्ञापितो व्यधिकरणबहुव्रीहिः। सहाऽङ्गदम्–अङ्गदेन ( वालिपुत्रेण ) सहितम्, वैकल्पिकत्वात्पक्षे सभावाऽभावः। चारुसन्द्रावं—सन्द्रवणं सन्द्रावः, समुपसर्गपूर्वकात् "द्रु गतौ" इति धातोः "समि युद्रुदुवः" इति घञ्। चारुः सन्द्रावो यस्य तम्। काकाऽक्षिगोलकन्यायेन देहलीदीपन्यायेन वा चारुसन्द्रावपदस्य हनुमति जाम्बवति च सम्बन्धो न्याय्यः।

ॐभाषाऽर्थःॐ—सुग्रीवने जलयुक्त मेघके सदृश शब्दवाले अङ्गदसे युक्त हनुमान्को और नील युक्त सुन्दर गतिवाले जाम्बवान् को भी कहा॥ ३५॥

कुलकम् ३६—४०

**यात यूयं यम-श्रायं दिशं नायेन दक्षिणाम् ।**
**विक्षावैस् तोय-विश्रावं तर्जयन्तो महोदधेः ॥ ३६ ॥**

**अन्वयः**—( हे वानराः ) यूयं विक्षावैः महोदधेः तोयविश्रावं तर्जयन्तः नायेन यमश्रायं दक्षिणां दिशं यात ।

**व्याख्या**—( हे वानराः ) यूयं, विक्षावैः = स्वैः शब्दैः, महोदधेः = महासागरस्य, तोयविश्रावं = जलध्वनिं, तर्जयन्तः = न्यक्कुर्वाणाः, नायेन = नीत्या, सामादिनेति भावः । यमश्रायं = यमस्थानं, दक्षिणां दिशम् = अवाचीम् , यात = गच्छत ।

ॐव्युत्पत्तिःॐ विक्षावैः—विपूर्वात् "टुक्षु शब्दे" इति धातोः "वौ क्षुश्रुवः" इति कर्मणि घञ्। महोदधेः—महांश्चाऽसौ उदधिस्तस्य, "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति समासः, "आन्महतः समानाऽधिकरणजातीययोः" इति महत आत्वम् । तोयविश्रावं—तोयस्य विश्रावस्तं, पूर्वसूत्रेण घञ्। नायेन—नीयतेऽनेनेति नायस्तेन, "णीञ् प्रापणे" इति धातोः "श्रिणीभुवोऽनुपसर्गे" इति कर्मणि घञ्। यमश्रायं—श्रयत्येनमिति श्रायः, "श्रिञ् सेवायाम्" इति धातोः पूर्वसूत्रेण कर्मणि घञ्। यमस्य श्रायस्तम् ।

ॐभाषाऽर्थःॐ हे वानरों ! तुम लोग अपने शब्दों से महासागर के जलध्वनि को तिरस्कृत करते हुए नीतिसे यमस्थान दक्षिण दिशा को चले जाओ ॥ ३६ ॥

**उन्नायानधिगच्छन्तः प्रद्रावैर् वसुधा-भृताम् ।**
**वनाऽभिलावान् कुर्वन्तः स्वेच्छया चारु-विक्रमाः ॥ ३७ ॥**

**अन्वयः**—हे चारुविक्रमाः प्रद्रावैः वसुधाभृताम् उन्नायान् अधिगच्छन्तः स्वेच्छया वनाऽभिलावान् कुर्वन्तः ( यात ) ।

**व्याख्या**—हे चारुविक्रमाः = हे मनोहरपराक्रमा वानराः, प्रद्रावैः = प्रकृष्टगतिभिः, वसुधाभृतां = पर्वतानाम् , उन्नायान् = उच्चत्वानि, अधिगच्छन्तः=जानन्तः, स्वेच्छया = आत्मवाञ्छया, वनाऽभिलावान् = काननविध्वंसान् , कुर्वन्तः = विदधतः सन्तः, यातेति शेषः ।

ॐव्युत्पत्तिःॐ चारुविक्रमाः—चारुर्विक्रमो येषां ते, तत्सम्बोधने । प्रद्रावैः—"प्रे द्रुस्तुस्रुवः" इति घञ्। वसुधाभृतां—वसुधां बिभ्रतीति वसुधाभृतस्तेषां, "क्विप् चे"ति क्विप् , तुगागमश्च । उन्नायान्—"अवोदोर्नियः" इति भावे घञ्। "उन्नाय उन्नये" इत्यमरः । वनाऽभिलावान्—"निरभ्योः पूल्वोः" इति अभ्युपसर्गपूर्वकात् "लूञ् छेदने" इति धातोर्भावे घञ्।

ॐभाषाऽर्थःॐ हे मनोहर पराक्रमवाले वानरों ! उत्कृष्ट गतियोंसे पर्वतोंकी ऊंचाई जानते हुए तुम लोग अपनी इच्छा से वनविध्वंस करते हुए जाओ ॥ ३७ ॥

सदोद्गार-सुगन्धीनां फलानामलमाशिताः ॥
उत्कारेषु च धान्यानामनभीष्ट-परिग्रहाः ॥ ३८ ॥

अन्वयः—सदा उद्गारसुगन्धीनां फलानाम् अलम् आशिताः, धान्यानाम् उत्कारेषु च अनभीष्टपरिग्रहाः ( यूयं यात )।

व्याख्या—सदा = सर्वदा, उद्गारसुगन्धीनाम् = उद्गारे ( भक्षणाऽनन्तरं श्वसनपूर्वके शब्दोच्चारणे ) सुगन्धीनां मनोहरगन्धयुक्तानाम् , फलानां = पनसाआदीनाम् , अलं = पर्याप्तम् , आशिताः = प्राक् भक्षयितारः, धान्यानां = शस्यानाम् , उत्कारेषु च = राशिषु, च, अनभीष्टपरिग्रहाः = अनभिलाषुकाः ( एतादृशाः यूयं यातेति शेषः )।

ॐव्युत्पत्तिःॐ सदा—सर्वस्मिन्काले, "सर्वैकाऽन्यकिंयत्तदः काले दा" इति दाप्रत्ययः। "सर्वस्य सोऽन्यतरस्यां दि" इति सर्वशब्दस्य वैकल्पिकः सभावः, पक्षान्तरे सर्वदा। उद्गारसुगन्धीनि—उद्गरणमुद्गारः, उदुपसर्गपूर्वकात् "गॄ शब्दे" इति धातोः "उन्न्योर्ग्रः" इति घञ्। उद्गारे सुगन्धीनाम् "आशिता" इति पदेन योगे "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी। आशिता—आङ्पूर्वात् "अश भोजने" इति धातोः "आदिकर्मणि क्तः कर्तरि च" इति कर्तरि क्तः। उत्कारेषु—उदुपसर्गपूर्वकात् "कॄ विक्षेपे" इति धातोः "कॄ धान्ये" इति कर्मणि घञ्। अनभीष्टपरिग्रहाः—अनभीष्टः परिग्रहो येषां ते।

ॐभाषाऽर्थःॐ सर्वदा उद्गारमें सुगन्धि फलोंको पर्याप्त खानेवाले और धान्यराशियोंमें अभिलाष न करनेवाले तुमलोग जाओ ॥ ३८ ॥

संस्तावमिव शृण्वन्तश् छन्दोगानां महाध्वरे ॥
शिञ्जितं मधु-लेहानां पुष्प-प्रस्तार-शायिनाम् ॥ ३९ ॥

अन्वयः—महाध्वरे छन्दोगानां संस्तावम् इव पुष्पप्रस्तारशायिनां मधुलेहानां शिञ्जितं शृण्वन्तः ( यूयं यात )।

व्याख्या—महाऽध्वरे = महायज्ञे, छन्दोगानां = सामवेदिनां, संस्तावम् इव= सम्भूय स्तवनमिव, पाठध्वनिविशेषमिव वा। पुष्पप्रस्तारशायिनां = कुसुमशय्यास्वापिनां, मधुलेहानां = भ्रमराणां, शिञ्जितं = शब्दं, शृण्वन्तः = आकर्णयन्तः सन्तः ( यूयं यात )।

ॐव्युत्पत्तिःॐ छन्दोगानां—छन्दो गायन्तीति छन्दोगास्तेषां, "गै शब्दे" इति

धातोः "गापोष्टक्" इति टक्। संस्तावं—"यज्ञे समि स्तुवः" इति घञ्। पुष्पप्रस्तारशायिनां—प्रोपसर्गपूर्वकात् स्तॄ धातोः "प्रे स्त्रोऽयज्ञे" इति घञि प्रस्तारः। पुष्पाणां प्रस्तारस्तस्मिन् शेरते तच्छीलास्तेषां, "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः। मधुलेहानां—"लिह आस्वादने" इति धातोः "भावे" इति घञि लेहः। मधु लेहः (आहारः) येषां तेषाम्। "जग्धिस्तु भोजनम्। जेमनं लेह आहारो निघसो न्याद इत्यपि।" इत्यमरः।

॥भाषाऽर्थः॥ महायज्ञमें सामवेदियोंके पाठध्वनिविशेषके तुल्य, फूलोंकी शय्यामें सोनेवाले भ्रमरोंके शब्दको सुनते हुए तुमलोग जाओ ॥ ३९ ॥

**आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः ॥**
**स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितम् ॥ ४० ॥**

**अन्वयः**—(हे वानराः!) दक्षिणोदधेः अम्भसां विस्तारम् आलोचयन्तो मुष्टिसंग्राहपीडितं फलरसं स्वादयन्तः (यूयं यात)।

**व्याख्या**—दक्षिणोदधेः = दक्षिणसमुद्रस्य, अम्भसां = जलानां, विस्तारं = विस्तीर्णताम्, आलोचयन्तः = निरूपयन्तः, मुष्टिसंग्राहपीडितं = हस्तगृहीतं, फलरसं = फलास्वादं, स्वादयन्तः = अनुभवन्तः सन्तः (यूयं यात)।

॥व्युत्पत्तिः॥ विस्तारं—विस्तरणं विस्तारस्तं, विपूर्वकात् "स्तृञ् आच्छादने" इति धातोः "प्रथने वावशब्दे" इति घञ्, "विस्तारो विग्रहो व्यासः" इत्यमरः। मुष्टिसंग्राहपीडितं—संपूर्वकात् "ग्रह उपादाने" इति धातोः "समि मुष्टौ" इति घञि संग्राहः, मुष्टेर्दृढग्रहणमित्यर्थः। भावे मुष्टिविषये व्युत्पादितत्वान्मुष्टिग्रहणमभिव्यक्त्यर्थं ज्ञातव्यम्।

॥भाषाऽर्थः॥ हे वानरो! दक्षिण सागरके जलकी विस्तीर्णताका निरूपण करते हुए तुमलोग हाथसे पीडित फलरसको चखते हुए जाओ ॥ ४० ॥

**न्याय्यं यद् यत्र तत् कार्यं पर्यायेणाऽविरोधिभिः ॥**
**निशोपशायः कर्तव्यः फलोच्चायश्च संहतैः ॥ ४१ ॥**

**अन्वयः**—अविरोधिभिः (युष्माभिः) यत् यत्र न्याय्यं तत् कार्यं पर्यायेण निशोपशायः संहतैः (युष्माभिः) फलोच्चायश्च कर्तव्यः।

**व्याख्या**—अविरोधिभिः = अविरोधशीलैः, (युष्माभिः) यत् = कार्यं, यत्र = यस्मिन्स्थाने, न्याय्यं = न्यायादनपेतं, तत् = कार्यं, कार्यं = कर्तव्यम्। पर्यायेण = परिपाट्या, निशोपशायः = निशायाम् (रात्रौ) उपशायः (पर्यायशयनम्), संहतैः = मिलितैः, (युष्माभिः) फलोच्चायश्च = फलानां हस्तेनाऽऽदानं च, कर्तव्यः = विधातव्यः।

☸व्युत्पत्तिः☸ निपूर्वात् "इण्गतौ" इति धातोः "परिन्योर्नीणोर्द्यूताभ्रेषयोः" इति अभ्रेषे घञ्, एषोऽत्र न्याय उचितमित्यर्थः; न्याय्यं न्यायादनपेतं, "धर्मपथ्यर्थ-न्यायादनपेते" इति यत्। कार्यं—कर्तुं योग्यम् "ऋहलोर्ण्यत्" इति ण्यत्। पर्यायेण—परिपूर्वकात् इण्धातोः "परावनुपात्यय इणः" इति भावे घञ्। क्रमप्राप्तस्याऽनतिपातोऽनुपात्ययः। निशोपशायः—उपपूर्वकात् "शीङ् स्वप्ने" इति धातोः "व्युपयोः शेतेः पर्याये" इति घञि उपशायः, निशायामुपशायः। फलोच्चायः—उदुपसर्ग पूर्वकात् "चिञ् चयने" इति धातोः "हस्तादाने चेरस्तेये" इति घञ्, हस्ताऽऽदानं चाऽऽदेयस्य प्रत्यासत्तिः।

☸भाषाऽर्थः☸—अविरोधशील होकर तुम लोगोंको जो जहांपर न्यायपूर्ण कार्य है, वह करना चाहिए और पारी पारीसे रातको सोना एवम् मिलकर हाथसे फलोंको लेना चाहिए ॥ ४१ ॥

**सीता रक्षो निकायेषु स्तोककायैश्छलेन च ॥**
**मृग्या शत्रुनिकायानां व्यावहासीमनाश्रितैः ॥ ४२ ॥**

**अन्वयः**—शत्रुनिकायानां व्यावहासीम् अनाश्रितैः छलेन स्तोककायैः (युष्माभिः) रक्षोनिकायेषु सीता मृग्या।

**व्याख्या**—शत्रुनिकायानाम्=अरिसमूहानां, व्यावहासीं=परस्परहसनम्, अनाश्रितैः = अनवलम्बितैः छलेन = छद्मना, स्तोककायैः = अल्पशरीरैः, ( युष्माभिः ) रक्षोनिकायेषु = राक्षसनिवासेषु, सीता = जानकी, मृग्या = अन्वेषणीया।

☸व्युत्पत्तिः☸ शत्रुनिकायानां—निचीयन्त इति निकायाः, "सङ्घे चाऽनौत्तराधर्ये" इति कर्मणि घञ्, आदेश्च ककारः। शत्रूणां निकायास्तेषाम्। व्यावहासीं—व्यवपूर्वाद्धसधातोः "कर्मव्यतिहारे णच् स्त्रियाम्" इति स्त्रीलिङ्गे भावे णच्, ततः "णचः स्त्रियामञ्" इत्यञ् स्वार्थिकः "न कर्मव्यतिहारे" इति ऐजभावः, "टिड्ढाणञ्"त्यादिना ङीप्। स्तोककायैः—चिन्वन्ति अस्माच्छुभमिति कायः, "निवासे"—त्यादिना शरीरेऽर्थे घञ्, आदेश्च कः। "कायो देहः क्लीवपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः।" इत्यमरः। स्तोकः कायो येषां ते। रक्षोनिकायेषु-निचीयते स्थानम् एषु ते निकायाः, पूर्वसूत्रेण निवासेऽर्थे अधिकरणे घञ्, आदेश्च कः। रक्षसां निकायेषु। मृग्या—मृगयितुं योग्या, "मृग अन्वेषणे" इति धातोः "ऋहलोर्ण्यत्" इति ण्यत्।

भाषाऽर्थः☸ शत्रुसमूहमें परस्पर हास्यको न करते हुए, छलसे अल्पशरीर धारणकर राक्षसके निवासस्थानोंमें तुमलोगोंको सीताका अन्वेषण करना चाहिए ॥ ४२ ॥

**सांराविणं न कर्तव्यं यावन्नायाति दर्शनम्।**
**संदृष्टायां तु वैदेह्यां निग्राहो वोऽर्थवानरेः ॥ ४३ ॥**

**अन्वयः**—यावत् ( सीता ) दर्शनं न आयाति, ( तावत् ) सांराविणं न कर्तव्यम्, वैदेह्यां संदृष्टायां तु वः अरेः निग्राहः अर्थवान्।

**व्याख्या**—यावत् = यत्कालपर्यन्तं ( सीता = जानकी ) दर्शनं = विलोकनं, न आयाति = न प्राप्नोति ( तावत् = तत्कालपर्यन्तम् ), सांराविणम् = अभिव्याप्त्या भाषणं, न कर्तव्यं = नो विधातव्यम्। वैदेह्यां = सीतायां। संदृष्टायां तु = विलोकितायां तु, वः = युष्माकम्, अरेः = शत्रोः, निग्राहः = आक्रोशः अभिभवलक्षणः, अर्थवान् = सफल इति भावः।

ॐव्युत्पत्तिःॐ यावत्—"यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः। सांराविणं संपूर्वकात् "रु शब्दे" इति धातोः "अभिविधौ भाव इनुण्" इति भाव इनुण् तदन्तात् "अणिनुणः" इत्यण्, ततो "नस्तद्धिते" इति टिलोपे प्राप्ते "इनण्यनपत्ये" इति इनः प्रकृतिभावः। इदमणिनुणन्तं स्वभावतो नपुंसकम्। वैदेह्यां—विदेहानां राज्ञामपत्यं स्त्री वैदेही, तस्यां, "तस्याऽपत्यम्" इत्यण्, "टिड्ढे"त्यादिना ङीप्। वः—"बहुवचनस्य वस्नसौ इति वसादेशः। निग्राहः—निपूर्वात् ग्रहधातोः, "आक्रोशेऽवन्योर्ग्रहः" इति घञ्। अर्थवान्—अर्थोऽस्याऽस्तीति मतुप्।

ॐभाषाऽर्थःॐ जब तक सीता देखनेमें न आवें, तब तक उच्च ध्वनिसे भाषण न करना चाहिए, सीताजीको देखनेके अनन्तर तो तुम लोगोंका शत्रुके प्रति आक्रोश सफल है॥ ४३॥

**प्रग्राहैरिव पात्राणामन्वेष्या मैथिली कृतैः।**
**ज्ञातव्या चेङ्गितैर्धर्म्यैर्ध्यायन्ती राघवाऽऽगमम्॥ ४४॥**

**अन्वयः**—कृतैः पात्राणां प्रग्राहैः इव मैथिली अन्वेष्या, धर्म्यैः इङ्गितैः राघवाऽऽगमं ध्यायन्ती ज्ञातव्या च।

**व्याख्या**—कृतैः = विहितैः, पात्राणां = भिक्षाभाजनानां, प्रग्राहैः इव = उपादानैः इव, भिक्षुकवेषैरिव युष्माभिरिति भावः। मैथिली = सीता, अन्वेष्या = गवेषणीया, धर्म्यैः=धर्मादनपेतैः, इङ्गितैः=चेष्टितैः, राघवाऽऽगमं=रामाऽऽगमनं, ध्यायन्ती= चिन्तयन्ती, ज्ञातव्या च=बोद्धव्या च, युष्माभिरिति शेषः।

ॐव्युत्पत्तिःॐ पात्राणां—"प्रग्राहैः" इति पदेन योगे कर्मणि षष्ठी। प्रग्राहैः—"प्रे लिप्सायाम्" इति भावे घञ्। धर्म्यैः—"धर्मपथ्यर्थन्यायादनपेते" इति यत्। राघवाऽऽगमं—राघवस्यागमस्तं, आङ्पूर्वकाद्गम्लृ धातोः "ग्रहवृदृनिश्चिगमश्च" इत्यप्। ध्यायन्ती—ध्यायतीति, "ध्यै चिन्तायाम्" इति धातोः लटः शत्रादेशस्तदन्तात् "उगितश्चे"ति ङीप्। ज्ञातव्या—ज्ञातुं योग्या, "ज्ञा अवबोधने" इति धातोस्तव्यप्रत्ययः।

ॐभाषाऽर्थःॐ हे वानरो ! भिक्षुकके सदृश वेष धारणकर तुम लोगोंको सीताका

अन्वेषण करना चाहिए और धर्मपूर्ण चेष्टाओंसे रामके आगमनकी चिन्ता करनेवाली सीताको पहचानना चाहिए ॥ ४४ ॥

**वेदिवत् सपरिग्राहा यज्ञियैः संस्कृता द्विजैः ।**
**दृश्या मासतमादह्नः प्रागनिन्दितवेशभृत् ॥ ४५ ॥**

**अन्वयः**—यज्ञियैः द्विजैः वेदिवत् सपरिग्राहा संस्कृता अनिन्दितवेशभृत् ( सा ) मासतमात् अह्नः प्राक् दृश्या ।

**व्याख्या**—यज्ञियैः = यज्ञकर्माऽर्हैः, द्विजैः = ब्राह्मणैः, वेदिवत् = यज्ञस्थलीव, सपरिग्राहा = परिगृहीता, संस्कृता = कृतसंस्कारा, अनिन्दितवेशभृत् = अविगीतनेपथ्यधारिणी, मङ्गलमात्राऽऽभरणेति भावः । ( सा = सीता ) मासतमात् = मासस्य पूरणात्, अह्नः=दिवसात्, प्राक् = प्रथमं, दृश्या = दर्शनाऽर्हा, सीताऽन्वेषणाय मासाधिककालो न यापनीय इति भावः ।

*व्युत्पत्तिः* यज्ञियैः—यज्ञमर्हन्तीति यज्ञियास्तैः, "यज्ञर्त्विग्भ्यां घखञौ" इति घप्रत्ययः, "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति घस्य इयः । द्विजैः—द्विर्जायन्त इति द्विजास्तैः, "अन्येष्वपि दृश्यते" इति डः । वेदिवत्—वेद्या तुल्यं, वतिप्रत्ययः । "वेदिः परिष्कृता भूमिः" इत्यमरः । सपरिग्राहा—परिपूर्वात् ग्रह धातोः "परौ यज्ञे" इति यज्ञे घञ्, परिग्राहः स्फ्येन वेदेः स्वीकरणम्, परिग्राहेण सहिता । अनिन्दितवेशभृत्— अनिन्दितवेशं बिभर्तीति क्विप्प्रत्ययः । मासतमात्—मासस्य पूरणं मासतमं, तस्मात् "नित्यं शतादिमासाऽर्धमाससंवत्सराच्च" इति तमट् । मासादेरत एव डट् ।

*भाषाऽर्थः* यज्ञ कर्मके योग्य ब्राह्मणोंसे यज्ञभूमिकी सदृश परिगृहीत, संस्कारयुक्त और अनिन्दित वेशको धारण करनेवाली सीताको, तुमलोगोंको मास पूरा होनेके पहले देखना चाहिए ॥ ४५ ॥

**नीवारफलमूलाऽशानृषीनप्यतिशेरते ।**
**यस्या गुणा निरुद्द्रावास्तां द्रुतं यात पश्यत ॥ ४६ ॥**

**अन्वयः**—निरुद्द्रावा यस्या गुणा नीवारफलमूलाऽशान् ऋषीन् अपि अतिशेरते, तां द्रुतं यात; पश्यत ।

**व्याख्या**—( हे वानराः ! ) निरुद्द्रावाः=स्थिराः, यस्याः=सीतायाः, गुणाः = ब्रह्मचर्यादयः, नीवारफलमूलाऽशान् = मुन्यन्नफलमूलभक्षकान्, ऋषीन् अपि=मन्त्रद्रष्टॄन् अपि, अतिशेरते = न्यक्कुर्वते, तां = सीतां, द्रुतं = शीघ्रं, यात = गच्छत, पश्यत च = अवलोकयत च, यूयमिति शेषः ।

ॐव्युत्पत्तिःॐ निरुद्द्रावाः—उद्द्रवणमुद्द्रावः, उदुपसर्गपूर्वकात् "द्रु गतौ" इति धातोः "उदि श्रयतियौतियूद्रुवः" इति घञ् । निर्गत उद्द्रावो येभ्यस्ते । नीवारफल-मूलाऽशान्—निव्रियन्त इति नीवाराः, अकृष्टपच्यधान्यानि, निपूर्वात् "वृञ् वरण" इति धातोः "नौ वृ धान्ये" इति घञ्, "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्युपस-र्गस्य दीर्घत्वम् । "तृणधान्यानि नीवारा" इत्यमरः । नीवारफलमूलानि अश्नन्तीति नीवारफलमूलाशास्तान्, "कर्मण्यण्" इत्यण् ।

ॐभाषाऽर्थःॐ हे वानरों ! जिन ( सीता ) के स्थिर गुण नीवार, फल, मूल खाने वाले ऋषियोंको भी तिरस्कृत करते हैं, उन ( सीता ) के पास शीघ्र जाओ और देखो ॥ ४६ ॥

**उच्छ्राय—वान् घनाऽऽरावो वानरं जलदाऽऽरवम् ।**
**दूराऽऽप्लावं हनूमन्तं रामः प्रोचे गजाऽऽप्लवः ॥ ४७ ॥**

**अन्वयः**—उच्छ्रायवान् घनाऽऽरावो गजाऽऽप्लवो रामो जलदाऽऽरवं दूराऽऽ-प्लावं हनूमन्तं वानरं प्रोचे ।

**व्याख्या**—उच्छ्रायवान् = उन्नतियुक्तः, उन्नत इत्यर्थः । घनाऽऽरावः = मेघ-शब्दः, गजाऽऽप्लवः = हस्तिगमनः, रामः = रामचन्द्रः, जलदाऽऽरवं = मेघशब्दं, दूराऽऽप्लावं = विप्रकृष्टोद्गमनं, हनूमन्तं = हनूमन्नामकं, वानरं = कपिं, प्रोचे = अकथयत् ।

ॐव्युत्पत्तिःॐ उच्छ्रायवान्–उत्पूर्वकात् "श्रिञ् सेवायाम्" इति धातोः "उदि-श्रयती"त्यादिना घञि उच्छ्रायः, सोऽस्याऽस्तीति, मतुप्प्रत्ययः, मस्य वश्च । घनाऽऽ-रावः–आङ्पूर्वकात् "रु शब्दे" इति धातोः "विभाषाऽऽङि रुप्लुवोः" इति भावे घञि आरावः । "आरवारावसंरावविरावाः" इत्यमरः । घनस्येवाऽऽरावो यस्य । गजाप्लवः–आङि उपपदे "प्लुङ् गतौ" इति धातोः "ऋदोरप्" इत्यपि आप्लवः, गजस्येव आप्लवः ( गमनम् ) यस्य सः । जलदाऽऽरवम् = पूर्वसूत्रेण अप्प्रत्यये आरवः, जलद-दस्येव आरवो यस्य तम् । दूराऽऽप्लावं—"विभाषा ङी"त्यादिना घञि आप्लावः, दूरात् आप्लावो यस्य तम् ।

ॐभाषाऽर्थःॐ उन्नत, मेघके सदृश शब्दवाले और हाथीकी तरह चलनेवाले रामचन्द्रजीने मेघसदृश शब्दवाले और दूरसे कूदनेवाले हनूमान् नामके वानर को कहा ॥ ४७ ॥

**अवग्राहे यथा वृष्टं प्रार्थयन्ते कृषीवलाः ।**
**प्रार्थयध्वं तथा सीतां यात सुग्रीवशासनात् ॥ ४८ ॥**

**अन्वयः**—कृषीवला अवग्राहे यथा वृष्टिं प्रार्थयन्ते, तथा ( यूयम् ) सीतां प्रार्थयध्वं, सुग्रीवशासनात् यात ॥

व्याख्या—कृषीवलाः = कृषकाः, अवग्राहे = वृष्टिप्रतिबन्धे, यथा = येन प्रकारेण, वृष्टिं = वर्षं, प्रार्थयन्ते = आकाङ्क्षन्ति; तथा = तेन प्रकारेण, (यूयम्) सीतां = मैथिलीं, प्रार्थयध्वम् = आकाङ्क्षत, सुग्रीवशासनात् = सुग्रीवादेशात्, यात=गच्छत।

॥व्युत्पत्तिः॥ कृषीवलाः—कृषिरस्ति येषां ते, "रजःकृष्यासुतिपरिषदो वलच्" इति वलच्, "वले" इति दीर्घः। "क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः" इत्यमरः। अवग्राहे—"अवे ग्रहो वर्षप्रतिबन्धे" इति घञ्। "तद्विघाते अवग्राहाऽवग्रहौ समौ" इत्यमरः।

॥भाषाऽर्थः॥ कृषकलोग वृष्टि में प्रतिबन्ध ( रुकावट ) होने पर जिस तरह वृष्टि की इच्छा करते हैं, उसी तरह तुमलोग सीता को पाने की इच्छा करो, अतः सुग्रीव की आज्ञासे जाओ ॥ ४८ ॥

**वणिक् प्रग्राहवान् यद्वत् काले चरति सिद्धये।**
**देशाऽपेक्षास्तथा यूयं याताऽऽदायाऽङ्गुलीयकम् ॥ ४९ ॥**

अन्वयः—प्रग्राहवान् वणिक् यद्वत् काले सिद्धये चरति, तथा यूयम् अङ्गुलीयकम् आदाय देशाऽपेक्षाः सन्तो यात।

व्याख्या—प्रग्राहवान् = तुलासूत्रवान्, वणिक् = सार्थवाही, यद्वत् = यथा, काले = उचितसमये, सिद्धये = क्रियासाफल्याय, चरति = गच्छति, तथा = तेन प्रकारेण, यूयं = वानरा भल्लूकाश्च, अङ्गुलीयकम् = ऊर्मिकाम्, आदाय = गृहीत्वा, देशाऽपेक्षाः सन्तः = जनपदाऽपेक्षिणः सन्तः, यात = गच्छत, सीताऽन्वेषणार्थमिति शेषः।

॥व्युत्पत्तिः॥ प्रग्राहवान्—तुला प्रगृह्यते येन सूत्रेण स प्रग्राहः, "प्रे वणिजाम्" इति करणे घञ्। "तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च" इत्यमरः। प्रग्राहोऽस्याऽस्तीति 'मतुप्'। वणिक्—"वैदेहकः सार्थवाही नैगमो वाणिजो वणिक्" इत्यमरः। सिद्धये "तादर्थ्ये चतुर्थी वाच्या" इति चतुर्थी। अङ्गुलीयकम् अङ्गुलौ भवम्, "जिह्वामूलाऽङ्गुलेश्छः" इति छः, छस्येयः, स्वाऽर्थे कन्। "अङ्गुलीयकमूर्मिका" इत्यमरः।

॥भाषाऽर्थः॥ तुलासूत्रको लेने वाला बनिया जिस तरह उचित कालमें क्रयसाफल्यके लिए विचरता है उसी तरह तुमलोग अंगूठी को ले कर अनेक देशोंकी अपेक्षा करते हुए ( सीता के अन्वेषण के लिए ) जाओ ॥ ४९ ॥

**अभिज्ञानं गृहीत्वा ते समुत्पेतुर्नभस्तलम्।**
**वाजिनः स्यन्दने भानोर्विमुक्तप्रग्रहा इव ॥ ५० ॥**

अन्वयः—ते अभिज्ञानं गृहीत्वा भानोः स्यन्दने विमुक्तप्रग्रहा वाजिन इव नभस्तलं समुत्पेतुः।

**व्याख्या**—ते = वानराः, अभिज्ञानं = चिह्नं, रामाऽङ्गुलीयकमित्यर्थः, गृहीत्वा= आदाय, भानोः = सूर्यस्य, स्यन्दने = रथे, विमुक्तप्रग्रहाः = परित्यक्तनियमरज्जवः, वाजिन इव = अश्वा इव, नभस्तलम् = आकाशतलं, समुत्पेतुः=समुत्पतिताः ।

**॥व्युत्पत्तिः॥** गृहीत्वा—"ग्रह उपादाने" इति धातोः "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्ययः । "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणं, "ग्रहोऽलिटि दीर्घः" इति इटो दीर्घः । विमुक्तप्रग्रहाः— "रश्मौ चे" ति वैकल्पिकघञभावपक्षे "ग्रहवृदृनिश्चिगमश्च" इत्यपि प्रग्रहः । विमुक्तः प्रग्रहो येषां ते । उपमाऽलङ्कारः ।

**॥भाषाऽर्थः॥** वे ( वानर ) चिह्न ( अंगूठी ) को लेकर सूर्यके रथमें लगाम छोड़े गये घोड़ोंकी तरह आकाशमें उछले ॥ ५० ॥

**उदक् शतवलिं कोट्या सुषेणं पश्चिमां तथा ।**
**दिशं प्रास्थापयद् राजा वानराणां कृतत्वरः ॥ ५१ ॥**

**अन्वयः**—वानराणां राजा कृतत्वरः ( सन् ) शतवलिं कोट्या उदक् तथा सुषेणं पश्चिमां दिशं प्रास्थापयत् ।

**व्याख्या**—वानराणां = कपीनां, राजा = भूपः, सुग्रीव इत्यर्थः । कृतत्वरः = त्वरायुक्तः सन्, शतवलिं = शतवलिनामकं वानरं, कोटया = कोटिसंख्यकैर्वानरैः सह, उदक् = उदीचीं दिशं, तथा = तेन प्रकारेण, सुषेणं = सुषेणनामकं वानरं, पश्चिमां दिशं=प्रतीचीं, प्रास्थापयत्=प्रस्थापितवान् ।

**॥व्युत्पत्तिः॥** कृतत्वरः—कृता त्वरा येन सः । "सम्भ्रमस्त्वरा" इत्यमरः । कोटया= "सहयुक्तेऽप्रधाने" इति विनाऽपि सहाऽर्थकपदं सहार्थे गम्ये तृतीया । उदक्—उदीचीशब्दात्प्रथमाऽन्तात् "दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" इति अस्तातिः । तस्य "अञ्चेर्लुक्" इति लुक्, "लुक् तद्धितलुकि" इति स्त्रीप्रत्ययस्य लुक् । तस्मिन्निवृत्ते भसंज्ञाऽभावादीत्वमपि निवर्तते । "तद्धितश्चाऽसर्वविभक्तिः इत्यव्ययत्वाद्द्वितीयालुक् । प्रास्थापयत्—प्रपूर्वकस्य "ष्ठा गतिनिवृत्तौ" इति धातोर्ण्यन्तस्य लङि रूपम् ।

भाषाऽर्थः—वानरोंके राजा ( सुग्रीव ) ने शीघ्रता करते हुए करोड़ों वानरोंके साथ शतवलि नामक वानरको उत्तरकी ओर तथा सुषेण नामके वानरको पश्चिम दिशाकी ओर भेजा ॥ ५१ ॥

**प्राचीं तावद्भिरव्यग्रः कपिभिर्विनतो ययौ ।**
**अप्रग्राहैरिवाऽऽदित्यो वाजिभिर्दूरपातिभिः ॥५२॥**

**अन्वयः**—अप्रग्राहैः दूरपातिभिः वाजिभिः आदित्य इव तावद्भिः कपिभिः अव्यग्रः विनतः प्राचीं ययौ ।

**व्याख्या**—अप्रग्राहैः = नियमरज्जुरहितैः, मुक्तबन्धनैरिति भावः । दूरपातिभिः = विप्रकृष्टयामिभिः, वाजिभिः = अश्वैः, आदित्य इव = सूर्य इव, तावद्भिः= तत्परिमाणैः, एककोटिसंख्यकैरिति भावः । कपिभिः = वानरैः सह, अव्यग्रः = अनाकुलः, विनतः = प्रणतः, सुग्रीव इति भावः । प्राचीं=पूर्वां दिशं ययौ = जगाम ।

॥व्युत्पत्तिः॥ अप्रग्राहैः—"रश्मौ च" इति घञि प्रग्राहः, अविद्यमानः प्रग्राहो येषां ते, तैः, "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति नञ्बहुव्रीहिः । दूरपातिभिः—दूरं पतन्तीति तच्छीलास्तैः, ताच्छील्ये णिनिः । वाजिभिः—"वाजिवाहाऽर्वगन्धर्वहयसैन्धवसप्तय" इत्यमरः । आदित्यः—अदितेरपत्यं पुमान्, "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यः । तावद्भिः—तत्परिमाणमेषां ते तावन्तः, तैः "यत्तदेतेभ्यः परिमाणे वतुप्" इति वतुप्प्रत्ययः ।

॥भाषाऽर्थः॥ बन्धनसे मुक्त और दूर जानेवाले घोड़ोंसे जैसे सूर्य जाते हैं, उसी तरह करोड़ों वानरोंके साथ आकुल न होकर प्रणत सुग्रीवजी पूर्व दिशाको चले ॥ ४२ ॥

ययुर्विन्ध्यं शरन्मेघैः प्रावारैः प्रवरैरिव ।
प्रच्छन्नं मारुतिप्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः ॥ ४३ ॥

**अन्वयः**—मारुतिप्रष्ठाः प्लवङ्गमाः सीतां द्रष्टुं प्रवरैः प्रावारैः इव शरन्मेघैः प्रच्छन्नं विन्ध्यं ययुः ॥

**व्याख्या**—मारुतिप्रष्ठाः = हनूमदग्रेसराः, प्लवङ्गमाः = वानराः, सीतां = जानकीं, द्रष्टुं = विलोकयितुं, प्रवरैः = श्रेष्ठैः, प्रावारैरिव = उत्तरासङ्गैरिव, शरन्मेघैः = शारदबलाहकैः,प्रच्छन्नम् = आच्छादितं, विन्ध्यं = विन्ध्यपर्वतं, ययुः = जग्मुः ।

॥व्युत्पत्तिः॥ मारुतिप्रष्ठाः—प्रतिष्ठते गच्छतीति प्रष्ठः, प्रपूर्वात् "ष्ठा गतिनिवृत्तौ" इति धातोः "आतश्चोपसर्गे" इति कप्रत्यय आतो लोपः । "पुरोगाऽग्रेसरप्रष्ठाऽग्रतःसरपुरःसराः" इत्यमरः । मारुतिः प्रष्ठो येषां ते । प्लवङ्गमाः—प्लवेन ( प्लुत्या ) गच्छन्तीति, "गमश्चे"ति खच्, "अरुर्द्विषदजन्तस्य मुम्" इति मुम्, "कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः" इत्यमरः । प्रवरैः—वृधातोरनाच्छादने "ग्रहवृदृनिश्चिगमश्चे"ति अप् । "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये" इत्यमरः । प्रावारैः—प्रव्रियते एभिरिति प्रावारास्तैः, प्रपूर्वात् "वृञ् वरणे" इति धातोराच्छादने "वृणोतेराच्छादने" इति घञ् । "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घत्वं च । "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा" इत्यमरः ।

※भाषाऽर्थः※ हनूमान् आदि वानर सीताजीको देखनेके लिए श्रेष्ठ दुपट्टोंके सदृश शरद् ऋतुके मेघोंसे आच्छादित विन्ध्यपर्वतको चले ॥ ५३ ॥

**परिभावं मृगेन्द्राणां कुर्वन्तो नगमूर्धसु ।**
**विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे ॥ ५४ ॥**

**अन्वयः**—तिग्मांऽशुमार्गस्य परिभवोपमे विन्ध्ये नगमूर्धसु मृगेन्द्राणां परिभावं कुर्वन्तः चेरुः ।

**व्याख्या**—तिग्मांऽशुमार्गस्य = सूर्यवर्त्मनः, परिभवोपमे = तिरस्कारोपमे, अत्युच्चत्वादिति भावः । विन्ध्ये = विन्ध्यपर्वते, नगमूर्धसु = पर्वतशिरःसु, शिखरेष्वित्यर्थः । मृगेन्द्राणां = सिंहानां, परिभावं = तिरस्कारं, कुर्वन्तः = विदधतः, चेरुः = जग्मुः, मारुतिप्रष्ठाः प्लवङ्गमा इति शेषः ।

※व्युत्पत्तिः※ तिग्मांऽशुमार्गस्य—तिग्माः ( तीक्ष्णाः ) अंशवः ( किरणाः ) यस्य, तस्य मार्गस्य । नगमूर्धसु—न गच्छतीति नगः, "अन्येष्वपि दृश्यते" इति डः, "नगोऽप्राणिष्वन्यतरस्याम्" इति नञः प्रकृतिभावः । "शैलवृक्षौ नगावगौ" इत्यमरः । नगस्य मूर्धसु । परिभावम्—परिभवनं परिभावस्तम्, "परौ भुवोऽवज्ञाने" इति घञ् । "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्यत्र बहुलग्रहणान्न दीर्घत्वम् । चेरुः—"चर गतौ" इति धातोर्लिटि रूपम् ।

※भाषाऽर्थः※ सूर्यके मार्गके तिरस्कारके सदृश विन्ध्यपर्वतमें शिखरोंपर सिंहोंका तिरस्कार करते हुए हनूमान् आदि वानर घूमने लगे ॥ ५४ ॥

**भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुरतरान्नदान् ।**
**आशंसवो लवं शत्रोः सीतायाश्च विनिश्चयम् ॥ ५५ ॥**

**अन्वयः**—( ते ) तुङ्गान् शिलोच्चयान् भ्रेमुः, अतरान् नदान् उत्तेरुः, शत्रोः लवं सीताया विनिश्चयं च आशंसवो भ्रेमुः ।

**व्याख्या**—( ते = वानराः ) तुङ्गान् = उन्नतान्, शिलोच्चयान् = पर्वतान्, भ्रेमुः=चेलुः, अतरान् = तरीतुम् अशक्यान्, नदान् = जलाशयविशेषान्, उत्तेरुः= उत्तीर्णाः, शत्रोः=वैरिणः, लवम्=उच्छेदनम्, सीतायाः = जानक्याः, विनिश्चयं= विनिर्णयं, च, आशंसवः = आशंसनशीलाः सन्तः, भ्रेमुः = चेलुः ॥

※व्युत्पत्तिः※ तुङ्गान्—"उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः शिलोच्चयान् = उत्पूर्वाच्चिनोतेः "एरच्" इत्यचि उच्चयः शिलाभिः उच्चयो येषां, तान् । भ्रेमुः = "भ्रमु चलने" इति धातोर्लिट् "वा जॄभ्रमुत्रसाम्" इति किति लिटि थलि च सेटि वैकल्पिकौ एत्वाऽभ्यासलोपौ । "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा

च कर्मसंज्ञक इति वाच्यम्" इति शिलोच्चयानां कर्मत्वम्। अतरान् - तरणं तरः "तृ प्लवनतरणयोः" इति धातोः "ऋदोरप्" इत्यप्। अविद्यमानस्तरो येषु तान्। लवं = लवनं लवस्तम्' "लूञ् छेदने" इति धातोः पूर्वसूत्रेण अप्। विनिश्चयं-विनिश्चयनं विनिश्चयस्तं, "ग्रहवृदृनिश्चिगमश्च" इत्यप्। "अथ समौ निर्णयनिश्चयौ" इत्यमरः। आशंसवः-सनाशंसभिक्ष उः" इति उप्रत्ययः।

※भाषाऽर्थः※ वानर ऊंचे पर्वतोंपर चढ़े, दुस्तर नदोंके पार चले, शत्रुके उच्छेद और सीताके निश्चयकी आशा रखते हुए वे लोग घूमने लगे ॥ ५५ ॥

**आदरेण गमं चक्रुर्विषमेष्वप्यसङ्घसाः।**
**व्याप्नुवन्तो दिशोऽन्यादान् कुर्वन्तः सव्यधान् हरीन् ॥ ५६ ॥**

**अन्वयः**—हरीन् सव्यधान् अन्यादान् कुर्वन्तो दिशो व्याप्नुवन्तः असङ्घसाः ( ते ) विषमेषु अपि आदरेण गमं चक्रुः।

**व्याख्या**—हरीन् = सिंहान्, सव्यधान्=सप्रहारान्, अतएव—अन्यादान् = परित्यक्ताऽऽहारान्, कुर्वन्तः=विदधतः, तथा—दिशः=आशाः, व्याप्नुवन्तः=व्याप्ताः कुर्वन्तः, एवं च—असङ्घसाः=त्यक्ताऽऽहाराः, ( ते=वानराः ) विषमेषु अपि=उन्नताऽवनतेषु अपि, प्रदेशेषु इति शेषः, आदरेण = अवज्ञाऽभावेन, गमं = गमनं, चक्रुः = कृतवन्तः।

※व्युत्पत्तिः※ हरीन्—"सिंहो मृगेन्द्रः पञ्चाऽऽस्यो हर्यक्षः केसरी हरिः।" इत्यमरः। सव्यधान्—व्यधनं व्यधः, "व्यध ताडने" इति धातोः "व्यधजपोरनुपसर्गे" इत्यप्, "व्यधो वेधे" इत्यमरः। व्यधेन सहिताः सव्यधास्तान्। अन्यादान्—न्यदनं न्यादः, निपूर्वात् "अद भक्षणे" इति धातोः "नौ ण च" इति णप्रत्ययः, तस्मिन्नदेर्न घस्लादेशः। चकाराद् अप्प्रत्यये निघसः। "जग्धिस्तु भोजनम्। जेमनं लेह आहारो निघसो न्याद इत्यपि।" इत्यमरः। अविद्यमानो न्यादो येषां, तान्। असङ्घसाः—समदनं सङ्घसः, संपूर्वकात् "अद भक्षणे" इति धातोः "उपसर्गेऽदः" इत्यप्, "घञपोश्च" इत्यदेर्घस्लादेशः। अविद्यमानः सङ्घसो येषां ते। आदरेण—"ग्रहवृदृनिश्चिगमश्च" इत्यप्। गमम्—अत्राऽपि पूर्वसूत्रेण अप्।

※भाषाऽर्थः※ सिंहोंको प्रहारकर परित्यक्त आहारवाले करते हुए, दिशाओंको व्याप्तकर और आहार छोड़कर वानरोंने विषम स्थानोंमें भी अवज्ञा न कर गमन किया ॥ ५६ ॥

**संचेरुः सहसाः केचिदस्वनाः केचिदाटिषुः।**
**संयामवन्तो यतिवन्, निगदानपरेऽमुचन् ॥ ५७ ॥**

**अन्वयः**—केचित् सहसाः संचेरुः, केचित् अस्वना आटिषुः; अपरे संयामवन्तो यतिवत् निगदान् अमुचन्।

**व्याख्या**—केचित् = वानराः, सहसाः = हास्ययुक्ताः सन्तः, सञ्चेरुः = प्राचलन्, केचित् = वानराः, अस्वनाः = शब्दरहिताः, तूष्णीकाः सन्त इति भावः, आटिषुः = अगमन्, अपरे = अन्ये, वानरा इति भावः, संयामवन्तः = नियमवन्तः, सन्तः, यतिवत् = संन्यासिवत्, निगदान् = वचनानि, अमुचन् = अत्याक्षुः ।

ॐव्युत्पत्तिःॐ सहसाः—हसनं हसः, "हसे हसने" इति धातोः "स्वनहसोर्वा" इत्यप् । हसेन सहिताः । अस्वनाः—स्वननं स्वनः, "स्वन शब्दे" इति धातोः पूर्वसूत्रेण अप्, "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ।" इत्यमरः । अविद्यमानः स्वनो येषां ते । आटिषुः—"अट गतौ" इति धातोर्लुङि रूपम् । संयामवन्तः—संयमनं संयामः "यमः समुपनिविषु च" इत्यपि संयमः, पक्षे घञि संयामः, सोऽस्ति येषां ते, मतुप् । यतिवत्—यतिभिस्तुल्यं, वतिप्रत्ययः । "ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ।" इत्यमरः । निगदान्—"नौ गदनदपठस्वनः" इति वैकल्पिकोऽप्, पक्षे घञि निगादः । अमुचन्—"मुच्लृ मोक्षणे" इति धातोर्लुङ् । लृदित्वादङि ङित्वाद्गुणाऽभावः ।

ॐभाषाऽर्थःॐ कोई ( वानर ) हास्यकर घूमने लगे, कोई न बोलकर चलने लगे और कई वानरोंने नियम लेते हुए संन्यासियोंके सदृश मौन व्रत लिया ॥ ५७ ॥

**अथ क्लमादनिःक्काणा नराः क्षीणपणा इव ।**
**अमदाः सेदुरेकस्मिन्नितम्बे निखिला गिरेः ॥ ५८ ॥**

**अन्वयः**—अथ क्लमात् अनिःक्काणा निखिलाः ( वानराः ) अमदाः क्षीणपणा नरा इव गिरेः एकस्मिन् नितम्बे सेदुः ।

**व्याख्या**—अथ = परिभ्रमणाऽनन्तरं, क्लमात् = परिश्रमात्, अनिःक्काणाः = निःशब्दाः, निखिलाः = समस्ताः, वानराः । अमदाः=हर्षरहिताः सन्तः, क्षीणपणा = धनरहिताः, नरा इव = मनुष्या इव, गिरेः = पर्वतस्य, एकस्मिन् = अनिर्दिष्टे, नितम्बे = कटके, सेदुः = निषण्णाः ॥

ॐव्युत्पत्तिःॐ क्लमात्—"विभाषा गुणोऽस्त्रियाम्" इति हेतौ पञ्चमी। अनिःक्काणाः—"क्वणो वीणायां च" इत्यपो विकल्पेन "भावे" इति घञ्, अविद्यमानो निःक्काणो येषां ते । अमदाः—"मदोऽनुपसर्गे" इत्यपि मदः, अविद्यमानो मदो येषां ते । क्षीणपणाः—पण्यन्त इति पणाः "नित्यं पणः परिमाणे" इत्यप् । क्षीणः पणो येषां ते ।

ॐभाषाऽर्थःॐ परिभ्रमणके अनन्तर परिश्रमसे शब्दहीन सब वानर हर्षरहित होते हुए धनहीन मनुष्योंके सदृश पर्वतके मध्यभागमें बैठ गये ॥ ५८ ॥

**ततः ससम्मदास्तत्र निरैक्षन्त पतत्रिणः ।**
**गुहाद्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥**

**अन्वयः**—ततः ससंमदाः ते तत्र समजेन निर्यातः पशून् इव गुहाद्वारेण निर्यातः पतत्रिणो निरैक्षन्त ।

**व्याख्या**—ततः=विश्रामाऽनन्तरं, ससंमदाः = सहर्षाः, ते = वानराः, तत्र = तस्मिन्पर्वते, समजेन = वृन्देन, निर्यातः = निर्गच्छतः, पशून् इव = चतुष्पदान् इव, गुहाद्वारेण = गह्वरद्वारेण, निर्यातः = निर्गच्छतः, पतत्रिणः = पक्षिणः, निरैक्षन्तः = दृष्टवन्तः ।

॥व्युत्पत्तिः॥ ससम्मदाः—"प्रमदसम्मदौ हर्षे" इति निपातितः सम्मदः "मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसम्मदाः ।" इत्यमरः । सम्मदेन सहिताः ससम्मदाः । समजेन—संवीयतेऽत्रेति समजस्तेन, सम्पूर्वकात् "अज गतिक्षेपणयोः" इति धातोः "समुदोरजःपशुषु" इत्यप्प्रत्ययः । "पशूनां समज" इत्यमरः । निर्यातः—निर्यान्तीति निर्यान्तस्तान्, निष्पूर्वाद्यातेः शत्रन्तस्य शसि रूपम् । पशून्—लोमवल्लांगूलवत्त्वं पशुत्वमिति भाषारत्ने कणादः । पतत्रिणः—पतत्रमस्ति येषां ते, तान्, "अत इनिठनौ" इतीनिः । "पतत्त्रिपत्त्रिपतगपतत्पत्त्ररथाऽण्डजाः ।" इत्यमरः । निरैक्षन्त—निरुपगसर्गपूर्वकादीक्षेर्लङि रूपम् ।

॥भाषाऽर्थः॥ विश्रामके अनन्तर हर्षयुक्त होकर वानरोंने उस (पर्वत) में समूहसे निकले हुए पशुओंके सदृश गुफाके द्वारसे निकले हुए पक्षियोंको देखा ॥ ५९ ॥

**वीनामुपसरं दृष्ट्वा तेऽन्योन्योपहवा गुहाम् ।**
**प्राविशन्नाहवप्रज्ञा आहावमुपलिप्सवः ॥ ६० ॥**

**अन्वयः**—वीनाम् उपसरं दृष्ट्वा अन्योन्योऽपहवा आहवप्रज्ञाः आहावम् उपलिप्सवः ते गुहां प्राविशन् ।

**व्याख्या**—वीनां = पक्षिणाम्, उपसरं = नैरन्तर्येण निर्गगमनं, दृष्ट्वा=विलोक्य, अन्योन्योऽपहवाः = परस्पराह्वानयुक्ताः, आहवप्रज्ञाः = युद्धबुद्धयः, आहावम् = जलाधारम्, उपलिप्सवः = उपलब्धुम् इच्छवः, ते = वानराः, गुहां = गह्वरं, प्राविशन् = प्रविष्टाः ।

॥व्युत्पत्तिः॥ वीनां—"नगौकोवाजिविकिरविविष्किरपतत्त्रयः ।" इत्यमरः । उपसरम्—उपसरणमुपसरः, उपपूर्वकात् "सृ गतौ" इति धातोः "प्रजने सर्तेः" इत्यप् । उपसर इव उपसरः, नैरन्तर्यमात्रेणोपलक्षितत्वात् । उपसरो हि गोषु वृषभाणामभिगामनमुच्यते, स च नैरन्तर्येण भवति इति जयमङ्गलः । अत्रोपसरशब्दस्य लाक्षणिकः प्रयोगः । अन्योन्योपहवाः—उपपूर्वकात् "ह्वेञ् स्पर्धायां शब्दे च" इति धातोः "ह्वः सम्प्रसारणं च न्यभ्युपविषु" इत्यपि सम्प्रसारणे च "उपहव" इति पदस्य सिद्धिः ।-

अन्योन्येषु उपह्वो येषां ते । आहवप्रज्ञाः—आह्वयन्तेऽस्मिन्नित्याहवः, "आङि युद्धे" इत्यप् सम्प्रसारणं च । "अभ्यामर्दसमाघातसंग्रामाऽभ्यागमाऽऽहवाः ।" इत्यमरः । आहवे प्रज्ञा येषां ते इति व्यधिकरणबहुव्रीहिः । आहावम्—"अह्वयन्तेऽस्मिन्नित्याहावस्तम्, "निपानमाहावः" इति सम्प्रसारणमच्वृद्धिश्च निपात्यते, "आहावस्तु निपानं स्यादुपकूपजलाशये ।" इत्यमरः । उपलिप्सवः—उपपूर्वात् सन्नन्तात् "डुलभष् प्राप्तौ" इति धातोः "सनाशंसभिक्ष उः" इत्युः ।

❀भाषाऽर्थः❀ पक्षियोंका लगातार निकलना देखकर एक दूसरेको बुलाते हुए, युद्धमें बुद्धि रखनेवाले और जलाशयको पानेकी इच्छा करनेवाले उन वानरोंने गुफामें प्रवेश किया ॥ ६० ॥

**कुर्वन्तो ह्वमाप्तानां पिपासावधकाङ्क्षिणः ।**
**द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतम् ॥ ६१ ॥**

**अन्वयः**—आप्तानां ह्वं कुर्वन्तः पिपासावधकाङ्क्षिणः ( ते ) तमोघनप्रख्यं गुहाया द्वारं द्रुतं प्राविशन् ।

**व्याख्या**—आप्तानां = स्निग्धानां, ह्वम् = आह्वानं, कुर्वन्तः = विदधतः, पिपासावधकाङ्क्षिणः = जलपानाऽभिलाषाऽपनयनेच्छवः, ( ते = वानराः ), तमोघनप्रख्यं = तिमिरकाठिन्यसदृशं, गुहायाः = गह्वरस्य, द्वारं = प्रतीहारं, द्रुतं = सत्वरं, प्राविशन् = प्रविष्टाः ।

❀व्युत्पत्तिः❀ आप्तानाम्—"आप्तः प्रत्ययितः समौ ।" इत्यमरः । ह्वं—"भावेऽनुपसर्गस्य" इत्यप् सम्प्रसारणं च । पिपासावधकाङ्क्षिणः—पातुमिच्छा पिपासा, सन्नन्तात् "पा पाने" इति धातोः "अ प्रत्ययात्" इत्यप्रत्ययः टाप्यत्ययश्च । पिपासाया वधं काङ्क्षन्तीति तच्छीलाः, "काक्षि काङ्क्षायाम्" इति धातोः "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः, "इदितो नुम्धातोः" इति नुम् च । तमोघनप्रख्यं—"मूर्तौ घन" इति काठिन्येऽर्थे हन्तेरप्प्रत्ययो घनादेशश्च निपात्यत इत्थं घनपदसिद्धिः । तमसो घनस्तमोघनः, तेन सदृशम् ।

❀भाषाऽर्थः❀ स्निग्धोंको बुलाते हुये और प्यासको बुझानेकी इच्छा करनेवाले वानरोंने अन्धकारके काठिन्यके सदृश गुफाके द्वारमें शीघ्रतासे प्रवेश किया ॥ ६१ ॥

**तस्मिन्नन्तर्घणेऽपश्यन् प्रघाणे सौधसद्मनः ।**
**लौहोद्घनघनस्कन्धा ललिताऽपघनां स्त्रियम् ॥ ६२ ॥**

**अन्वयः**—तस्मिन् अन्तर्घणे सौधसद्मनः प्रघाणे लौहोद्घनघनस्कन्धा ललिताऽपघनां स्त्रियम् अपश्यन् ।

**व्याख्या**—तस्मिन् = गुहाद्वारे, अन्तर्घणे = द्वाराऽतिक्रमणाऽनन्तरं साऽव-

काशप्रदेशे, सौधसद्मनः = धवलगृहस्य, प्रघाणे = एकदेशे, लौहोद्घनघनस्कन्धाः = लोहाऽत्याधानदृढांऽसाः, ( ते ), ललिताऽपघनां = सुन्दराऽवयवां, स्त्रियं = नारीम्, अपश्यन् = दृष्टवन्तः ।

ॐव्युत्पत्तिःॐ अन्तर्घणे—अन्तर्हन्यते क्रोडीभवत्यस्मिन्निति अन्तर्घणः। द्वारमतिक्रम्य यः साऽवकाशप्रदेशः सोऽन्तर्घण इत्युच्यते। "अन्तर्घनो देशे" इति अन्तःपूर्वाद्धन्तेरप् घनादेशश्च, "अन्तर्घण" इति पाठान्तरे घणादेशः। अस्य बाहीकग्रामविशेषसंज्ञायां प्रयोगो रूढिमाश्रित्य बोध्यः। अत्र तु यौगिकवृत्तिमाश्रित्य पदाऽर्थो विवेचितः। प्रघाणे—प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यत इति प्रघणः प्रघाणः, तस्मिन्। "अगारैकदेशे प्रघणः प्रघाणश्च" इति कर्मण्यप्, अत्र वृद्धिश्च निपात्यते। द्वारदेशे द्वौ प्रकोष्ठावलिकौ आभ्यन्तरो बाह्यश्च, तत्र बाह्ये प्रकोष्ठे निपातनमिदम्। "प्रघाण-प्रघणालिन्दा बहिर्द्वारप्रकोष्ठके।" इत्यमरः। लौहोद्घनघनस्कन्धाः—उर्ध्वं हन्यतेऽस्मिन्निति उद्घनः, "उद्घनोऽत्याधानम्" इत्यधिकरणे अप्प्रत्ययो निपात्यते। "निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः।" इत्यमरः। लौहस्य उद्घनौ लौहोद्घनौ, तौ इव घनौ स्कंधौ येषां ते। ललिताऽपघनाम्—अपहन्यते एभिरिति अपघनाः, पाणिपादरूपा अङ्गाऽवयवा इत्यर्थः। "अपघनोऽङ्गम्" इति करणे अप्प्रत्ययनिपातः। ललिता अपघना यस्यास्ताम्।

ॐभाषाऽर्थःॐ गुफाके द्वारमें एक ठौरमें धवलगृहके एक देशमें लोहेके उद्घन (जिस पर लकड़ी रखकर काटी जाती है ) की तरह दृढ स्कन्धवाले वानरोंने सुन्दर अवयववाली किसी स्त्रीको देखा ॥ ६२ ॥

**सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः ।**
**परिघोरुभुजानाह हसन्ती स्वागतं कपीन् ॥ ६३ ॥**

**अन्वयः**—विघनेन्दुसमद्युतिः सा हसन्ती ( सती ) स्तम्बघ्नपदन्यासान् परिघोरुभुजान् कपीन् स्वागतम् आह ।

**व्याख्या**—विघनेन्दुसमद्युतिः = अन्यकान्त्यभिभाविचन्द्रतुल्यकान्तिः, सा=स्त्री, हसन्ती = हास्यं कुर्वती सती, स्तम्बघ्नपदन्यासान् = तृणकाष्ठादिनाशकचरणविक्षेपान्, परिघोरुभुजान् = अर्गलविशालबाहून्, कपीन् = वानरान्, स्वागतं = सुखेन आगमनं कुशलप्रश्नं वा, आह = अकथयत् ।

ॐव्युत्पत्तिःॐ विघनेन्दुसमद्युतिः—विहन्यते ( अभिभूयते ) अन्या द्युतिर्येन सः विघनः "करणोऽयोविद्रुषु" इति करणे अप् घनादेशश्च। यद्वा विगतो घनो ( मेघः ) यस्मात् स मेघाच्छादनरहितः, निर्मल इति भावः। अथ वा विशेषेण घनः निबिडः, पूर्णः षोडशकलोपेत इत्यर्थः। एतादृशो य इन्दुः, तेन समा द्युतिर्यस्य सः। स्तम्बघ्न-

पदन्यासान्—स्तम्बः ( तृणकाष्ठादिः ) हन्यते येन स स्तम्बघ्नः, "स्तम्बे क च" इति करणे कः, "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधालोपः । पक्षे अपि घना-देशे च स्तम्बघ्नः । "स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ।" इत्यमरः । स्तम्बघ्नः पदन्यासो येषां तान् । परिघोरुभुजान्—परिहन्यते आभ्यामिति परिघौ, "परौ घ" इति करणे अप् घादेशश्च। परिघाविव उरू भुजौ येषां ते परिघोरुभुजास्तान्। स्वागतं—"स्वागतं कुशलप्रश्न" इति हारावली ।

॥भाषाऽर्थः॥ दूसरी कान्तिको अभिभूतकरने वाले चन्द्रके सदृश कान्तिवाली उस स्त्रीने हँसकर तृण काष्ठादिके नाशक पदन्यासवाले, एवं अर्गलतुल्य बड़े बाहुओंसे युक्त वानरोंको स्वागत वाक्य कहा ॥ ६३ ॥

**पिप्रायाऽद्रिगुहोपघ्नानुद्घान् संघसमागतान् ॥**
**फलैर्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः ॥ ६४ ॥**

**अन्वयः**—( सा ) अद्रिगुहोपघ्नान् सङ्घसमागतान् उद्घान् नानारसैः चित्रैः फलैः स्वादुशीतैः वारिभिश्च पिप्राय ।

**व्याख्या**—( सा = स्त्री ) अद्रिगुहोपघ्नान् = पर्वतगह्वराश्रयान्, सङ्घसमागतान्=समूहागतान्, उद्घान्=प्रशस्तान्, ( वानरान् ) नानारसैः = अनेकरसैः चित्रैः= विविधैः, फलैः = आम्रादिभिः, स्वादुशीतैः = मधुरशीतलैः, वारिभिश्च = जलैश्च, पिप्राय = तर्पितवती ।

॥व्युत्पत्तिः॥ अद्रिगुहोपघ्नान्—उपपूर्वाद्धन्धातोः "उपघ्न आश्रये" इति अप्प्र-त्यय उपधालोपे निपातिते उपघ्नः, अद्रिगुहैव उपघ्नो येषां ते अद्रिगुहोपघ्नास्तान्। सङ्घसमागतान्—संहननं सङ्घः "सङ्घोद्घौ गणप्रशंसयोः" इति समुपपदस्य हन-धातोर्भावे अप् टिलोपश्च निपात्यते । "सङ्घसार्थौ तु जन्तुभिः" इत्यमरः । सङ्घेन समागतान् । उद्घान्—उद्धन्यन्ते ( उत्कृष्टा ज्ञायन्ते ) इति उद्घास्तान्, पूर्वसूत्रेण कर्मण्यप् । गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने । "मतल्लिका मचर्चिका प्रकाण्डमुद्घत-ल्लजौ । प्रशस्तवाचकान्यमूनि" इत्यमरः । स्वादुशीतैः—स्वादूनि च तानि शीतानि स्वादुशीतानि, तैः । "विशेषणं विशेष्येण बहुलम्" इति समासः, "तत्पुरुषः समाना-धिकरणः कर्मधारयः" इति कर्मधारयसंज्ञा । "त्रिष्विष्टमधुरौ स्वादू" इत्यमरः । पिप्राय—"प्रीञ् तर्पणे कान्तौ च" इति धातोर्लिट् ।

॥भाषार्थः॥ उस स्त्रीने पर्वतकी गुहामें आश्रय करनेवाले तथा समुदायसे आये हुए श्रेष्ठ उन वानरोंको अनेक रसवाले और अनेक प्रकारके फलोंसे एवम् मधुर और ठण्ढे जलसे भी तृप्त किया ॥ ६४ ॥

**निघाऽनिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः ।**
**तृप्तास्तां भ्राजथुमती पप्रच्छुः 'कस्य पूरियम्' ॥ ६५ ॥**

**अन्वयः**—निघाऽनिघतरुच्छन्ने तस्मिन् लब्ध्रिमैः फलैः तृप्ताः ते भ्राजथुमतीं ताम् "इयं पूः कस्य" इति पप्रच्छुः।

**व्याख्या**—निघाऽनिघतरुच्छन्ने = निमिताऽनिमितपादपाच्छन्ने, विष्वक्समाऽविष्वक्समवृक्षाऽच्छादिते इत्यर्थः। तस्मिन् = प्रघणे, लब्ध्रिमैः = लाभनिर्वृत्तैः, फलैः = आम्रादिभिः, तृप्ताः = तृप्तियुक्ताः, ते=वानराः, भ्राजथुमतीं = शोभावतीं, तां= स्त्रियम्, इयं=सन्निकृष्टस्था, पूः=पुरी, कस्य=किमीया, इति=इत्थं, पपच्छुः=पृष्टवन्तः।

**ॐव्युत्पत्तिःॐ** निघाऽनिघतरुच्छन्ने—निर्विशेषं हन्यन्ते ( ज्ञायन्ते ) इति निघाः (निमिताः, समारोहपरिणाहा इत्यर्थः), "निघो निमितम्" इति निपूर्वाद्धन्तेरप् टिलोपश्च निपात्यते। "तत्र विष्वक्समे निघः" इत्यमरः। निघाश्च अनिघाश्च निघाऽनिघाः, ते च ते तरवो निघाऽनिघतरवः, तैश्छन्नेः। लब्ध्रिमैः—लाभेन निर्वृत्तानि लब्ध्रिमानि तैः। "डुलभष् प्राप्तौ" इति धातोः "ड्वितः क्त्रिः" इति क्त्रिः ततः "क्त्रेर्मम्नित्यम्", इति मप्। भ्राजथुमतीं—भ्राजनं भ्राजथुः, "टुभ्राज" दीप्तौ इति धातोः, "ट्वितोऽथुच्" इति अथुच्। भ्राजथुरस्ति अस्याः सा भ्राजथुमती ताम्। मतुबन्तात्स्त्रीत्वविवक्षायां ङीप्।

**ॐभाषाऽर्थःॐ** बराबर लम्बाई चौड़ाईवाले और तद्भिन्न वृक्षोंसे आच्छादित उस स्थानमें पाये गये फलोंसे तृप्त उन वानरोंने शोभावती उस स्त्रीसे "यह शहर किसका है?" ऐसा पूछा॥ ६५॥

**रक्षणं करोषि कस्मात् त्वं, यत्नेनाऽऽख्यायतां शुभे!।**
**स्वप्ने निधिवदाभाति तव संदर्शनं हि नः॥ ६६॥**

**अन्वयः**—हे शुभे! त्वं कस्मात् रक्षणं करोषि? यत्नेन आख्यायताम्। हि तव सन्दर्शनं नः स्वप्ने निधिवत् आभाति।

**व्याख्या**—हे शुभे = हे कल्याणि, त्वं, कस्मात् = हेतोरिति शेषः। रक्षणं= रक्षां, करोषि = विदधासि, यत्नेन = आदरेण, आख्यायतां = कथ्यताम्, एतदिति शेषः। हि = यतः, तव = भवत्याः, सन्दर्शनं = विलोकनं, नः = अस्माकं, स्वप्ने = स्वापे, निधिवत् = शेवधिरिव, आभाति = आभासते॥

**ॐव्युत्पत्तिःॐ** रक्षणं—रक्षणं रक्षणस्तं, "रक्ष पालने" इति धातोः "यजयाचयतविच्छप्रच्छरक्षो नङ्" इति नङ्। "रक्षणस्त्राणे" इत्यमरः। यत्नेन—यतनं यत्नस्तेन, "यती प्रयत्ने" इति धातोः पूर्वसूत्रेण नङ्। आख्यायताम्—आङ्पूर्वकात् "ख्या प्रकथने" इति धातोः कर्मणि लोट्। स्वप्ने—"ञिष्वप् शये" इति धातोः "स्वपो नन्" इति नन्प्रत्ययः। निधिवत्—नितरां धीयते इति निधिः, निपूर्वकात् "डुधाञ् धारण-

पोषणयोः" इति धातोः "उपसर्गे घोः किः" इति किप्रत्ययः । "निधिर्ना शेवधिः" इत्यमरः । निधिना तुल्यं, वतिप्रत्ययः ।

ꣿभाषार्थःꣿ हे कल्याणि ! तुम किस कारणसे रहाकर रही हो ? यत्नसे बतलाओ । क्योंकि तुम्हारा दर्शन हमलोगोंको स्वप्नमें निधिकी तरह प्रतीत हो रहा है ॥ ६६ ॥

**ततो जलधिगम्भीरान् वानरान् प्रत्युवाच सा ।**
**'इयं दानवराज्यस्य पूः सृष्टिर्विश्वकर्मणः ॥ ६७ ॥**

**अन्वयः**—ततः सा जलधिगम्भीरान् वानरान् प्रत्युवाच—"इयं पूः दानवराज-विश्वकर्मणः सृष्टिः ।

**व्याख्या**—ततः = अनन्तरं, वानरप्रश्नाऽनन्तरमिति भावः । सा = स्त्री, जलधिगम्भीरान् = समुद्रगभीरान्, अक्षोभ्यत्वादिति भावः । वानरान् = कपीन्, प्रत्युवाच = प्रत्यब्रवीत्, इयम् = एषा, पूः = पुरी, दानवराजस्य = दनुजाऽधीश्वरस्य, विश्वकर्मणः = विश्वकर्मनामकस्य, सृष्टिः = रचना, अस्तीति शेषः ।

ꣿव्युत्पत्तिःꣿजलधिगम्भीरान्—जलं धीयतेऽस्मिन्निति जलधिः, "कर्मण्यधिकरणे च" इति किः । जलधय इव गम्भीरास्तान् । "उपमानानि सामान्यवचनैः" इति समासः । दानवराजस्य—दानवानां राजा, तस्य "राजाऽहःसखिभ्यष्टच्" इति टच् । सृष्टिः—सृज्यत इति, "सृज विसर्गे" इति धातोः कर्मणि "स्त्रियां क्तिन्" इति क्तिन्प्रत्ययः ।

ꣿभाषार्थःꣿ वानरोंके प्रश्नके अनन्तर उस स्त्रीने समुद्रके सदृश गम्भीर वानरोंको उत्तर दिया—"यह शहर दानवराज विश्वकर्माकी रचना है ॥ ६७ ॥

इतः स्त्रीलिङ्गमधिकृत्योच्यते—

**निहतश्च स्थितिं भिन्दन् दानवोऽसौ बलद्विषा ।**
**दुहिता मेरुसावर्णेरहं नाम्ना स्वयंप्रभा ॥ ६८ ॥**

**अन्वयः**—असौ दानवः स्थितिं भिन्दन् बलद्विषा निहतः, अहं मेरुसावर्णेः दुहिता नाम्ना स्वयंप्रभा ( अस्मि ) ।

**व्याख्या**—असौ = पूर्वोक्तः, दानवः = दनुजेश्वरः, स्थितिं = मर्यादां, भिन्दन् = नाशयन्, बलद्विषा = बलाऽरातिना, इन्द्रेणेत्यर्थः, निहतः = निषूदितः, अहं, मेरु-सावर्णेः = मेरुसावर्णिनामधेयस्य, दुहिता = पुत्री, नाम्ना = अभिधानेन, स्वयंप्रभा, अस्मीति शेषः ।

ꣿव्युत्पत्तिःꣿ दानवः—दनोरपत्यं पुमान्, "तस्याऽपत्यम्" इत्यण् । स्थितिं—

स्थानं स्थितिस्ताम्, "स्थागापापचो भावे" इति भावे अङोऽपवादः क्तिन्। "संस्था तु मर्यादा धारणा स्थितिः।" इत्यमरः। बलद्विषा—बलं ( तन्नामकं दैत्यम् ) द्वेष्टीति बलद्विट्, तेन "तत्सूद्विषे"त्यादिना क्विप्। नाम्ना—"प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया।

॥भाषाऽर्थः॥ वे दानवराज, मर्यादाका भेदन करनेपर इन्द्रसे मारे गये। मैं मेरुसावर्णिकी पुत्री हूं और मेरा नाम स्वयंप्रभा है ॥ ६८ ॥

**जूतिमिच्छथ चेत् तूर्णं, कीर्तिं वा पातुमात्मनः।**
**करोमि वो बहिर्यूतीन्, पिधध्वं पाणिभिर्दृशः ॥ ६९ ॥**

**अन्वयः**—तूर्णं जूतिं वा आत्मनः कीर्तिं पातुम् इच्छथ चेत्, वो वहिर्यूतीन् करोमि; पाणिभिः दृशः पिधध्वम्।

**व्याख्या**—तूर्णं = शीघ्रं, जूतिं = गमनं, वा = अथवा, आत्मनः = स्वस्य, कीर्तिं = यशः, पातुं = रक्षितुम्, इच्छथ = वाञ्छथ, चेत् = यदि, वः = युष्मान्, बहिर्यूतीन् = वहिर्भूतान्, करोमि = विदधामि, पाणिभिः = हस्तैः, दृशः = दृष्टीः, पिधध्वम् = आच्छादयध्वम्।

॥व्युत्पत्तिः॥ जूतिम्—वेगाऽर्थे विद्यमानात् "जु" इति सौत्राद्धातोः "ऊतियूतिजूतिसातिहेतिकीर्तयश्च" इति क्तिन् दीर्घत्वं च निपात्यते। कीर्तिं—"कृत संशब्दने" इति स्वार्थिकण्यन्ताद्धातोः "उपधायाश्च" इतीत्वं ततः पूर्वसूत्रेण क्तिन्निपात्यते, बहिर्यूतीन्—पूर्वसूत्रेणैव यौतेः क्तिन्दीर्घश्च निपात्यते। बहिर्यूतिर्येषां ते बहिर्यूतयस्तान्। पिधध्वम्—अपिपूर्वात् "डुधाञ् धारणपोषणयोः" इति धातोः लोटि द्विर्वचने "दधस्तथोश्च" इति अभ्यासस्य भष्भावे "श्नाऽभ्यस्तयोरातः" इत्याकारलोपे "झलां जश् झशि" इति धातोर्दकारे भागुरिमतेन अप्युपसर्गाऽकारलोपे पिधध्वम् इति रूपं सिद्धम्।

॥भाषाऽर्थः॥ शीघ्र जानेकी अथवा अपनी कीर्तिकी रक्षा करनेकी इच्छा करते हो तो तुमलोगोंको बहिर्भूत कर देती हूं, हाथोंसे नेत्रोंका आच्छादन कर लो ॥ ६९ ॥

**व्रज्यावती निरुद्धाऽक्षान् विद्येवाऽनुष्ठितक्रियान्।**
**निरचिक्रमदिच्छातो वानरांश्चङ्क्रमावतः ॥ ७० ॥**

**अन्वयः**—विद्या अनुष्ठितक्रियान् इव व्रज्यावती ( सा ) निरुद्धाऽक्षान् अनुष्ठितक्रियान् चङ्क्रमावतो वानरान् इच्छातो निरचिक्रमत्।

**व्याख्या**—विद्या = शास्त्रम्, अनुष्ठितक्रियान् इव = कृतपुरश्चरणादिकृत्यान् पुरुषान् इव, व्रज्यावती = प्रशस्तगमनवती, ( सा ) निरुद्धाऽक्षान् = आच्छादितनयनान्, अत एव—अनुष्ठितक्रियान् = आचरिततदुपदिष्टव्यापारान्, चङ्क्रमावतः = कुटिलगतिमतः, वानरान् = कपीन्, इच्छातः = वाञ्छायाः, तेषामिति शेषः। निरचि-

क्रमत्=निष्कासितवती, यथा विद्या कृतपुरश्चरणादिकान्पुरुषांस्तदिच्छापूरणेन कृतार्थयति तथैव साऽपि आचरिततदुपदिष्टकार्यास्तान् वानरान् निष्कासनेन कृतार्थांश्चकारेति भावाऽर्थः।

॥व्युत्पत्तिः॥ विद्या—विदन्त्यनयेति, "विद ज्ञाने" इति धातोः "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" इति क्यप्। अनुष्ठितक्रियान्—क्रियते या सा क्रिया "डुकृञ् करणे" इति धातोः "कृञः श च" इति शप्रत्ययः रिङादेश इयङ् च। "कर्म क्रिया" इत्यमरः। अनुष्ठिता क्रिया यैस्तान्। व्रज्यावती—व्रजनं व्रज्या, "व्रज गतौ" इति धातोः "व्रजयजोर्भावे क्यप्" इति भावे क्यप्। प्रशस्ता व्रज्याऽस्ति अस्याः सा, प्रशंसायां मतुप्, मस्य वकारादेशश्च। निरुद्धाऽक्षान्—निरुद्धे अक्षिणी येषां तान्, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समासान्तः षच्। चङ्क्रमावतः—चङ्क्रमणं चङ्क्रमा, "क्रमु पादविक्षेपे" इति धातोः "नित्यं कौटिल्ये गतौ" इति कौटिल्ये यङन्तात् "अप्रत्ययात्" इति अप्रत्ययस्ततष्टाप्। चङ्क्रमाऽस्ति एषां ते चङ्क्रमावन्तस्तान्। इच्छातः—एषणम् इच्छा, "इषु इच्छायाम्" इति धातोः "इच्छा" इति शप्रत्ययश्छभावश्च निपात्यते। इच्छाया इति, "अपादाने चाऽहीयरुहोः" इति तसिः। निरचिक्रमत्—क्रमेर्ण्यन्तस्य लुङि "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावात् "सन्यतः" इतीत्वम्। "दीर्घो लघोः" इति न दीर्घत्वं, संयोगपरस्य गुरुत्वात्।

॥भाषाऽर्थः॥ विद्या पुरश्चरण आदि क्रिया करनेवालोंको जैसे कृतकृत्य करती है, वैसे ही उत्तम गतिवाली उस स्त्रीने आँखोंको बन्द किये हुए एवम् उससे उपदिष्ट क्रिया करनेवाले तथा कुटिल गमनवाले उन वानरोंको उनकी इच्छासे बाहर निकाला ॥ ७० ॥

**निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात्।**
**ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७१ ॥**

**अन्वयः**—तस्याः शिक्षया रसातलात् निष्क्रम्य त्रपावन्तः ( ते ) मासम् अतिक्रान्तं ज्ञात्वा व्यथाम् अवललम्बिरे।

**व्याख्या**—तस्याः = स्वयंप्रभायाः, शिक्षया = उपदेशेन, रसातलात् = पातालात्, निष्क्रम्य = निर्गम्य, त्रपावन्तः = लज्जावन्तः, स्त्रिया उपदेशेन निष्क्रान्ता वयमिति लज्जया युक्ता इति भावः, ( ते=वानराः ), मासं=त्रिंशद्दिनात्मकं कालम्, अतिक्रान्तं = लङ्घितं, ज्ञात्वा = विदित्वा, व्यथां = भयम्, सीताऽन्वेषणाऽर्थं वयं स्वामिना मासाऽवधिना प्रेषिताः स च मासो विनैव कार्येणाऽतिक्रान्त इत्याकारकं भयमिति भावः। अवललम्बिरे = अवलम्बितवन्तः, कृतवन्त इत्यर्थः।

॥व्युत्पत्तिः॥ शिक्षया—शिक्षणं शिक्षा, तया "शिक्ष विद्योपादाने" इति धातोः "गुरोश्च हलः" इति अप्रत्ययः। रसातलात्—रसायास्तलात्, "अधः स्वरूपयोरस्त्री

तल्पम्" इत्यमरः। त्रपावन्तः—त्रपणं त्रपा, "त्रपूष् लज्जायाम्" इति धातोः "षिद्भिदा-दिभ्योऽङ्" इति अङ्, "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः। त्रपाऽस्ति येषां ते, मतुप्। व्यथां—व्यथनं व्यथा, तां "व्यथ भयचलनयोः" इति धातोः भिदादित्वादङ्। अवलम्बिरे—अवपूर्वकात् "लबि अवस्रंसने" इति धातोर्लिट्।

॥भाषाऽर्थः॥ स्वयंप्रमाणके उपदेशसे पातालसे निकलकर लज्जित होकर वानर, एक मास बीता हुआ जानकर भयभीत हो गये ॥ ७१ ॥

**चिन्तावन्तः कथां चक्रुरुपधाभेदभीरवः ।**
**'अकृत्वा नृपतेः कार्यं पूजां लप्स्यामहे कथम्' ॥ ७२ ॥**

**अन्वयः**—उपधाभेदभीरवः चिन्तावन्तः ( ते ) 'नृपतेः कार्यम् अकृत्वा कथं पूजां लप्स्यामहे' इति कथां चक्रुः ।

**व्याख्याः**—उपधाभेदभीरवः=परीक्षाऽभावकातराः,अत एव चिन्तावन्तः=चिन्ता-युक्ताः, इतिकर्तव्यतामूढा इत्यर्थः । ( ते = वानराः ) नृपतेः=राज्ञः, कार्यं = कृत्यम्, अकृत्वा = अविधाय कथं = केन प्रकारेण पूजां = सत्कारं, लप्स्यामहे = प्राप्स्यामः, राजकृत्यसम्पादनाऽभावाद्वयं सत्कारं नाऽधिगमिष्याम इति भावः । इति = इत्याका-रिकां, कथां = वार्तालापं, चक्रुः=कृतवन्तः ।

॥व्युत्पत्तिः॥ उपधाभेदभीरवः—उपधानमुपधा परीक्षा, "आतश्चोपसर्गे" इत्यङ्। परीक्षापरिशुद्धो हि भृत्यः कार्येषु नियुज्यते। "उपधा धर्माद्यैर्यत्परीक्षणम्।" इत्यमरः। उपधाया भेदस्तस्माद्भीरवः। राज्ञाऽस्माकं धर्माद्यैः परीक्षणं न कृतमतो वयं प्रमाद-युक्ताः सञ्जाता इति विमृश्य भीरव इति भावः। भीरुरित्यत्र "ञिभी भये" इति धातोः "भियः क्रुक्लुकनौ" इति क्रुः। चिन्तावन्तः—चिन्तनं चिन्ता, "चिति स्मृ-त्याम्" इति धातोः "चिन्तिपूजिकथिकुम्बिचर्चश्च" इत्यङ्। चिन्ताऽस्त्येषां ते, मतु-प्प्रत्ययः। नृपतेः—नृणां पतिस्तस्य,"पतिः समास एव" इति घिसंज्ञत्वात्" "घेर्ङिति" इति गुणे "ङसिङसोश्च" इति पूर्वरूपता। पूजां—पूजनं पूजा, ताम् , पूर्वसूत्रेण अङ्। लप्स्यामहे—"डुलभष् प्राप्तौ" इति धातोर्लृट्। कथां—कथनं कथा ताम् "कथ वाक्य-प्रबन्धे" इति धातोः पूर्ववदङ्।

॥भाषाऽर्थः॥ परीक्षाके अभावसे डरपोक अतएव चिन्तित होकर वे वानर "राजा का कार्य न कर हमलोग कैसे सत्कार पावेंगे" ऐसा वार्तालाप करने लगे ॥ ७२ ॥

**प्रायोपासनया शान्तिं मन्वानो वालिसम्भवः ।**
**युक्त्वा योगं स्थितः शैले विवृण्वंश्चित्तवेदनाम् ॥७३॥**

**अन्वयः**—वालिसंभवः चित्तवेदनां विवृण्वन् प्रायोपासनया शान्तिं मन्वानः शैले योगं युक्त्वा स्थितः ।

**व्याख्या**—वालिसंम्भवः = वालिपुत्रः, अङ्गद इत्यर्थः । चित्तवेदनां = मनोव्यथां, विवृण्वन् = प्रकाशयन् , प्रायोपासनया = मरणानशनाऽनुष्ठानेन, शान्तिं = वेदनाऽपगमं, मन्वानः = जानन्, उपायान्तराभावादिति शेषः । शैले = पर्वते, योगं = चित्तवृत्तिनिरोधं, युक्त्वा=संबद्धय, स्थितः=उपविष्टः ।

*व्युत्पत्तिः* वालिसम्भवः—वालिनः सम्भवः ( उत्पत्तिः ) यस्य सः । चित्तवेदनां—वेदनं वेदना, "विद्लृ लाभे" इति धातोः "घट्टिवन्दिविदिभ्यश्चेति वाच्यम्" इति युच्। चित्ते वेदनाम् । प्रायोपासनया—उपासनम् उपासना, उपपूर्वकात् "आस उपवेशने" इति धातोः "ण्यासश्रन्थो युच्" इति युच्। प्रायस्य ( अविच्छेदस्योपवासस्य)उपासनया "संन्यासवत्यनशने पुमान् प्रायः" इत्यमरः । शान्ति—शमनं शान्तिस्तां, "शमु उपशमे" इति धातोः "स्त्रियां क्तिन्" इति क्तिन्। "अनुनासिकस्य क्विझलोः क्ङिति" इत्युपधाया दीर्घः ।

*भाषाऽर्थः* वालिपुत्र अङ्गद चित्तकी वेदनाको प्रकाशित करते हुए "लगातार अनशन करनेसे शान्ति होगी" यह जानते हुये पर्वतमें योगका अवलम्बनकर रहने लगे ॥ ७३ ॥

**प्रस्कन्दिकामिव प्राप्तो ध्यात्वा ब्रूते स्म जाम्बवान् ।**
**'धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन् ॥ ७४ ॥**

**अन्वयः**—जाम्बवान् प्रस्कन्दिकां प्राप्त इव ध्यात्वा ब्रूते स्म—"शालभञ्जिकाप्रख्यान् कल्पनारुचीन् विषयान् धिक् ।

**व्याख्या**—जम्बवान् = भल्लूकराजः, प्रस्कन्दिकां=रोगविशेषं, प्राप्त इव = आसादित इव, ध्यात्वा = विचिन्त्य, ब्रूते स्म = अकथयत् , शालभञ्जिकाप्रख्यान् = क्रीडाविशेषसदृशान्, कल्पनारुचीन् = कल्पनीयान् , विषयान् = शब्दस्पर्शादीन् , धिक् ।

*व्युत्पत्तिः* प्रस्कन्दिकां—प्रपूर्वकात् "स्कन्दिर् गतिशोषणयोः" इति धातोः "रोगाख्यायां ण्वुल्बहुलम्" इति ण्वुल्। ब्रूते स्म—स्मयोगे लिटोऽपवादो लट्। शालभञ्जिकाप्रख्यान्—शालभञ्जिकेत्यत्र "संज्ञायाम्" इति ण्वुल्। शालभञ्जिकया सदृशाः शालभञ्जिकाप्रख्यास्तान्, उत्तरपदत्वेन तुल्याऽर्थवाचकोऽयं प्रख्यशब्दः। "स्युरुत्तरपदे प्रख्यः प्रकारः प्रतिमो निभः ।" इति हेमचन्द्रः । कल्पनारुचीन्—कल्पनया रुचिः ( प्रकाशः ) येषां तान्। विषयाणां नश्वरत्वात् तेषां कल्पनया एव प्रकाशो न वास्तविकवस्तुगत्या । विषयान्—धिग्योगे "धिगुपर्यादिषु त्रिषु" इति द्वितीया। "रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी। गोचरा इन्द्रियार्थाश्च" इत्यमरः ।

*भाषाऽर्थः* जाम्बवान्ने रोगीके सदृश होकर विचार कर कहा—"क्रीडाविशेषके तुल्य कल्पनीय विषयोंको धिक्कार ॥ ७४ ॥

**अशनीयमिवाशंसुर्महानायादशोभनः ॥ ७९ ॥**

**अन्वयः**—ततो मन्दगतः अशोभनः महान् पक्षी तेषां प्रायोपवेशनम् अशनीयम् इव आशंसुः आयात् ।

**व्याख्या**—ततः = वानराऽभिधानाऽनन्तरं, मन्दगतः = मन्थरगमनः, अशोभनः = शोभारहितः, दावाऽग्निना दग्धशरीरत्वादिति भावः । महान् = विशालः, पक्षी = पतत्त्री, सम्पातिनामको जटायुभ्राता इति भावः । तेषां = वानराणां, प्रायोपवेशनम् = अनशनाऽवस्थानम्, अशनीयम् इव = भोजनीयम् इव, आशंसुः = आशंसनशीलः सन्, आयात् = आगतः ।

**व्युत्पत्तिः** मन्दगतः - गमनं गतं, "नपुंसके भावे क्तः" इति भावे क्तः । मन्दं गतं यस्य सः । "वाहिताग्न्यादिषु" इति आहिताग्नित्वात् निष्ठायाः परनिपातः । अशोभनः—"ल्युट् च" इति भावे ल्युट् । अशनीयम्—अशितुं योग्यं, तत्, "अश भोजने" इति धातोः "कृत्यल्युटो बहुलम्" इति अनीयः । आशंसुः—आशंसनशीलः "सनाशंसभिक्ष उः" इत्युः । "आशंसुराशंसितरि" इत्यमरः ।

**भाषाऽर्थः**—तब मन्द गतिवाले, कुरूप और महान् पक्षी सम्पाति वानरोंकी अनशनस्थितिको भोजनीयकी तरह आशा करते हुए आ गये ॥ ७९ ॥

**देहव्रश्चनतुण्डाऽग्रं तं विलोक्याऽशुभाऽऽकरम् ।**
**पापगोचरमात्मानमशोचन् वानरा मुहुः ॥ ८० ॥**

**अन्वयः**—वानराः देहव्रश्चनतुण्डाऽग्रम् अशुभाकरं तं विलोक्य पापगोचरम् आत्मानं मुहुः अशोचन् ।

**व्याख्या**—वानराः = कपयः, देहव्रश्चनतुण्डाऽग्रं = शरीरच्छेदनमुखाऽग्रम्, अशुभाऽऽकरम् = अकल्याणोत्पत्तिस्थानं, तं = सम्पातिं, विलोक्य = दृष्ट्वा, पापगोचरं = कल्मषविषयं, पापविषये पतिता वयमिति भावः, आत्मानं = स्वं, मुहुः = वारं वारम्, अशोचन् = शोचितवन्तः ।

**व्युत्पत्तिः** देहव्रश्चनतुण्डाग्रं = वृश्च्यते येनेति व्रश्चनम्, "ओव्रश्चू छेदने" इति धातोः "करणाऽधिकरणयोश्च" इति करणे ल्युट् । देहस्य व्रश्चनं देहव्रश्चनं "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी, ततः समासः । देहव्रश्चनं तुण्डाऽग्रं यस्य तम् । अशुभाऽऽकरम्—आकीर्यन्ते धातवोऽस्मिन्निति आकारः "कृ विक्षेपे" इति धातोः "पुंसि संज्ञायां घः प्रायेण" इति घः । आकर इव आकरः, लाक्षणिकोऽयं प्रयोगः । अशुभस्याकरम् । पापगोचरं—गावः ( इन्द्रियाणि ) चरन्त्यस्मिन्निति गोचरः, "गोचरसंचरवहव्रजव्यजापणनिगमाश्च" इति अधिकरणे घप्रत्ययान्तो निपातः । पापस्य गोचरम् ।

**भाषाऽर्थः** वानरोंने शरीरको छेदन करनेवाले मुखके अग्रभागसे युक्त, अक-

ल्याणकी उत्पत्तिका स्थान सम्पातिको देखकर पापके विषयमें पड़े हुए अपने बारेमें बारंबार शोक किया ॥ ८० ॥

**जटायुः पुण्यकृत् पक्षी दण्डकारण्यसञ्चरः ।**
**कृत्वा राघवकार्यं यः स्वरारूढोऽग्निसंस्कृतः ॥ ८१ ॥**

**अन्वयः**—दण्डकारण्यसञ्चरो जटायुः पक्षी पुण्यकृत्, यः राघवकार्यं कृत्वा अग्निसंस्कृतः ( सन् ) स्वः आरूढः ।

**व्याख्या**—दण्डकाऽरण्यसञ्चरः = दण्डकाऽरण्याऽवस्थानः, जटायुः = जटायु-नामकः, पक्षी = विहङ्गमः, पुण्यकृत् = धर्माऽनुष्ठाता । यः = जटायुः, राघवकार्यं = रामकृत्यं, कृत्वा = विधाय, अग्निसंस्कृतः = अनलेन कृतसंस्कारः सन्, स्वः = स्वर्गम्, आरूढः = आरोहत्, अस्मदपेक्षया जटायुर्भाग्यवत्तमो यो राघवकार्यमन्व-तिष्ठत् राघवादौर्ध्वदेहिकसंस्कारं प्राप्य स्वर्गमारुरोहे"ति भावः ।

॥व्युत्पत्तिः॥ दण्डकाऽरण्यसञ्चरः—सञ्चरत्यस्मिन्निति सञ्चरः, 'गोचरसञ्चरे'त्या-दिना अधिकरणे निपातितः। दण्डकारण्यं सञ्चरो यस्य सः। पुण्यकृत्—पुण्यं कृत-वानिति "सुकर्मपापमन्त्रपुण्येषु कृञः" इति क्विप्, "ह्रस्वस्य पिति कृति तुक्" इति तुक। स्वः—"स्वरादिनिपातमव्ययम्" इति स्वरादिपाठादव्ययत्वम्। "अव्ययादा-सुपः" इति सुपो लुक्।

॥भाषाऽर्थः॥ दण्डकारण्यमें रहनेवाले जटायु नामके पक्षीने पुण्य किया, जिन्होंने रामका कार्यकर अग्निसंस्कारको प्राप्तकर स्वर्गमें आरोहण किया ॥ ८१ ॥

**नरकस्याऽवतारोऽयं प्रत्यक्षोऽस्माकमागतः ।**
**अचेष्टा यदिहाऽन्यायादनेनाऽत्स्यामहे वयम् ॥ ८२ ॥**

**अन्वयः**—अयं नरकस्य अवतारः प्रत्यक्षः अस्माकम् आगतः, यत् वयम् अचेष्टाः ( सन्तः ) अनेन अन्यायात् अत्स्यामहे ।

**व्याख्या**—अयं = सन्निकृष्टस्थः पक्षी, नरकस्य = निरयस्य, अवतारः = अव-तरणं, प्रत्यक्षः = इन्द्रियगोचरः सन्, अस्माकम्, आगतः, यत् = यस्मात्, वयं = वानराः, अचेष्टाः = निश्चलाः सन्तः, अनेन = पक्षिणा, अन्यायात्=अयुक्त्या, अत्स्या-महे = भक्षयिष्यामहे ।

॥व्युत्पत्तिः॥ अवतारः—अवतीर्यते येन कर्मणेति, "अवे तृस्त्रोर्घञ्" इति घञ्। प्रत्यक्षः—अक्षम् ( इन्द्रियम् ) प्रतिगतः, "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः। अचेष्टाः—अविद्यमाना चेष्टा येषां ते। अन्यायात्—नीयते अनेनेति न्यायः, निपूर्वादिणः "अध्यायन्यायोद्यावसंहाराश्च" इति निपातनाद्घञ्। अत्स्यामहे—"अद भक्षणे" इति धातोः कर्मणि लृट्।

ॐभाषाऽर्थःॐ यह नरकका अवतार प्रत्यक्ष होकर हमारे पास आया है, जो कि हमलोग निश्चल होकर इस के द्वारा अयुक्तिसे खाये जायंगे ॥ ८२ ॥

हृदयोदङ्कसंस्थानं कृतान्ताऽऽनायसन्निभम् ।
शरीराऽऽखनतुण्डाऽग्रं प्राप्याऽमुं शर्म दुर्लभम् ॥ ८३ ॥

**अन्वयः**—हृदयोदङ्कसंस्थानं कृतान्ताऽऽनायसन्निभं शरीराऽऽखनतुण्डाऽग्रम् अमुं प्राप्य शर्म दुर्लभम् ।

**व्याख्या**—हृदयोदङ्कसंस्थानम् = उरःसन्दंशसदृशं, कृतान्ताऽऽनायसन्निभं = यमजालतुल्यं, शरीराऽऽखनतुण्डाऽग्रं = देहाऽवदारणमुखाऽग्रम्, अमुं = पक्षिणं, प्राप्य = आसाद्य, शर्म = सुखं, दुर्लभं = कृच्छ्रलभ्यम् ।

ॐव्युत्पत्तिःॐ हृदयोदङ्कसंस्थानम्—उदञ्च्यते (आकृष्यते) अनेनेति उत्पूर्वाद् अञ्चतेः "उदङ्कोऽनुदके" इति घञ् निपात्यते । हृदयस्य उदङ्कः, तत्संस्थानम् । कृताऽन्ताऽऽनायसन्निभं—कृतोऽन्तो येन स कृताऽन्तः, "कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ।" इत्यमरः । आनीयन्ते जीवा अनेनेति आनायः, "जालमानायः" इति आङ्पूर्वान्नयतेः करणे घञ् निपात्यते । "आनायः पुंसि जालं स्यात्" इत्यमरः । कृतान्तस्य आनायस्तेन सन्निभः कृतान्ताऽऽनायसन्निभस्तम् । शरीराऽऽखनतुडाऽग्रम्—आखन्यते येन (तुण्डाऽग्रेण) आखनम्, आङ्पूर्वकात् "खनु अवदारणे" इति धातोः "खनो घ च" इति घप्रत्ययः । शरीरस्याऽऽखनं तुण्डाऽग्रं यस्य तम् । दुर्लभं—दुःखेन लभ्यत इति "ईषद्दुःसुषु कृच्छ्राऽकृच्छ्राऽर्थेषु खल्" इति "तयोरेव कृत्यक्तखलर्थाः" इति कर्मणि खल् । "उपसर्गात्खल्घञोः" इति प्राप्तस्य नुमः "न सुदुर्भ्यां केवलाभ्याम्" इति निषेधः ।

ॐभाषाऽर्थःॐ छातीको खींचनेवाले संड़सीके सदृश, यमराजके जालके तुल्य और शरीरको फाड़नेवाले मुखके अग्र भागसे युक्त इस (पक्षी) को पाकर सुख दुष्प्राप्य है ॥ ८३ ॥

ईषदाढ्यङ्करोऽप्येष न परत्राऽशुभक्रियः ।
अस्मानत्तुमितोऽभ्येति परिग्लानो बुभुक्षया ॥ ८४ ॥

**अन्वयः**—एष बुभुक्षया परिग्लानः अस्मान् अत्तुम् इतः अभ्येति अशुभक्रियः एषः परत्र ईषदाढ्यङ्करः अपि न" ।

**व्याख्या**—एषः = समीपतरवर्ती पक्षी, बुभुक्षया = क्षुधा, परिग्लानः = परिम्लानः सन्, अस्मान् = वानरान्, अत्तुं = भक्षयितुम्, इतः = अस्मात्प्रदेशात्, अभ्येति = आगच्छति । अशुभक्रियः = अकल्याणकर्मा, एषः = पक्षी, परत्र=परलोके, ईषदाढ्यङ्करोऽपि=अनाढ्यः ईषदाढ्योऽपि, न=न कृतः ।

※व्युत्पत्तिः※ बुभुक्षया—भोक्तुमिच्छा बुभुक्षा, तया । सन्नन्तात् भुजधातोः "अ प्रत्ययात्" इति अप्रत्ययः । परिम्लानः—परिम्लायतीति परिपूर्वकात् "म्लै हर्षक्षये" इति धातोः "कृत्यल्युटो बहुलम्" इत्यत्र बहुलग्रहणात् कर्तरि ल्युट् । क्तप्रत्ययाऽन्तो वा । "संयोगादेरातो धातोर्यण्वतः" इति निष्ठातस्य नत्वम् । अशुभक्रियः—अशुभा क्रिया यस्य सः । परत्र—परस्मिन्निति "सप्तम्यास्त्रल्" इति त्रल् । ईषदाढ्यङ्करः—"कर्तृकर्मणोश्च भूकृञोः" इति च्व्यर्थे कर्मोपपदात्करोतेः खल् ।

※भाषाऽर्थः※ यह पक्षी भूखसे परिम्लान होकर हमलोगोंको खानेके लिए यहाँ आ रहा है, अशुभ कर्मवाला यह परलोकमें थोड़ासा आढय भी नहीं किया गया है ॥ ८४ ॥

**सम्प्राप्य वानरान् पक्षी जगाद मधुरं वचः ।**
**'के यूयं दुरुपस्थाने मनसाऽप्यद्रिमूर्धनि ॥ ८५ ॥**

**अन्वयः**—पक्षी वानरान् सम्प्राप्य मधुरं वचो जगाद-' मनसा अपि दुरुपस्थाने अद्रिमूर्धनि यूयं के ?

**व्याख्या**—पक्षी = विहङ्गमः, सम्पातिरित्यर्थः । वानरान्=कपीन् , संप्राप्य= समासाद्य, मधुरं=कोमलं, वचः=वचनं, जगाद=उवाच, मनसाऽपि=चित्तेनाऽपि, दुरुपस्थाने = दुःखेन उपस्थातुं शक्ये, किं पुनः शरीरेणेति शेषः । अद्रिमूर्धनि = पर्वतशिरसि, शिखरे इत्यर्थः । यूयं, के = किंपरिचयाः, आत्मपरिचयं प्रकाशयतेति भावः ।

※व्युत्पत्तिः※ जगाद—"गद व्यक्तायां वाचि" इति धातोर्लिट् । दुरुपस्थाने— "आतो युच्" इति खलोऽपवादो युच् । तत्राऽपि ईषदादयोऽनुवर्तन्ते ।

※भाषाऽर्थः※ सम्पातिने वानरोंके पास आकर मधुर वचन कहा—"मनसे भी दुष्प्राप्य पर्वतकी चोटीमें तुमलोग कौन हो ? ॥ ८५ ॥

अथ प्रकीर्णकाः—

**आत्मनः परिदेवध्वे कुर्वन्तो रामसंकथाम् ।**
**समानोदर्यमस्माकं जटायुं च स्तुथाऽऽदरात्' ॥ ८६ ॥**

**अन्वयः**—आत्मनः परिदेवध्वे । रामसंकथां कुर्वन्तः अस्माकं समानोदर्यं जटायुं च आदरात् स्तुथ ( यूयं के )" ।

**व्याख्या**—आत्मनः = स्वान्, परिदेवध्वे = शोचथ, रामसङ्कथां=राघवसत्कथां, कुर्वन्तः = विदधतः, अस्माकं=मम, समानोदर्यं=सोदर्यं भ्रातरं, जटायुं च = जटायुषं च, आदरात्=सम्मानात् , स्तुथ=स्तुतिं कुरुथ, "जटायुः पुण्यकृदित्यादिने"ति भावः । ( अतः के यूयमिति पूर्वतोऽनुवर्तनीयम् ) ।

*व्युत्पत्तिः* आत्मनः—शासि "अल्लोपोऽन" इति प्राप्तस्य अल्लोपस्य "न संयोगाद्वमन्तात्" इति प्रतिषेधः। परिदेवध्वे—परिपूर्वकात् "देवृ देवने" इति भौवादिकधातोर्लट्। समानोदर्यं—समाने उदरे शयितः समानोदर्यस्तं, "समानोदरे शयित ओ चोदात्तः" इति यत्। "समानोदर्यसोदर्यसगर्भ्यसहजाः समाः।" इत्यमरः। स्तुथ—"ष्टुञ् स्तुतौ" इति धातोर्लट्।

*भाषाऽर्थः* अपनेको शोक करते हो और रामकी उत्तम कथाको कहते हुए मेरे सहोदर भाई जटायुकी आदरके साथ स्तुति करते हो (तुम लोग कौन हो ?)" ॥८६॥

शङ्काधवित्रवचनं प्रत्यूचुर्वानराः खगम्।
वयं शत्रुलवित्रेषोर्दूता रामस्य भूपतेः ॥ ८७ ॥

**अन्वय**—वानराः शङ्काधवित्रवचनं खगं प्रत्यूचुः—"वयं शत्रुलवित्रेषोः भूपतेः रामस्य दूताः ॥ ८७ ॥

**व्याख्या**—वानराः = कपयः, शङ्काधवित्रवचनं=त्रासाऽपनोदनवाक्यं, खगं = पक्षिणं, संपातिमित्यर्थः। प्रत्यूचुः=प्रत्युक्तवन्तः, वयं = वानराः, शत्रुलवित्रेषोः=वैरिच्छेदनबाणस्य, भूपतेः = राज्ञः, रामस्य = रामचन्द्रस्य, दूताः = सन्देशहराः।

*व्युत्पत्तिः* शङ्काधवित्रवचनं - धुनोति (अपनयति) अनेनेति धवित्रम्, "अर्तिलूधूसूखनसहचर इत्रः" इति करणे इत्रः। धवित्रपदमत्र यौगिकरूपेण प्रयुक्तं बोध्यम्। "धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा।" इति नामलिङ्गाऽनुशासने तु योगरूढं बोद्धव्यम्। शङ्कायाः (अस्मान्भक्षयिष्यत्ययमित्याकारकस्य त्रासस्य) धवित्रं वचनं यस्य तम्। खगं—खे गच्छतीति खगस्तम्, "अन्येभ्योऽपि दृश्यते" इति डः। "खगे विहङ्गविहगविहङ्गमविहायसः।" इत्यमरः। शत्रुलवित्रेषोः—लूयते एभिरिति लवित्राः, "लूञ् छेदने" इति धातोः पूर्वसूत्रेण इत्रप्रत्ययः। शत्रूणां लवित्रा इषवो यस्य तस्य।

*भाषाऽर्थः* वानरोंने शङ्का हटानेवाले वचनसे युक्त पक्षीको उत्तर दिया—"हमलोग शत्रुच्छेदन करने वाले बाणोंसे युक्त महाराज रामचन्द्रके दूत हैं ॥ ८७ ॥

केनाऽपि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम्।
हृतां महाकुलीनस्य तस्य लिप्सामहे वयम् ॥ ८८ ॥

**अन्वयः**—वयं केनाऽपि दौष्कुलेयेन हृतां माहाकुलीनस्य तस्य कुल्यां माहाकुलीं प्रियां लिप्सामहे।

**व्याख्या**—वयं=वानराः, केनाऽपि=अनिर्वाच्यनामधेयेन, दौष्कुलेयेन=दुष्कुलाऽपत्येन, हृतां=मुषितां, माहाकुलीनस्य=महाकुलापत्यस्य, तस्य=रामचन्द्रस्य, कुल्यां=वंशसाध्वीं, माहाकुलीं=महाकुलप्रसूतां, प्रियां = वल्लभां, लिप्सामहे=लब्धुमिच्छामः।

*व्युत्पत्तिः* दौष्कुलेयेन—दुष्टं कुलं दुष्कुलं, "कुगतिप्रादयः" इति समासः।

दुष्कुलस्याऽपत्यं पुमान् दौष्कुलेयस्तेन, "दुष्कुलाड्ढक्" इति ढक्, पक्षे खः दुष्कुलीनः। माहाकुलीनस्य—महाकुलस्याऽपत्यं पुमान् माहाकुलीनस्तस्य, "महाकुलादञ्खञौ" इति खञ्। कुल्यां—कुले साध्वी कुल्या, तां "तत्र साधुः" इति यत्। माहाकुलीं—महाकुलस्याऽपत्यं स्त्री माहाकुली, तां "महाकुलादञ्खञौ" इति अञ्। प्रियां—प्रीणातीति प्रिया, ताम्, "इगुपधज्ञाप्रीकिरः कः" इति कः।

❀भाषाऽर्थः❀—हमलोग, किसी दुष्कुलमें उत्पन्न पुरुषसे चुराई गई, महाकुलमें उत्पन्न वंशमें साध्वी (रामकी) प्रिया सीताको पानेकी इच्छा करते हैं ॥ ८८ ॥

**त्रिंशत्तममहर्यातं मत्वा प्रत्यागमाऽवधिम् ।**
**अकृताऽर्था विषीदन्तः परलोकमुपास्महे ॥ ८९ ॥**

**अन्वयः**—प्रत्यागमाऽवधिं त्रिंशत्तमम् अहः यातं मत्वा अकृताऽर्था विषीदन्तः (वयम्) परलोकम् उपास्महे ।

**व्याख्या**—प्रत्यागमाऽवधिं = निवर्तनकालं, त्रिंशत्तमं = त्रिंशतः पूरणम्, अहः = दिनं, यातं = गतं, मत्वा = ज्ञात्वा, अकृताऽर्थाः = अनिष्पादितप्रयोजनाः, वयमिति शेषः । विषीदन्तः = विषादं गच्छन्तः, परलोकम् उपास्महे = अनशनेन म्रियामहे ।

❀व्युत्पत्तिः❀ प्रत्यागमाऽवधिं—प्रत्यागमस्याऽवधिस्तम्, "अवधिस्त्ववधाने स्यात्सीम्नि काले बिले पुमान् ।" इति मेदिनी । त्रिंशत्तमं—पूरणाऽर्थे "विंशत्यादिभ्यस्तमडन्यतरस्याम्" इति तमट् । अकृताऽर्थाः—अकृतोऽर्थो यैस्ते ।

❀भाषाऽर्थः❀लौटनेकी अवधि तीसवें दिनको बीता हुआ मानकर कृतकृत्य न होकर और विषाद करते हुए हमलोग अनशनसे मरते हैं ॥ ८९ ॥

**म्रियामहे न गच्छामः कौशल्यायनिवल्लभाम् ।**
**उपलम्भ्यामपश्यन्तः कौमारीं पततां वर ! ॥ ९० ॥**

**अन्वयः**—हे पततां वर ! उपलम्भ्यां कौमारीं कौशल्यायनिवल्लभाम् अपश्यन्तो (वयम्) म्रियामहे, न गच्छामः" ।

**व्याख्या**—हे पततां वर = पक्षिणां श्रेष्ठ, उपलम्भ्यां = प्रशंसनीयां, कौमारीम् = अकृतपूर्वदाररतिं लब्धवर्तीं, कौशल्यायनिवल्लभां = रामप्रियामित्यर्थः । अपश्यन्तः = अनुपलभमानाः, (वयम्) म्रियामहे = प्राणांस्त्यजामः, न गच्छामः = न व्रजामः, स्ववासस्थानं किष्किन्धाद्रिमिति शेषः ।

❀व्युत्पत्तिः❀ उपलम्भ्याम्—उपपूर्वकात् "डुलभष् प्राप्तौ" इति धातोः "पोरदुपधात्" इति यत् । "उपात्प्रशंसायाम्" इति प्रशंसायां नुम् । कौमारीं—"कौमाराऽपूर्ववचने" इति साधुः । कौशल्यायनिवल्लभां—कोशलानां राजा कौशल्यो दशरथः, तस्या-

पत्यं पुमान् कौशल्यायनिः दासरथी राम इत्यर्थः । "कौशल्यकार्मार्याभ्यां च" इति परमप्रकृतेः कोशलशब्दादपत्यार्थे फिञ् प्रत्ययः, तत्सन्नियोगात् कोशलशब्दस्य कौशल्यभावनिपातः । कोशलशब्दो दन्त्यसकारयुक्तोऽप्युपलभ्यते ।

ॐभाषाऽर्थःॐ हे पक्षिश्रेष्ठ ! प्रशंसनीय और अन्य कुमारीसे विवाह नहीं किये हुए पतिको प्राप्त करनेवाली रामप्रिया सीताको न पानेसे हमलोग मरते हैं, ( सुग्रीवके पास ) नहीं जाते हैं" ॥ ९० ॥

अथ किंवदन्तिशेषाऽधिकारः ।

जगाद वानरान् पक्षी 'नाध्यगाढ्वं ध्रुवं स्मृतिम् ।
यूयं संकुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ ॥ ९१ ॥

**अन्वयः**—पक्षी वानरान् जगाद—'यूयं ध्रुवं स्मृतिं न अध्यगीढ्वं, यस्मात् अस्मिन् काले सङ्कुटितुम् अध्यवस्यथ ।

**व्याख्या**—पक्षी = सम्पातिः, वानरान् = कपीन्, जगाद = उवाच, यूयं = वानराः, ध्रुवम् = अवश्यं, स्मृतिं = धर्मशास्त्रं, न अध्यगीढ्वं = न अधीतवन्तः, यस्मात् = यतः कारणात्, अस्मिन् = एतस्मिन्, काले = समये, संकुटितुं = विनशितुम्, अध्यवस्यथ = अभिप्रायं कुरुथ ।

ॐव्युत्पत्तिःॐ स्मृतिं—"धर्मशास्त्रं तु वै स्मृतिः" इति मनुः। अध्यगीढ्वम्—अधिपूर्वकात् "इङ् अध्ययने "इति धातोर्लुङि मध्यमपुरुषे बहुवचनम् । "विभाषा लुङ्लृङोः" इति विभाषया गाङादेशः "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इति सिचो ङित्वम् । "घुमास्थागापाजहातिसां हलि" इतीत्वं, "धि च" इति सिचो लोपः । "इणः षीध्वंलुङ्लिटां धोऽङ्गात्" इति धस्य मूर्धन्यादेशः । संकुटितुं = संपूर्वकात् "कुट कौटिल्ये" इति धातोः "समानकर्तृकेषु तुमुन्" इति तुमुन् । कुटादित्वात् पूर्वसूत्रेण प्रत्ययस्य ङित्वं, ततः "क्ङिति च" इति गुणनिषेधः ।

ॐभाषाऽर्थःॐ संपातिने वानरोंको कहा—"तुमलोगोंने अवश्य धर्मशास्त्र नहीं पढ़ा है, जो कि इस समय मरनेका अभिप्राय कर रहे हो ॥ ९१ ॥

नाऽयमुद्विजितुं कालः स्वामिकार्याद् भवादृशाम् ।
हृतभार्ये च्युते राज्याद् रामे पर्युत्सुके भृशम् ॥ ९२ ॥

**अन्वयः**—रामे राज्यात् च्युते हृतभार्ये भृशं पर्युत्सुके ( सति ) भवादृशां स्वामिकार्यादुद्विजितु न अयं कालः ।

**व्याख्या**—रामे = रामचन्द्रे, राज्यात् = राष्ट्रात्, च्युते = भ्रष्टे, तत्राऽपि— हृतभार्ये = अपहृतपत्नीके, अत एव भृशम् = अत्यर्थं, पर्युत्सुके = उत्कण्ठिते सति, सीतायामिति शेषः । भवादृशां = भवत्सदृशानां, स्वामिभक्तानामिति भावः । स्वामि-

कार्यात् = प्रभुकृत्यात्, उद्विजितुम् = उच्चलितुं, न अयं कालः = न एष समयः ।

ॐव्युत्पत्तिःॐ राज्यात्—राज्ञो भावः कर्म वा राज्यं, तस्मात् । "राजाऽसे" इति गणसूत्रेण यक्। हृताभार्ये—हृता भार्या यस्य तस्मिन् । स्वामिकार्यात् = स्वमस्याऽतीति स्वामी, "स्वामिन्नैश्वर्ये" इति आमिनच्प्रत्ययान्तो निपातः । स्वामिनः कार्यात् । उद्विजितुम्—उत्पूर्वकात् "ओविजी भयचलनयोः" इति धातोस्तुमुन्, "विज इट्" इति ङित्त्वाद्गुणाऽभावः ।

ॐभाषाऽर्थःॐ रामके राज्यसे भ्रष्ट और सीताजीके हरण किये जानेसे सीतामें अत्यन्त उत्कण्ठित होने पर तुम्हारे-जैसे सेवकोंको स्वामीके कार्यमें उद्विग्न होनेका यह समय नहीं है ॥ ९२ ॥

**यत्नं प्रोर्णवितुं तूर्णं दिशं कुरुत दक्षिणाम् ।**
**प्रोर्णुवित्रीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीम् ॥ ९३ ॥**

**अन्वयः**—दक्षिणां दिशं प्रोर्णवितुं तूर्णं यत्नं कुरुत, तत्र दिवः प्रोर्णुवित्रीं काञ्चनीं पुरीं द्रक्ष्यथ ।

**व्याख्या**—दक्षिणां दिशम् = अवाचीं, प्रोर्णवितुम् = आच्छादयितुं, तूर्णं = सत्वरं, यत्नं = प्रयासं, कुरुत = विधत्त, तत्र = दक्षिणास्यां दिशि, दिवः = आकाशस्य, प्रोर्णुवित्रीम् = अभिव्यापिनीं, काञ्चनीं = सौवर्णीं, पुरीं = नगरीं, द्रक्ष्यथ = विलोकयिष्यथ ।

ॐव्युत्पत्तिःॐ प्रोर्णवितुं—प्रपूर्वकात् "ऊर्णुञ् आच्छादने" इति धातोस्तुमुन् "विभाषोर्णोः" इति ङित्वाऽभावे गुणः । कुरुत—"सार्वधातुकमपित्" इति ङित्त्वे उप्रत्ययस्य न गुणः । तस्य ( उप्रत्ययस्य ) आर्धधातुकत्वादङित्त्वे धातोर्गुणः । "अत उत्सार्वधातुके" इति उत् । दिवः "प्रोर्णुवित्रीम्" इति पदेन योगे कर्मणि षष्ठी । प्रोर्णुवित्रीं—प्रोर्णोतीति प्रोर्णुवित्री, ताम् । "ण्वुल्तृचौ" इति तृच् । पूर्वसूत्रेण ङित्वे उवङ् स्त्रीत्वविवक्षायाम् "ऋन्नेभ्यो ङीप्" इति ङीप् । काञ्चनीं = काञ्चनस्य विकारः काञ्चनी, तां "प्राणिरजतादिभ्योऽञ" इति अञ् । द्रक्ष्यथ—"दृशिर् प्रेक्षणे" इति धातोर्लृट् । "सृजिदृशोर्झल्यमकिति" इति अमागमश्च ।

ॐभाषाऽर्थःॐ तुमलोग दक्षिण दिशाको आच्छादन करनेके लिए शीघ्र यत्न करो, वहां पर आकाशको व्याप्त करने वाली सुवर्णनिर्मित नगरीको देखोगे ॥ ९३ ॥

**लङ्कां नाम्ना गिरेर्मूर्ध्नि राक्षसेन्द्रेण पालिताम् ।**
**निर्जित्य शक्रमानीता ददृशुर्यां सुरस्त्रियः ॥ ९४ ॥**

**अन्वयः**—गिरेः मूर्ध्नि राक्षसेन्द्रेण पालितां नाम्ना लङ्कां यां शक्रं निर्जित्य आनीताः सुरस्त्रियो ददृशुः ।

व्याख्या—गिरेः = सुवेलनामकस्य पर्वतस्य, मूर्ध्नि=शिरसि, शिखर इत्यर्थः । राक्षसेन्द्रेण = राक्षसराजेन, रावणेनेत्यर्थः । पालितां = रक्षिताम्, एतेन दुर्गमत्वमाख्यातम् । नाम्ना = आख्यया, लङ्कां, यां = पुरीं, शक्रम् = इन्द्रम्, निर्जित्य = पराजित्य, आनीताः = आहृताः, सुरस्त्रियः = देवललनाः, ददृशुः = दृष्टवत्यः । तां यातेति वक्ष्यमाणेन सम्बन्धः ।

⊛व्युत्पत्तिः⊛ नाम्ना—"प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया । ददृशुः—दृश्धातोर्लिट् । "असंयोगाल्लिट् कित्" इति कित्त्वाद्गुणाऽभावः ।

⊛भाषाऽर्थः⊛ सुवेल पर्वतकी चोटीमें राक्षसराजसे रक्षित लङ्का नामकी जिस नगरीको, इन्द्रको जीतकर लाई गई देवललनाओंने देखा ( वहां पर जाओ ) ॥९४॥

बभूव याऽधिशैलेन्द्रं मृदित्वेवेन्द्रगोचरम् ।
कुषित्वा जगतां सारं सैका शङ्के कृता भुवि ॥ ९५ ॥

अन्वयः—या अधिशैलेन्द्रम् इन्द्रगोचरं मृदित्वा इव बभूव, जगतां सारं कुषित्वा सा एका भुवि कृता ( इति ) शङ्के ।

व्याख्या—या = पुरी, अधिशैलेन्द्रं = सुमेरुपर्वतस्य उपरि, इन्द्रगोचरं = शक्रविषयम्, अमरावत्याख्यमित्यर्थः । मृदित्वा इव = तिरस्कृत्य इव, बभूव = अस्ति स्म, जगतां = भुवनानां, सारं = श्रेष्ठपदार्थं, कुषित्वा = निष्कृष्य, सा = लङ्का, एका= एकाकिनी, भुवि = भूमौ, कृता = निर्मिता, ( इति = इत्थम् ) शङ्के = आशंसे, पृथिव्यामद्वितीयत्वेन सा रचितेति मदीया सम्भावना, तां यातेति भावः ।

⊛व्युत्पत्तिः⊛ अधिशैलेन्द्रं—शैलेन्द्र इति, "अव्ययं विभक्ती"त्यादिनाऽव्ययीभावः । मृदित्वा—"मृद क्षोदे" इति धातोः क्त्वा, "न क्त्वा सेट्" इति कित्त्वप्रतिषेधे प्राप्ते "मृडमृदगुधकुषक्लिशवदवसः क्त्वा" इति कित्त्वम् । बभूव—"इन्धिभवतिभ्यां च" इति कित्त्वमिति जयमङ्गलः । वस्तुतस्तु सूत्रमिदं प्रत्याख्यातम् । "इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्" इति वार्तिकम् । वुक् नित्यत्वादेव गुणवृद्धी बाधिष्यते तस्मात्कृतमनेन सूत्रेणेति तात्पर्यम् । कुषित्वा—"कुष निष्कर्षे" इति धातोः क्त्वाप्रत्ययः । मृदित्वेतिवत् प्रक्रिया ज्ञेया ।

⊛भाषाऽर्थः⊛ जो लङ्का, सुमेरुपर्वतके ऊपर इन्द्रकी पुरी अमरावतीको तिरस्कारकर रही हुई की तरह मालूम पड़ती है, जगत्के सार पदार्थको निष्कृष्टकर पृथ्वीमें वह अद्वितीय बनाई गई है, ऐसा मैं सम्भावना करता हूं ॥ ९५ ॥

अमृडित्वा सहस्राऽक्षं क्लिशित्वा कौशलैर्निजैः ।
उदित्वाऽलं चिरं यत्नात् सैका धात्रा विनिर्मिता ॥ ९६ ॥

**अन्वयः**—सहस्राऽक्षम् अमृडित्वा निजैः कौशलैः चिरं क्लिशित्वा उदित्वा अलं यत्नात् सा एका धात्रा विनिर्मिता ।

**व्याख्या**—सहस्राऽक्षम् = इन्द्रम् अमृडित्वा = असुखिनं कृत्वा, निजैः = आत्मीयैः, कौशलैः = नैपुण्यैः, चिरं = बहुकालपर्यन्तं, क्लिशित्वा = क्लेशं कृत्वा, प्रयत्नं कृत्वेत्यर्थः । उदित्वा = अभिधाय, अलं = पर्याप्तम्, एवं करिष्यामीति शेषः । यत्नात् = आयासात्, सा = लङ्का, एका = एकाकिनी धात्रा = ब्रह्मणा, विनिर्मिता = विरचिता ।

**व्युत्पत्तिः** सहस्राऽक्षं—सहस्रम् अक्षीणि यस्य स सहस्राक्षस्तं, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समासाऽन्तः षच् । अमृडित्वा—"मृड सुखने" इति धातोः क्त्वाप्रत्ययः । "मृडे"त्यादिना कित्त्वम् । क्लिशित्वा—"क्लिश उपतापे" इति दैवादिकाद्धातोः पूर्वसूत्रेण कित्वं, "क्लिशः क्त्वानिष्ठयोः" इति वेट्, पक्षान्तरे क्लिष्ट्वा । उदित्वा—वद्धातोः क्त्वाप्रत्ययः, पूर्वसूत्रेण कित्वं, "वचिस्वपियजादीनां किति" इति सम्प्रसारणम् ।

**भाषाऽर्थः** इन्द्रको सुखी न बनाकर अपने कौशलोंसे बहुत कालतक प्रयत्न कर कहने की आवश्यकता नहीं है, यत्नपूर्वक वह एक लङ्कापुरी ब्रह्माजीसे बनाई गई है ॥ ९६ ॥

**मुषित्वा धनदं पापो यां गृहीत्वाऽवसद् द्विषन् ।**
**तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षिताम् ॥ ९७ ॥**

**अन्वयः**—पापो द्विषन् धनदं मुषित्वा यां गृहीत्वा अवसत्, शक्रेण रुदित्वा इव उपेक्षितां तां यात ।

**व्याख्या**—पापः = अधार्मिकः, द्विषन् = शत्रुः, रावण इत्यर्थः । धनदं=कुबेरं, मुषित्वा = अपहृत्य, यां = लङ्कां, गृहीत्वा = उपादाय, स्वत्वेनेति शेषः । अवसत् = उषितः, शक्रेण = इन्द्रेण, रुदित्वा इव = अश्रूणि विमोच्य इव, उपेक्षिताम् = अवधीरितां, तां = लङ्कां, यात = गच्छत ।

**व्युत्पत्तिः**धनदं—धनं ददातीति धनदस्तम्, "आतोऽनुपसर्गे कः" इति कः, "अकथितं च" इति कर्मत्वम् । "मनुष्यधर्मा धनदो राजराजो धनाऽधिपः ।" इत्यमरः । मुषित्वा—"रुद्विदे"त्यादिना कित्वम् । रुदित्वा "रुदिर् अश्रुविमोचने" इति धातोः क्त्वाप्रत्ययः, पूर्वसूत्रेण कित्वम् ।

**भाषाऽर्थः** पापी शत्रु रावण, कुबेरसे छीनकर जिस (लङ्का) को लेकर रहा, इन्द्रसे रोकर उपेक्षितकी तरह उस लङ्काको चले जाओ ॥ ९७ ॥

**विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः ।**
**उक्तं पिपृच्छिषूणां वो मा स्म भूत सुषुप्सवः ॥ ९८ ॥**

**अन्वयः**—आत्मीयां शक्तिं विदित्वा रावणं विजिघृक्षवः ( यूयम् ) सुषुप्सवो मा स्म भूत । पिपृच्छिषूणां वः उक्तम् ।

**व्याख्या**—आत्मीयां = स्वकीयां, शक्तिं = सामर्थ्यं, विदित्वा = ज्ञात्वा-रावणं = लङ्कापतिं, विजिघृक्षवः = विग्रहीतुमिच्छवः, यूयमिति शेषः । सुषुप्सवः=स्वप्तुमिच्छवः, मा स्म भूत = नो भवत, प्रमत्ता न भवतेति भावः । पिपृच्छिषूणां = प्रष्टुमिच्छूनां, वः=युष्माकम्, उक्तम्=अभिहितं, मयेति शेषः ।

❀व्युत्पत्तिः❀ विदित्वा—"विद ज्ञाने" इति धातोः क्त्वाप्रत्ययः, "रुदविदे"त्यादिना कित्त्वम् । विजिघृक्षवः—विपूर्वकात् ग्रहधातोः सन्नन्तादुप्रत्ययः । सुषुप्सवः—"ञिष्वप् शये" इति सन्नन्ताद्धातोः उप्रत्ययः, सम्प्रसारणं च । मा स्म भूत "स्मोत्तरे लङ् च" इति लुङ्, "न माङ्योगे" इत्यडागमाऽभावः । पिपृच्छिषूणां "प्रच्छ ज्ञीप्सायाम्" इति सन्नन्ताद्धातोः उप्रत्ययः । पूर्वसूत्रेणैव सनः कित्त्वे सम्प्रसारणम् । "किरश्च पञ्चभ्य" इतीडागमः ।

❀भाषाऽर्थः❀ अपनी शक्ति जानकर रावणसे विग्रह ( युद्ध ) की इच्छा करनेवाले तुम लोग प्रमत्त ( गाफिल ) मत हो, प्रश्नकी इच्छा करनेवाले तुमलोगोंको मैंने कह दिया है ॥ ९८ ॥

**नाऽविविदिषुमभ्येति सम्पद्रुरुदिषुं नरम् ।**
**किं मुमुषिषुवद् यात द्विषो नाऽपचिकीर्षया ॥ ९९ ॥**

**अन्वयः**—सम्पत् अविविदिषुं रुरुदिषुं नरम् न अभ्येति, द्विषः अपचिकीर्षया मुमुषिषुवत् किं न यात ? ।

**व्याख्या**—संपत् = सम्पत्तिः, अविविदिषुं = ज्ञानाऽनभिलाषुकं, रुरुदिषुं=रोदनेच्छुं, नरं = जनं, न अभ्येति = न आगच्छति, द्विषः = शत्रोः, अपचिकीर्षया = अपकारेच्छया, मुमुषिषुवत् = मोषितुमिच्छव इव, चौरवदित्यर्थः किं = किमर्थं; न यात = न गच्छत, सहत्वरं गच्छतेति भावः ।

❀व्युत्पत्तिः❀ अविविदिषुं—वेत्तुमिच्छुर्विविदिषुः, सन्नन्ताद्विदेरुः । न विविदिषुः अविविदिषुस्तम् । रुरुदिषुं-रोदितुमिच्छू रुरुदिषुस्तं, सन्नन्ताद्रुदेरुः । अपचिकीर्षया-अपकर्तुमिच्छा अपचिकीर्षा, तया । अपपूर्वकात् सन्नन्तात्कृधातोः "अ प्रत्ययात्" इति अप्रत्ययः । "इको झल्" इति कित्त्वे गुणाऽभावः । "ऋत इद्धातोः" इति इत्त्वम् । "अज्झनगमां सनि" इति दीर्घत्वम् । मुमुषिषुवत्—मोषितुमिच्छुर्मुमुषिषुः, सन्नन्ता-

न्मुषधातोरुः । त्रिष्वपि स्थानेषु "रुदविदे"त्यादिना कित्वम् । मुमुषिषुणा तुल्यम्, वतिप्रत्ययः ।

ॐभाषाऽर्थःॐ सम्पत्ति ज्ञानका अभिलाष न करनेवाले और रोनेकी इच्छा करनेवाले पुरुषके पास नहीं आती है । तुमलोग शत्रुके अपकारकी इच्छासे चोरके सदृश क्यों नहीं जाते हो ? ॥ ९९ ॥

बुभुत्सवो द्रुतं सीतां भुत्सीध्वं प्रब्रवीमि वः ।
मा च भुद्ध्वं मृषोक्तं नः कृषीढ्वं स्वामिने हितम् ॥ १०० ॥

**अन्वयः**—बुभुत्सवः सीतां द्रुतं भुत्सीध्वं, वः प्रब्रवीमि । नो मृषोक्तं मा च भुद्ध्वम्; स्वामिने हितं कृषीढ्वम् ।

**व्याख्या**—बुभुत्सवः=ज्ञानाऽभिलाषिणः, सीताया इति शेषः । यूयं, सीतां=मैथिलीं, द्रुतं=सत्वरं, भुत्सीध्वं=जानीत, इति वः=युष्मान्, प्रब्रवीमि=कथयामि । नः=अस्माकं, मृषोक्तं=मिथ्याऽभिहितं, मा च भुद्ध्वं = न जानीत, अपि तु सत्यं जानीतेति भावः । स्वामिने=प्रभवे, रामायेत्यर्थः । हितं=पथ्यं, कृषीढ्वं=कुरुत ।

ॐव्युत्पत्तिःॐ बुभुत्सवः—बोद्धुमिच्छवः, सन्नन्तात् "बुध अवगमने" इति धातोरुप्रत्ययः । "हलन्ताच्च" इति कित्वम्, "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति भष्भावः । भुत्सीध्वं—"बुध अवगमने" इति दैवादिकाद्धातोराशिर्लिङ् । "लिङ्सिचावात्मनेपदेषु" इति कित्वम् । मा भुद्ध्वं—बुधधातोः "माङि लुङ्" इति लुङ्, "न माङ्योगे" इत्यडागमाऽभावः । "झलो झलि" इति सिचो लोपः, "झलां जश् झशि" इति जश् । कित्वं भष्भावश्च पूर्ववद्बोध्यौ । स्वामिने—"हितयोगे च" इति चतुर्थी । कृषीढ्वं "डुकृञ् करणे" इति धातोराशीर्लिङ् । "उश्च" इति कित्वम्, "इणः षीध्वंलुङ्लिटां धोऽङ्गात्" इति मूर्धन्यादेशः ।

ॐभाषाऽर्थःॐ सीताको जाननेकी इच्छा करनेवाले तुमलोग सीताको शीघ्र जान लो, तुम लोगोंको मैं कहता हूँ । मेरी बातको झूठ मत मानो, स्वामी रामका हितकार्य करो ॥ १०० ॥

समगध्वं पुरः शत्रोर्मोदयध्वं रघूत्तमम् ।
नोपायध्वं भयं सीतां नोपायंस्त दशाननः ॥ १०१ ॥

**अन्वयः**—शत्रोः पुरः समगध्वं, रघूत्तमं मोदयध्वम्, भयं न उपायध्वं, दशाननः सीतां न उपायंस्त ।

**व्याख्या**—शत्रोः = रिणः, रावणस्येत्यर्थः । पुरः=अग्रतः, समगध्वं = संगता भवत । रघूत्तमं = राघवश्रेष्ठं, राममित्यर्थः । मोदयध्वं = हर्षयत, तत्कार्यकरणा-

दिति भावः। भयं = भीतिं, न उपायध्वं=न सूचयत, भयं मा कार्ष्टेत्यर्थः। दशाननः= रावणः, सीतां = मैथिलीं, न उपायंस्त = न स्वीकृतवान् स्यात्।

॥व्युत्पत्तिः॥ समगध्वं—संपूर्वाद्गम्धातोः "आशंसायां भूतवच्च" इति लुङ्। अप्राप्तस्य प्राप्तुमिच्छा आशंसा। "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदम्। "वा गमः" इति सिचः कित्वे "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपः। "ह्रस्वादङ्गात्" इति सिचो लोपः। रघूत्तमं—रघुषु ( रघुवंश्येषु राजसु, लक्षणया एषोऽर्थः ) उत्तमो रघूत्तमस्तम्। मोदयध्वं णिजन्तात् "मुद हर्षे" इति धातोर्लोट्। उपायध्वम्—उपाङ्पूर्वकात् "यम उपरमे" इति धातोर्लुङ्। "आङो यमहनः" इत्यात्मनेपदम्। "यमो गन्धने" इति सिचः कित्वे अनुनासिकलोपः, गन्धनं सूचनम्। उपायंस्त—"आशंसायां भूतवच्च" इत्यनिष्टाशंसायां लुङ्। "उपाद्यमः स्वकरणे" इत्यात्मनेपदम्। स्वकरणं स्वीकारः। "विभाषोपयमने" इति कित्वाऽभावपक्षे अनुनासिकलोपाऽभावे रूपमेतत्।

॥भाषाऽर्थः॥ श के आगे संगत होवो, रामचन्द्रजीको प्रसन्न करो। मत डरो, रावणने सीताको स्वीकार नहीं किया होगा॥ ॥ १०१ ॥

ततः प्रास्थिषताऽद्रीन्द्रं महेन्द्रं वानरा द्रुतम्।
सर्वे किलकिलायन्तो धैर्यं चाऽऽधिषताऽधिकम्॥ १०२ ॥

**अन्वयः**—ततः सर्वे वानराः किलकिलायन्तः ( सन्तः ) अद्रीन्द्रं महेन्द्रं द्रुतं प्रास्थिषत धैर्यं च अधिकम् आधिषत।

**व्याख्या**—ततः = सम्पातिवचनाऽनन्तरं, सर्वे = समस्ताः, वानराः = कपयः, किलकिलायन्तः = किलकिलाध्वनिं कुर्वाणाः सन्तः, अद्रीन्द्रं = पर्वतश्रेष्ठं, महेन्द्रं = कुलपर्वतविशेषं, द्रुतं = शीघ्रं, प्रास्थिषत = प्रस्थितवन्तः, धैर्यं च = धीरत्वं च, अधिकम् = अतिरिक्तं यथा तथा, आधिषत = आहितवन्तः, आत्मनीति शेषः।

॥व्युत्पत्तिः॥ किलकिलायन्तः—"अव्यक्ताऽनुकरणाद्द्व्यजवरार्धादनितौ डाच्" इति डाच्, तदन्तात् "लोहितादिडाज्भ्यः क्यष्" इति क्यष्, "वा क्यषः" इति वैकल्पिकं परस्मैपदम्। प्रास्थिषत—प्रपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोर्लुङि प्रथमपुरुषबहुवचने रूपम्। "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्। "स्थाघ्वोरिच्च" इति कित्वमित्वं च। आधिषत—आङ्पूर्वकाद्धधातोर्लुङि प्रथमपुरुषबहुवचने रूपम्। कित्वमित्वं च पूर्ववद् बोध्यम्।

॥भाषाऽर्थः॥ सम्पातिके कथनके अनन्तर सब वानरोंने किलकिल शब्द करते हुए पर्वतश्रेष्ठ महेन्द्रको प्रस्थान किया और धैर्यको भी अधिक आधान किया॥१०२॥

कुलकम् १०३—१०७—

निकुञ्जे तस्य पतित्वा रम्ये प्रदवेदिताः परम्।

**मणिरत्नाऽधिशयितं प्रत्युदैक्षन्त तोयधिम् ॥ १०३ ॥**

**अन्वयः**—तस्य रम्ये निकुञ्जे वर्तित्वा परं प्रक्ष्वेदिताः ( ते ) मणिरत्नाऽधिशयितं तोयधिं प्रत्युदैक्षन्त ।

**व्याख्या**—तस्य = महेन्द्रपर्वतस्य, रम्ये = सुन्दरे, निकुञ्जे = लताऽऽदिपिहितस्थाने, वर्तित्वा = स्थित्वा, परम् = अत्यर्थं, प्रक्ष्वेदिताः = अव्यक्तशब्दं कुर्वाणाः, ( ते = वानराः ) मणिरत्नाऽधिशयितं = मणिश्रेष्ठाऽवस्थानं, तोयधिं = समुद्रं, प्रत्युदैक्षन्त = दृष्टवन्तः ।

**%व्युत्पत्तिः%** वर्तित्वा—"वृतु वर्तने" इति धातोः क्त्वाप्रत्ययः । "न क्त्वा सेट्" इति कित्त्वप्रतिषेधः । प्रक्ष्वेदिताः—प्रपूर्वकात् "ञिक्ष्विदा अव्यक्ते शब्दे" इति धातोः क्तप्रत्ययः । "निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" इति कित्त्वनिषेधः । मणिरत्नाऽधिशयितं—मणिषु रत्नानि ( श्रेष्ठानि ) इति मणिरत्नानि, एतेन समुद्रस्य प्राशस्त्यं द्योत्यते । अधिशेरतेऽस्मिन्निति अधिशयितं, "क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानाऽर्थेभ्य" इति क्तः । पूर्ववत्कित्त्वप्रतिषेधः । तोयधि—तोयानि धीयन्तेऽस्मिन्निति तोयधिस्तं, "कर्मण्यधिकरणे च" इति किः । प्रत्युदैक्षन्त—प्रत्युत्पूर्वकात् "ईक्ष दर्शने" इति धातोर्लङ् ।

**%भाषाऽर्थः%** महेन्द्र पर्वतके सुन्दर लतागृहमें रहकर उच्च शब्द करनेवाले उन वानरोंने श्रेष्ठ मणियोंके आधार समुद्रको देखा ॥ १०३ ॥

**अमर्षितमिव घ्नन्तं तटाऽद्रीन् सलिलोर्मिभीः ।**
**श्रिया समग्रं द्युतितं मदेनेव प्रलोठितम् ॥ १०४ ॥**

**अन्वयः**—सलिलोर्मिभिः तटाऽद्रीन् अमर्षितम् इव घ्नन्तं, श्रिया समग्रं द्युतितं, मदेन इव श्रिया प्रलोठितम् ।

**व्याख्या**—सलिलोर्मिभिः = जलतरङ्गैः, तटाऽद्रीन् = तीरस्थान् पर्वतान्, अमर्षितम् इव = कुपितं यथा तथैव, घ्नन्तं = ताडयन्तं, श्रिया = शोभया हेतुभूतया, समग्रं = संपूर्णं, द्युतितं = शोभितं, मदेन इव=मत्ततया इव, श्रिया = लक्ष्म्या, प्रलोठितं = घूर्णितुमारब्धम् , यत्र तमिति अध्याहृत्य तोयधिं प्रत्युदैक्षन्त इति पूर्वस्थाभ्यां पदाभ्यां सम्बन्धः कार्यः ।

**%व्युत्पत्तिः%** अमर्षितं—"मृष तितिक्षायाम्" इति धातोः क्तः । "मृषस्तितिक्षायाम्" इति कित्त्वप्रतिषेधः । पश्चान्नञ्समासः । द्युतितं—"द्युत दीप्तौ" इति धातोः क्तः । "उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" इति कित्त्वप्रतिषेधस्य वैकल्पिकत्वात्तदभावपक्षे कित्त्वम् । प्रलोठितम्— "आदिकर्मणि क्तः कर्तरि च" च इति भावे क्तः । "उदुपधादि"त्यादिना कित्त्वप्रतिषेधाल्लघूपधगुणः ।

ॐभाषाऽर्थःॐ जलके तरङ्गोंसे तटस्थित पर्वतोंको जैसे क्रोधसे ताडित करते हुए और जहांपर लक्ष्मी समग्रतासे शोभित हो रही है, एवम् जहांपर जैसे मत्ततासे लक्ष्मीने घूमना आरम्भ किया है; ऐसे समुद्रको उनलोगोंने देखा ॥ १०४ ॥

पूतं शीतैर्नभस्वद्भिर्ग्रन्थित्वेव स्थितं रुचः ।
गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्वतो मुहुः ॥ १०५ ॥

**अन्वयः**—शीतैः नभस्वद्भिः पूतं, रुचो ग्रन्थित्वा इव स्थितं, सर्वतः तरङ्गान् मुहुः गुम्फित्वा इव निरस्यन्तम् ।

**व्याख्या**—शीतैः = शीतलैः, नभस्वद्भिः = वायुभिः, पूतं = पवित्रीकृतं, रुचः= दीप्तीः, ग्रन्थित्वा इव = सन्दर्भ्य इव, स्थितं=विद्यमानं, सर्वतः = समन्ततः, तरङ्गान् = भङ्गान्, मुहुः = भूयः, गुम्फित्वा इव = ग्रन्थित्वा इव, निरस्यन्तं = क्षिपन्तं, तोयधिं प्रत्युदैक्षन्त ।

ॐव्युत्पत्तिःॐ नभस्वद्भिः—नभोऽस्ति स्वत्वेन एषां ते नभस्वन्तः, तैः, मतुप् । वायुर्नभःस्वामीत्यत्राऽर्थे वायुपुराणं यथा—"शब्दाकाशबलानां च वायुरीशस्तथा कृतः ।" इति मुकुटः । पूतं—"पूङ् पवने" इति धातोः क्तः । "पूङश्च" इति इडागमस्य वैकल्पिकत्वात्तदभावः । ग्रन्थित्वा—"ग्रन्थ सन्दर्भे" इति धातोः क्त्वाप्रत्ययः । "नोपधात्थफान्ताद्वा" इति किरवस्याऽभावपक्षे "अनिदितां हल उपधायाः क्ङिति" इति नलोपाऽभावः । सर्वतः—"समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इत्यमरः । गुम्फित्वा—"गुम्फ ग्रन्थे" इति धातोः क्त्वाप्रत्ययः । "नोपधात्थे"त्यादेः किरवस्याऽभावपक्षे रूपम् ।

ॐभाषाऽर्थःॐ ठण्डे वायुओंसे पवित्र, जैसे कान्तियोंको गूंथकर रहा हो, चारों ओरसे तरङ्गोंको वारं वार गुम्फन करके फेंकते हुएके सदृश समुद्रको उन लोगोंने देखा ॥ १०५ ॥

वञ्चित्वाऽप्यम्बरं दूरं स्वस्मिन्स्तिष्ठन्तमात्मनि ।
तृषित्वेवाऽनिशं स्वादु पिबन्तं सरितां पयः ॥ १०६ ॥

**अन्वयः**—अम्बरं दूरं वञ्चित्वा स्वस्मिन् आत्मनि तिष्ठन्तम्, तृषित्वा इव स्वादु सरितां पयः अनिशं पिबन्तम् ( तोयधिं ते प्रत्युदैक्षन्त ) ।

**व्याख्या**—अम्बरम् = आकाशं, दूरं = विप्रकृष्टं यथा तथा, वञ्चित्वा = अतिक्रम्य, स्वस्मिन् = स्वीये, आत्मनि = स्वरूपे, तिष्ठन्तं = विद्यमानं, स्थितेरनुल्लङ्घनादिति भावः । तृषित्वा इव=तृषित इव भूत्वा, स्वादु = मधुरं, सरितां = नदीनां, पयः= जलम्, अनिशं = निरन्तरं, पिबन्तं = धयन्तं, तोयधिं, ते = वानराः, प्रत्युदैक्षन्त । उत्प्रेक्षाऽलङ्कारः ।

※व्युत्पत्तिः※ वञ्चित्वा—"वञ्चु गतौ" इति धातोः क्त्वाप्रत्ययः। "वञ्चिलुञ्च्यृतश्च" इति कित्त्वप्रतिषेधान्नलोपाऽभावः। स्वस्मिंस्तिष्ठन्तम्—"नश्छव्यप्रशान्" इति नकारस्य रुत्वम्। तृषित्वा—"ञितृषा पिपासायाम्" इति दैवादिकाद्धातोः क्त्वाप्रत्ययः। "तृषिमृषिकृशेः काश्यपस्य" इति कित्वम्। वैकल्पिकत्वात्तस्याऽभावपक्षे तर्षित्वा।

※भाषाऽर्थः※ आकाशको दूरतासे अतिक्रमण कर अपने स्वरूपमें अवस्थित और प्यासेकी तरह नदियोंके मधुर जलको निरन्तर पीते हुए समुद्रको उन लोगोंने देखा ॥ १०६ ॥

**द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्धितम् ।**
**मेरोर्जेतुमिवाऽऽभोगमुच्चैर्दिद्योतिषुं मुहुः ॥ १०७ ॥**

**अन्वयः**—शशिना नक्तं द्युतित्वा रश्मिभिः परिवर्धितं, मेरोः आभोगं जेतुम् इव मुहुः उच्चैः दिद्योतिषुम् ( तोयधिं ते प्रत्युदैक्षन्त )।

**व्याख्या**—शशिना = चन्द्रमसा, नक्तं = रात्रौ, द्युतित्वा = दीप्तिमता भूत्वा, रश्मिभिः = किरणैः, परिवर्धितं = वृद्धिं नीतं, मेरोः = सुमेरुपर्वतस्य, आभोगं = परिपूर्णतां, जेतुं = अभिभवितुम्, इव, मुहुः = भूयः, उच्चैः = उन्नतं यथा तथा, दिद्योतिषुं = वर्द्धितुमिच्छुम् इति भावः। तोयधिं ते प्रत्युदैक्षन्त।

※व्युत्पत्तिः※ आभोगम्—"आभोगः परिपूर्णता" इत्यमरः। द्युतित्वा—"द्युत दीप्तौ" इति धातोः क्त्वाप्रत्ययः। "रलो व्युपधाद्धलादेः संश्च" इति सेटः क्त्वाप्रत्ययस्य वैकल्पिकं कित्वम्, तदभावे द्योतित्वा। दिद्योतिषुं—द्योतितुमिच्छुर्दिद्योतिषुस्तं, सन्नन्ताद् द्युतधातोरुप्रत्ययः। "रलो व्युपधादि"त्यादिना कित्वाऽभावपक्षे गुणः।

※भाषाऽर्थः※ चन्द्रसे रातको दीप्तिमान होकर किरणोंसे बढ़ाये गये और मानों सुमेरु पर्वतके महत्त्वको जीतनेके लिए ऊंचा होकर बढ़नेकी इच्छा करनेवाले समुद्रको उन लोगोंने देखा ॥ १०७ ॥

**विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान्**
**भ्रमन्मकरभीषणं समधिगम्य चाऽधः पयः ।**
**गमाऽऽगमसहं द्रुतं कपिवृषाः परिप्रेषयन्**
**गजेन्द्रगुरुविक्रमं तरुमृगोत्तमं मारुतिम् ॥ १०८ ॥**

**अन्वयः**—कपिवृषाः अधिसमुद्रम् अभ्रंलिहान् सलिलोच्चयान् विलोक्य अधश्च भ्रमन्मकरभीषणं पयः समधिगम्य गमाऽऽगमसहं गजेन्द्रगुरुविक्रमं तरुमृगोत्तमं मारुतिं द्रुतं परिप्रेषयन्।

**व्याख्या**—कपिवृषाः = वानरमुख्याः, अङ्गदादय इति भावः। अधिसमुद्रं =

समुद्रस्योपरि, अभ्रंलिहान् = मेघास्वादकान्, दूरमुच्छ्रितानित्यर्थः। सलिलोच्चयान्= जलतरङ्गान्, विलोक्य = दृष्ट्वा, अधश्च = निम्नप्रदेशे च, भ्रमन्मकरभीषणं = घूर्णन्नक्रभयानकं, पयः = जलं, समधिगम्य = ज्ञात्वा, गमाऽऽगमसहं = गमनाऽऽगमनयोग्यं, गजेन्द्रगुरुविक्रमं = करिवरमहापराक्रमं, तरुमृगोत्तमं = वानरश्रेष्ठं, मारुतिं=वायुपुत्रं, हनूमन्तमित्यर्थः। द्रुतं=शीघ्रं, परिप्रैषयन्=व्यसर्जयन्।

※व्युत्पत्तिः※—कपिवृषाः–कपिषु वृषाः, "शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृषः।" इत्यमरः। अधिसमुद्रं—समुद्र इति, "अव्ययं विभक्ती"त्यादिना विभक्त्यर्थेऽव्ययीभावः। अभ्रंलिहान्–अभ्रं लिहन्तीति अभ्रंलिहास्तान्, अभ्रोपपदपूर्वकात् "लिह् आस्वादने" इति धातोः "वहाऽभ्रेलिहः" इति खश्। अदादित्वाच्छपो लुक्, खशोङित्वान्न गुणः। "अरुर्द्विषदजन्तस्य मुम्"। सलिलोच्चयान्—ऊर्ध्वं चीयन्त इति उच्चयास्तान् "एरच्" इत्यच्। सलिलानामुच्चयस्तान्। भ्रमन्मकरभीषणं—भीषयतीति भीषणं, "ञिभी भये" इति धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति ल्युः, "युवोरनाकौ" इति तस्य अनः। "भियो हेतुभये षुक्" इति षुक्। "दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्।" इत्यमरः। भ्रमन्तो ये मकरास्तैर्भीषणं तत्। "मकरो निधौ। नक्रे राशिविशेषे च" इति हैमः। गमाऽऽगमसहं—गमनं गमः, "ग्रहवृदृनिश्चिगमश्च" इत्यप्। गमश्चाऽऽगमश्च गमाऽऽगमौ, गमाऽऽगमौ सहत इति गमाऽऽगमसहस्तम्, पचाद्यच्। गजेन्द्रगुरुविक्रमं—गजेन्द्रस्य इव गुरुर्विक्रमो यस्य तम्। तरुमृगोत्तमं—तरुप्रचारिणो मृगास्तरुमृगाः, "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इति मध्यमपदलोपी समासः। तरुमृगेषु उत्तमम् "न निर्धारणे" इति षष्ठीसमासनिषेधः। परिप्रैषयन् - परिप्रपूर्वात् "इष गतौ" इत्यस्मात् हेतुमण्यन्ताल्लङि रूपम्।

※भाषाऽर्थः※ अङ्गद आदि मुख्य वानरोंने समुद्रमें दूर तक ऊंचे तरङ्गोंको देखकर नीचे घूमते हुए मकरोंसे ( घड़ियालोंसे ) भयानक जल जानकर जाने आनेमें समर्थ श्रेष्ठ हाथीकी तरह महापराक्रमवाले वानरश्रेष्ठ हनूमानजीको शीघ्र भेजा ॥ १०८ ॥

इति श्रीचन्द्रकलाऽऽख्यया नव्यव्याख्यया मण्डिते श्रीभट्टिकाव्ये द्वितीयेऽधिकारकाण्डे लक्षणरूपे द्वितीयः परिच्छेदः ( वर्गः ), तथा लक्ष्यरूपे कथानके सीताऽन्वेषणं नाम सप्तमः सर्गः।

# अथाऽष्टमः सर्गः

अथात्मनेपदाधिकारः।

अगाधत ततो व्योम हनूमानुरुविग्रहः।
अत्यशेरत तद्वेगं न सुपर्णार्कमारुताः॥ १॥

**अन्वयः**—तत उरुविग्रहो हनूमान् व्योम अगाधत। तद्वेगं सुपर्णाऽर्कमारुताः न अत्यशेरत।

**व्याख्या**—ततः=विसर्जनाऽनन्तरम्, उरुविग्रहः=उत्पादितविपुलकायः, कामरूपित्वादिति शेषः। हनुमान्=आञ्जनेयः, व्योम=आकाशम्, अगाधत=प्रस्थितवान्। तद्वेगं=हनुमज्जवं, सुपर्णार्कमारुताः=गरुडसूर्यवायवः (अपि), न अत्यशेरत=नाऽतिशयितवन्तः।

**व्युत्पत्तिः** उरुविग्रहः-उरुर्विग्रहो यस्य सः। अगाधत-"गाधृ प्रतिष्ठालिप्सयोः" इति धातोर्लङ्, "अनुदात्तङित आत्मनेपदम्" इति अनुदात्तेत्त्वादात्मनेपदम्। सुपर्णाऽर्कमारुताः-सुपर्णश्च अर्कश्च मारुतश्चेति "चाऽर्थे द्वन्द्वः" इति इतरेतरयोगद्वन्द्वः। अत्यशेरत—अत्युपसर्गपूर्वकात् "शीङ् स्वप्ने" इति धातोर्लङ्। ङित्त्वादात्मनेपदम्। "शीङो रुट्" इति झादेशस्यातो रुट्, "शीङः सार्वधातुके गुण" इति गुणः।

**भाषाऽर्थः** विसर्जनके अनन्तर विपुल शरीरवाले हनुमान्‌जीने आकाशमें प्रस्थान किया। उनके वेगको गरुड़, सूर्य और वायु भी नहीं लाँघ सके॥ १॥

अभायत यथाऽर्केण सुप्रातेन शरन्मुखे।
गम्यमानं न तेनाऽऽसीदगतं क्रामता पुरः॥ २॥

**अन्वयः**—यथा सुप्रातेन अर्केण शरन्मुखे अभायत, तथा तेन अभायत, पुरः गम्यमानं (वर्त्म) क्रामता तेन अगतं न आसीत्।

**व्याख्या**—यथा=येन प्रकारेण, सुप्रातेन=शोभनप्रभातेन, प्रभातसौन्दर्यकारिणेत्यर्थः, नीहाराद्यभावादिति शेषः। अर्केण=सूर्येण, शरन्मुखे=शरदारम्भे, अभायत=दीप्यते स्म, तथा=तेन प्रकारेण, (तेन=हनूमता, अभायत=दीप्यते स्मेति वाक्यशेषः)। पुरः=अग्रतः, गम्यमानम्=अवष्टभ्यमानं वर्त्म, सूर्येणेति शेषः। तेन=हनूमता, अगतम्=अयातं, न आसीत्=न अभवत्, अपि तु सर्वमेव गतमासीदिति भावः।

**व्युत्पत्तिः** सुप्रातेन—शोभनं प्रातर्येन, तेन। "सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाऽजपदप्रोष्ठपदाः" इति अच्प्रत्ययाऽन्तो निपातः। अभायत—"भा दीप्तौ" इति धातोः "भावकर्मणोः" इत्यात्मनेपदम्। गम्यमानं—गम्यत इति, कर्मण्यात्मने-

पदम्। क्रामता—"क्रमु पादविक्षेपे" इति धातोः शतृप्रत्ययः । "क्रमः परस्मैपदेषु" इति शिति दीर्घत्वम्।

❀भाषाऽर्थः❀ जैसे कोहरा आदि न होनेसे शरत्के आरम्भमें प्रातःकालको सुन्दर बनाने वाले सूर्य शोभित होते हैं, उसी तरह हनूमानजी भी शोभित हुए। अग्रभागमें सूर्यसे गम्यमान मार्ग, चलते हुए हनुमान्जीसे भी अगत नहीं हुआ॥ २॥

वियति व्यत्यतन्वातां मूर्ती हरिपयोनिधी ।
व्यत्यैतां चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितम् ॥ ३ ॥

**अन्वयः**—हरिपयोनिधी वियति मूर्ती व्यत्यतन्वाताम्, अर्केन्द्रेन्दुनिषेवितम् उत्तमं मार्गं च व्यत्यैताम्।

**व्याख्या**—हरिपयोनिधी = हनूमत्समुद्रौ, वियति=आकाशे, मूर्ती = आत्मदेहौ, व्यत्यतन्वातां = व्यतिविस्तारितवन्तौ, अर्केन्द्रेन्दुनिषेवितम् = सूर्यशक्रचन्द्रसेवितम्, उत्तमम् = उत्कृष्टं, मार्गं च = पन्थानं च, व्यत्यैतां=व्यतिगतवन्तौ ।

❀व्युत्पत्तिः❀ मूर्ती = "मूर्तिः काठिन्यकाययोः" इत्यमरः। व्यत्यतन्वाताम्—व्यतिपूर्वात् "तनु विस्तारे" इति धातोर्लङ्, "कर्तरि कर्मव्यतिहारे" इत्यात्मनेपदम्। अर्केन्द्रेन्दुनिषेवितम्—अर्कश्च इन्द्रश्च इन्दुश्चेति अर्केन्द्रेन्दवः, तैर्निषेवितस्तम्। निषेवितमित्यत्र "परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इति सस्य षः। व्यत्यैताम्—व्यतिपूर्वादिण्धातोर्लङः "कर्तरि कर्मव्यतिहारे" इत्यात्मनेपदं प्राप्तं, गत्यर्थत्वात् "न गतिहिंसाऽर्थेभ्यः" इति प्रतिषिद्धम्। तेन तसः "तस्थस्थमिपां तांतंतामः" इति तामादेशः। गच्छतो हरेः पुरतो यत्र वियत्प्रदेशे स्वमूर्तिविस्ताराऽवसरस्तत्र पयोनिधिरूर्मिभिः स्वमूर्तिं वितस्तार, वेलां गच्छतः पयोनिधेर्यत्र स्वमूर्तिविस्ताराऽवसरस्तत्र हरिः स्वमूर्तिं विस्तारितवान्। एवं च पयोनिधेर्यत्र मार्गे गमनाऽवसरस्तत्र हरिरुत्पत्य गन्तुमैच्छत्, तथा हरेर्यत्र वर्त्मनि प्रयाणप्रसङ्गस्तत्र पयोनिधिरभ्रंलिहैरूर्मिभिर्गन्तुमैच्छत्। यत्र यत्क्रियाऽवसरे क्रियां करोति स तत्र तत्क्रियाकारीत्युच्यते। यथा देवदत्तसाध्यां क्रियां यज्ञदत्तः कुर्वन् तत्कारीत्युच्यते। ततश्च इतरेण इतरसम्बन्धिन्याः क्रियायाः करणात् अन्यतरसम्बन्धिन्याश्चेत्संभवति कर्मव्यतिहारः।

❀भाषाऽर्थः❀ हनूमान् और समुदने आकाशमें अपने शरीरको एकके फैलानेके स्थानमें दूसरेने फैलाया और वे सूर्य, इन्द्र और चन्द्रसे सेवित मार्गमें एकके चलनेके स्थानमें दूसरे चल पड़े॥ ३॥

व्यात्निजिग्ये समुद्रोऽपि न धैर्यं तस्य गच्छतः।
व्यत्यगच्छन्न च गतं प्रचण्डोऽपि प्रभञ्जनः ॥ ४ ॥

**अन्वयः**—गच्छतः तस्य धैर्यं समुद्रः अपि न व्यतिजिग्ये, तस्य गतं प्रचण्डः अपि प्रभञ्जनः न व्यत्यगच्छत् ।

**व्याख्या**—गच्छतः = व्रजतः, तस्य=हनूमतः, धैर्यं = धीरत्वं, समुद्रोऽपि= सागरोऽपि, अन्यः किमुत इति भावः । न व्यतिजिग्ये=न अभिबभूव, तदानीं तस्य उद्धतकल्लोलत्वादिति भावः । (अपिशब्दात् हनूमानपि तस्य=समुद्रस्य, धैर्यं न व्यतिजिग्ये, तदानीं हनूमतो विपुलकायत्वादिति भावः ) । तस्य=हनूमतः, गतं= गमनं, प्रचण्डोऽपि=महानपि, प्रभञ्जनः=वायुः, अन्यः किमुत इति भावः । न व्यत्यगच्छत्=न प्राप्तवान् ।

*व्युत्पत्तिः* व्यतिजिग्ये—व्यतिपूर्वाज्जिधातोः "कर्तरि कर्मव्यतिहारे" इत्यात्मनेपदम् । "सँल्लिटोर्जेः" इति कुत्वम् । व्यत्यगच्छत्—पूर्वसूत्रेण प्राप्तस्य आत्मनेपदस्य "न गतिहिंसाऽर्थेभ्यः" इति प्रतिषेधः ।

*भाषाऽर्थः* जाते हुए हनुमान्‌के धैर्यको समुद्रने भी नहीं जीता, और उनकी गतिको महान् वायुने भी नहीं पाया ॥ ४ ॥

**व्यतिघ्नन्तीं व्यतिघ्नन्तां राक्षसीं पवनाऽऽत्मजः ।**
**जघानाऽऽविश्य वदनं निर्यान् भित्त्वोदरं द्रुतम् ॥ ५ ॥**

**अन्वयः**—पवनात्मजो वदनम् आविश्य उदरं भित्त्वा द्रुतं निर्यान् ( सन् ) व्यतिघ्नन्तीं तां राक्षसीं व्यतिघ्नन् जघान ।

**व्याख्या**—पवनाऽऽत्मजः वायुसूनुः, हनूमानित्यर्थः । वदनं = मुखं, राक्षस्या इति भावः । आविश्य=प्रविश्य, उदरं = जठरं, भित्त्वा = विदार्य, द्रुतं = शीघ्रं, निर्यान्=निर्गच्छन् सन्, व्यतिघ्नन्तीं-हनिष्याम्येनामिति हनूमतो वधकरणाऽवसरे घ्नन्तीं, तां = तादृशीं, राक्षसीं=यातुधानीं, व्यतिघ्नन्=हनिष्याम्येनमिति राक्षस्या वधकरणाऽवसरे हिंसन् सन्, जघान=हतवान् ।

*व्युत्पत्तिः* पवनाऽऽत्मजः—आत्मनो ( देहात् ) जात आत्मजः, "पञ्चम्यामजातौ" इति डः । पवनस्याऽऽत्मजः । निर्यान् = निर्यातीति, यातेः शतृप्रत्यये रूपम् । व्यतिघ्नन्तीं—"कर्तरि कर्मव्यतिहारे" इति प्राप्तस्याऽऽत्मनेपदस्य "न गतिहिंसार्थेभ्यः" इति निषेधः । शतृप्रत्ययः । एवं "व्यतिघ्नन्" इत्यत्राऽपि ।

*भाषाऽर्थः* हनुमान्‌जीने (राक्षसीके) मुखके भीतर घुसकर पेट फाड़कर जल्दी निकलते हुए अपनेको मारती हुई उस राक्षसीको प्रहारकर मार डाला ॥ ५ ॥

**अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान् ।**
**उदन्वांश्चाब्धिवोद्धूतो म्रियमाणा च राक्षसी ॥ ६ ॥**

**अन्वयः**—अनिलोद्धूत उदन्वान् म्रियमाणा राक्षसी च अन्योन्यं शब्दैः भीषणान् शब्दान् व्यतियुतः स्म ।

**व्याख्या**—अनिलोद्धूतः=वायुकम्पितः, उदन्वान्=समुद्रः । म्रियमाणा=प्राणांस्त्यजन्ती, राक्षसी च=निशाचरी च, अन्योन्यं=परस्परस्येत्यर्थः, शब्दैः=ध्वनिभिः, भीषणान्=भयङ्करान्, शब्दान्=ध्वनीन्, व्यतियुतः स्म मिश्रितवन्तौ, उदन्वतः शब्दकरणाद्यो भीषणशब्दमिश्रणाऽवसरो भावी तत्र राक्षसी म्रियमाणा भीषणाञ्शब्दानुदन्वच्छब्दैर्युयाव । । एवं च राक्षस्याः शब्दकरणाद्यो भीषणशब्दमिश्रणाऽवसरो भावी तत्रोदन्वाननिलोद्धूतः भीषणाञ्छब्दान् राक्षसीशब्दैर्युयावेति भावः ।

**व्युत्पत्तिः** उदन्वान्—उदकानि सन्ति अस्मिन्सः, "उदन्वानुदधौ च" इति उदकस्योदन्भावो मतुप्प्रत्ययश्च निपात्यते । अन्योन्यं—"कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्" अत्र बहुलग्रहणादन्यपरयोर्न समासवत् । "असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः" । व्यतियुतः स्म—व्यतिपूर्वात् "यु मिश्रणे" इति धातोः "लट् स्मे" इति भूते लट् । कर्मव्यतिहारत्वेन प्राप्तस्य आत्मनेपदस्य "इतरेतराऽन्योन्योपपदाच्च" इति प्रतिषेधः ।

**भाषाऽर्थः** वायुसे कम्पित समुद्रने और मरती हुई राक्षसीने भी परस्पर शब्दों से—एकने दूसरेके शब्दोंसे अपने शब्दोंका मिश्रण किया ॥ ६ ॥

**न्यविक्षत महाग्राहसंकुलं मकराऽऽलयम् ।**
**सैका बहूनां कुर्वाणा नक्राणां स्वाऽऽशितम्भवम् ॥ ७ ॥**

**अन्वयः**—सा एका बहूनां नक्राणां स्वाऽऽशितम्भवं कुर्वाणा महाग्राहसङ्कुलं मकराऽऽलयं न्यविक्षत ।

**व्याख्या**—सा = राक्षसी, एका = एकाकिनी सत्यपि, बहूनां=प्रचुराणां, नक्राणां = कुम्भीराणां, स्वाऽऽशितम्भवं = शोभनतृप्तिं, कुर्वाणा = विदधती सती, महाग्राहसंकुलं = विशालाऽवहारव्याप्तं, मकराऽऽलयं = समुद्रं, न्यविक्षत = प्रविष्टवती ।

**व्युत्पत्तिः** स्वाऽऽशितम्भवं—आशितस्य भवनमाशितम्भवः, "आशिते भुवः करणभावयोः" इति आशितशब्द उपपदे भूधातोर्भावे खच्, खित्वान्मुम् च । शोभन आशितम्भवः स्वाऽऽशितम्भवस्तं, "कुगतिप्रादयः" इति समासः । न्यविक्षत—निपूर्वात् "विश प्रवेशने" इति धातोर्लुङ्, "नेर्विशः" इत्यात्मनेपदम् । "शल इगुपधादनिटः क्सः" इति च्लेः क्सादेशः ।

**भाषाऽर्थः** वह राक्षसी अकेली भी बहुत-से जलजन्तुओंको उत्तम तृप्ति करती हुई बहुत-से ग्राहोंसे व्याप्त समुद्रके भीतर घुस गई ॥ ७ ॥

**कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम् ।**

**पित्रा संरक्षितं शक्रात् स मैनाकाऽद्रिमैक्षत ॥ ८ ॥**

**अन्वयः**—सः वायोः उपकृतं कृतेन परिक्रीणानम् पित्रा शक्रात् संरक्षितम् उत्थितं मैनाकाऽद्रिम् ऐक्षत ।

**व्याख्या**—सः = हनूमान्, वायोः = पवनस्य, उपकृतम् = उपकारं, कृतेन = विहितेन, प्रत्युपकारेणेति भावः । परिक्रीणानं = परिक्रयं विचिन्वन्तं, पित्रा=जनकेन, वायुनेति भावः । शक्रात् = इन्द्रात्, संरक्षितम् = कृतसुरक्षम्, उत्थितं = कृतोत्थानं, मैनाकाऽद्रिं=मैनाकपर्वतम्, ऐक्षत = दृष्टवान् ।

॥व्युत्पत्तिः॥ उपकृतम्—उपकरणम् उपकृतं, तत् । "नपुंसके भावे क्तः" इति क्तः । परिक्रीणानं—परिक्रीणीते इति परिक्रीणानस्तं, "परिव्यवेभ्यः क्रियः" इति अकर्त्रभिप्रायविषयमात्मनेपदम् । लटः शानच् । इन्द्रेण यदा बहूनां पर्वतानां पक्षाश्छिन्नास्तदा वायुना महावेगेन समुद्रं नीत्वा मैनाकपर्वतो रक्षित इतीयं पौराणिकी कथाऽनुसन्धेया ।

॥भाषाऽर्थः॥ हनुमान्‌ने वायुके उपकारको प्रत्युपकारसे चुकानेकी इच्छा करनेवाले और अपने पिता ( वायु ) के द्वारा इन्द्रसे रक्षित और उठे हुए मैनाक पर्वतको देखा ॥ ८ ॥

**खं पराजयमानोऽसावुन्नत्या पवनाऽऽत्मजम् ।**
**जगादाऽद्रिर्विजेषीष्ठा मयि विश्रम्य वैरिणम् ॥ ९ ॥**

**अन्वयः**—उन्नत्या खं पराजयमानः असौ अद्रिः पवनात्मजं जगाद—"मयि विश्रम्य वैरिणं विजेषीष्ठाः ।

**व्याख्या**—उन्नत्या = उन्नमनेन, खम् = आकाशं, पराजयमानः = अभिभवन्, असौ = पूर्वाऽभिहितः, अद्रिः = पर्वतः, मैनाक इत्यर्थः । पवनाऽऽत्मजं = वायुपुत्रं हनूमन्तं, जगाद = उक्तवान्, मयि, विश्रम्य = विश्रामं कृत्वा, वैरिणं = शत्रुं, विजेषीष्ठाः = अभिभूयाः, त्वमिति शेषः ।

॥व्युत्पत्तिः॥ पराजयमानः—पराजयत इति, परापूर्वकाज्जिधातोः "विपराभ्यां जेः" इत्यात्मनेपदम् । लटः शानच् । "आने मुक्" इति मुगागमश्च । विजेषीष्ठाः—पूर्वसूत्रेणैव आत्मनेपदम् । आशिषि लिङ् ।

॥भाषाऽर्थः॥ ऊँचाईसे आकाशको पराजित करते हुए मैनाक पर्वतने वायुपुत्र हनुमान्‌जीको कहा—"मुझपर विश्रामकर शत्रुको जीतो ॥ ९ ॥

**फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु ।**
**साध्वनुक्रीडमानानि पश्य वृन्दानि पक्षिणाम् ॥ १० ॥**

**अन्वयः**—चित्राणि फलानि आदत्स्व । सानुषु परिक्रीडस्व । साधु अनुक्रीडमानानि पक्षिणां वृन्दानि पश्य ।

**व्याख्या**—चित्राणि=अनेकप्रकाराणि, फलानि=पनसादीनि, आदत्स्व=गृहाण, सानुषु = प्रस्थेषु, परिक्रीडस्व = विहर । साधु=सुन्दरं यथा तथा, अनुक्रीडमानानि= विहरन्ति, पक्षिणां = विहङ्गमानां, वृन्दानि = समूहान्, पश्य = विलोकय ।

॥व्युत्पत्तिः॥ आदत्स्व—आङ्पूर्वकात् "डुदाञ् दाने" इति "आङो दोऽनास्य-विहरणे" इति आत्मनेपदम् । लोटि रूपम् । परिक्रीडस्व—परिपूर्वकात् क्रीड्धातोः "क्रीडोऽनुसंपरिभ्यश्च" इति आत्मनेपदम् । अनुक्रीडमानानि—अनुक्रीडन्त इति अनु-क्रीडमानानि, तानि, पूर्वसूत्रेण आत्मनेपदम् । लटः शानजादेशो मुगागमश्च । वृन्दा-नि—"स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् " इत्यमरः ।

॥भाषाऽर्थः॥ अनेक प्रकारके फलोंको ग्रहण करो । समतल भूमिमें विहार करो । सुन्दरतासे क्रीडा करते हुए पक्षियोंके समूहोंको देखो ॥ १० ॥

**क्षणं भद्राऽवतिष्ठस्व ततः प्रस्थास्यसे पुनः ।**
**न तत् संस्थास्यते कार्यं दक्षेणोरीकृतं त्वया ॥ ११ ॥**

**अन्वयः**—हे भद्र ! क्षणम् अवतिष्ठस्व ततः पुनः प्रस्थास्यसे । दक्षेण त्वया ऊरीकृतं तत् कार्यं न संस्थास्यते ? ।

**व्याख्या**—हे भद्र = हे कल्याण, क्षणं = कंचित्कालम् , अवतिष्ठस्व = स्थितो भव, ततः = अनन्तरं, पुनः = भूयः, प्रस्थास्यसे = यास्यसि, दक्षेण = अनलसेन, त्वया = भवता, ऊरीकृतम् = अङ्गीकृतं, तत् = सीताऽन्वेषणरूपं, कार्यं = कृत्यं, न संस्थास्यते = न निष्पत्स्यते ? निष्पत्स्यत एवेत्यर्थः ।

॥व्युत्पत्तिः॥ क्षणं—"कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया । अवतिष्ठस्व—अवपूर्वकात्स्थाधातोर्लोट् । "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । प्रस्थास्यसे—पूर्वसूत्रेणैव आत्मनेपदम् । ऊरीकृतम्—अनूरि ऊरि यथा सम्पद्यते तथा कृतम् , "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः" इति च्विः, "च्वौ च" इति पूर्वस्य दीर्घत्वम् । संस्थास्यते—पूर्ववदात्मनेपदम् ।

॥भाषाऽर्थः॥ हे कल्याण ! कुछ काल तक रहो, तब फिर प्रस्थान करोगे । आलस्यरहित तुमसे अङ्गीकृत वह कार्य क्या संपन्न नहीं होगा ? ॥ ११ ॥

**त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयम् ।**
**उत्तिष्ठमानं मित्रार्थे कस्त्वां न बहु मन्यते ॥ १२ ॥**

**अन्वयः**—त्वयि नः प्रीतिः तिष्ठते । वयं तुभ्यं तिष्ठामहे । मित्राऽर्थे उत्ति-ष्ठमानं त्वां को न बहु मन्यते ?

**व्याख्या**—त्वयि = विषये, नः = अस्माकं, प्रीतिः = प्रेम, तिष्ठते=अस्ति, तेन संशये अस्माभिरन्यो निर्णेता नाऽन्वेषणीयः । वयम्, तुभ्यं तिष्ठामहे = त्वां

स्थित्या स्वाऽभिप्रायं बोधयामः । मित्राऽर्थे = सख्यर्थे, उत्तिष्ठमानं=यतमानं, त्वां = भवन्तं, कः = जनः, न बहु मन्यते = न अधिकं जानाति, कस्त्वां न श्लाघते ? अपि तु सर्व एव श्लाघत इति भावः ।

ॐव्युत्पत्तिःॐ त्वयि—वैषयिकी सप्तमीयम् । तिष्ठते—"प्रकाशनस्थेयाऽऽख्य-योश्च" इति स्थेयाऽऽख्यायामात्मनेपदम् । विवादपदनिर्णेता स्थेयः । तुभ्यं "तिष्ठा-महे" इति पदेन योगे "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति सम्प्रदानत्वाच्चतुर्थी । तिष्ठामहे—प्रकाशनाऽऽख्यायां "प्रकाशने—"त्यादिना आत्मनेपदम् । अत्र प्रकाशनं स्वाऽभिप्रायबोधनम् । उत्तिष्ठमानम्—उत्तिष्ठत इति, "उदाऽनूर्ध्वकर्मणि" इत्या-त्मनेपदम् । लटः शानच् ।

ॐभाषाऽर्थःॐ तुममें हमारी प्रीति है ( इस कारणसे सन्देह पड़नेपर हमें दूसरे निर्णेताके अन्वेषणकी आवश्यकता नहीं है ), हम लोग तुम्हें अपना अभिप्राय समझाते हैं । मित्रके लिये यत्न करनेवाले तुमको कौन अधिक नहीं मानता है ? ॥ १२ ॥

**ये सूर्यमुपतिष्ठन्ते मन्त्रैः संध्यात्रयं द्विजाः ।**
**रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना ॥१३॥**

**अन्वयः**—ये द्विजाः मन्त्रैः सूर्यं सन्ध्यात्रयम् उपतिष्ठन्ते, ते अपि रक्षोभिः तापिताः सन्तः अधुना ते सिद्धिं ध्यायन्ति ।

**व्याख्या**—ये, द्विजाः = ब्राह्मणाः, द्विजातयो ( ब्राह्मणक्षत्रियवैश्याः ) वा, मन्त्रैः = मनुभिः, करणभूतैः । सूर्यं = भास्करं, सन्ध्यात्रयं = त्रिसन्ध्यं, प्रातर्मध्याह्नं सायङ्कालं चेति भावः । उपतिष्ठन्ते = प्रत्युपासते, अभिमुखाऽवस्थानपूर्वकं स्तुत्या-दिभिः पूजयन्तीति भावः । ते अपि = तादृशा द्विजा अपि, रक्षोभिः = राक्षसैः, तापिताः = उपद्रुताः सन्तः, अधुना = साम्प्रतं, ते = तव, सिद्धिं = कार्यसाफल्यं, ध्यायन्ति = चिन्तयन्ति, किं पुनरहं यस्ते पितुः सुहृदिति भावः ।

ॐव्युत्पत्तिःॐ सन्ध्यात्रयं—त्रयोऽवयवा यस्य तत् त्रयं, "संख्याया अवयवे तयप्" इति तयप् , तस्य "द्वित्रिभ्यां तयस्याऽयज्वा" इति अयजादेशः । सन्ध्या-नां त्रयं सन्ध्यात्रयं, तत् "कालाऽध्वनोरत्यन्तसंयोगे" इति कालाऽत्यन्तसंयोगे द्वितीया । उपतिष्ठन्ते—"उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्" इति देवपूजायामात्मनेपदम् ।

ॐभाषाऽर्थःॐ—जो ब्राह्मण मन्त्रोंसे तीन सन्ध्याओंको सूर्यका उपस्थान करते हैं, वे भी राक्षससे सन्तापित होकर इस समय तुम्हारी कार्य-सफलताका चिन्तन कर रहे हैं ॥ १३ ॥

**अव्यग्रमुपतिष्ठस्व वीर ! वायोरहं सुहृत् ।**
**रविर्वितपतेऽत्यर्थमाश्वस्य मयि गम्यताम् ॥ १४ ॥**

**अन्वयः**—हे वीर ! अव्यग्रम् उपतिष्ठस्व, अहं वायोः सुहृत् । रविः अत्यर्थं वितपते, मयि आश्वस्य गम्यताम् ।

**व्याख्या**—हे वीर = हे शूर, अव्यग्रम्=अनाकुलं यथा तथा, उपतिष्ठस्व= उपस्थितो भव, सन्निहितो भवेत्यर्थः, मयीति शेषः । अहं = मैनाकः, वायोः = तव पितुः, सुहृत् = मित्रम् । रविः = सूर्यः, अत्यर्थं = भृशं, वितपते=दीप्यते, अतः, मयि = मैनाकपर्वते, आश्वस्य = विश्रम्य, गम्यताम् = गमनं क्रियताम् ।

**व्युत्पत्तिः** उपतिष्ठस्व—"अकर्मकाच्च" इत्यात्मनेपदम् । वितपते—विपूर्वकात् "तप सन्तापे" इति धातोः "उद्विभ्यां तपः" इत्यात्मनेपदम् । तत्र "अकर्मकात्" इति वर्तते ।

**भाषाऽर्थः** हे वीर ! आकुल न हो कर मेरे निकट रहो । मैं वायुका मित्र हूं । सूर्य अतिशय दीप्त हो रहे हैं । मुझमें विश्रामकर जाओ ॥ १४ ॥

**तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः ।**
**आघ्नान इव सन्दीप्तैरलातैः सर्वतो मुहुः ॥ १५ ॥**

**अन्वयः**—सन्दीप्तैः अलातैः सर्वतो मुहुः आघ्नान इव तीव्रम् उत्तपमानः अयम् आतपः सोढुम् अशक्यः ।

**व्याख्या**—सन्दीप्तैः = प्रज्वलितैः, अलातैः=उल्मुकैः, सर्वतः=सर्वत्र, मुहुः = भूयः, आघ्नान इव = ताडयन् इव, तीव्रं = भृशम्, उत्तपमानः = दीप्यमानः, अयम्= साम्प्रतमनुभूयमानः, आतपः = घर्मः, सोढुं = मर्षितुम् , अशक्यः = शक्तेरविषयः, अतो विश्रामः क्रियतामिति भावः ।

**व्युत्पत्तिः** आघ्नानः—आङ्पूर्वकात् हन् धातोः "आङो यमहन" इति अविवक्षितकर्मकत्वादात्मनेपदम् । लटः शानजादेशः । "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधालोपः, "हो हन्तेर्ञ्णिन्नेषु" इति कुत्वम् । उत्तपमानः—"उद्विभ्यां तप" इत्यात्मनेपदम्, लटः शानच् ।

**भाषाऽर्थः** जले हुए अलातोंसे सर्वत्र बारंबार ताडित करते हुएके सदृश तीव्ररूपसे ताप करता हुआ यह घाम सहनेके लिये अशक्य है ॥ १५ ॥

**संशृणुष्व कपे ! मत्कैः संगच्छस्व वनैः शुभैः ।**
**समारन्त ममाऽभीष्टाः सङ्कल्पास्त्वय्युपागते ॥ १६ ॥**

**अन्वयः**—हे कपे ! संशृणुष्व, मत्कैः शुभैः वनैः सङ्गच्छस्व । त्वयि उपागते मम अभीष्टाः सङ्कल्पाः समारन्त ।

**व्याख्या**—हे कपे = हे हनूमन्, संशृणुष्व = आकर्णय, मत्कैः=मत्स्वामिकैः, शुभैः = शोभमानैः, वनैः = विपिनैः, सङ्गच्छस्व = सङ्गतो भव। त्वयि = भवति, उपागते = समीपम्प्राप्ते सति, मम = मैनाकस्य, अभीष्टाः = अभीप्सिताः, सङ्कल्पाः = अभिप्रायाः "कदा नु मे सौहार्देन कश्चिदागमिष्यति यस्याऽहमुपयोगी स्याम्" इत्याकारका इति भावः। समारन्त = आगताः।

॥व्युत्पत्तिः॥ संशृणुष्व—"अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्" इत्यात्मनेपदम्। मत्कैः—अहं स्वामी येषां तानि मत्कानि तैः। "स एषां ग्रामणीः" इति कप्रत्ययः, "प्रत्ययोत्तरपदयोश्च" इति प्रत्यये परे अस्मच्छब्दस्य मदादेशः। सङ्गच्छस्व—"समो गम्यृच्छिभ्याम्" इत्यात्मनेपदम्। समारन्त-सम्पूर्वकात् "ऋ गतौ" इति जुहोत्यादिधातोः लुङि "अर्ती"त्यादिना आत्मनेपदम्। अर्तीति द्वयोर्ग्रहणात्। "सर्तिशास्त्यर्तिभ्यश्च" इत्यङि "ऋदृशोऽङि गुणः" इति गुणः, "आडजादीनाम्" इति भाषाविषय आडागमः।

॥भाषाऽर्थः॥ हे हनुमन्! सुनो, मेरे शोभन वनोंसे सङ्गत होवो। तुम्हारे निकट आनेपर मेरे अभीष्ट सङ्कल्प आ गये॥ १६॥

न चैवं मिथ्या वायुर्मे सुहृदित्याह—

**के न संविद्रते वायोर्मैनाकाऽद्रिर्यथा सखा।**
**यत्नादुपाह्वये प्रीतः संह्वयस्व विवक्षितम्"॥ १७॥**

**अन्वयः**—वायोः मैनाकाऽद्रिः यथा सखा, के न संविद्रते? प्रीतः यत्नात् उपाह्वये। विवक्षितं संह्वयस्व"।

**व्याख्या**—वायोः = पवनस्य, मैनाकाऽद्रिः = मैनाकपर्वतः, यथा=येन प्रकारेण, सखा = मित्रं, के = जनाः, न संविद्रते = न जानन्ति। अतः, प्रीतः = प्रसन्नः सन्, अहमिति शेषः, यत्नात्=प्रयासात्, उपाह्वे = आह्वयामि, त्वामिति शेषः। विवक्षितम् = अभिप्रेतं, संह्वयस्व = कथय, सङ्कोचो न कर्तव्य इति भावः।

॥व्युत्पत्तिः॥ संविद्रते—सम्पूर्वकात् "विद ज्ञाने" इति धातोः "विदिप्रच्छिस्वरतीनामुपसंख्यानम्" इति आत्मनेपदे "वेत्तेर्विभाषा" इति रुट्। उपाह्वये—उपपूर्वकात् "ह्वेञ् स्पर्धायां शब्दे च" इति धातोः "निसमुपविभ्यो ह्वः" इति अकर्त्रभिप्राये आत्मनेपदम्। विवक्षितं—वक्तुमिष्टं विवक्षितं, तत्। सन्नन्तात् "वच परिभाषणे" इति धातोः क्तः। संह्वयस्व-पूर्वसूत्रेणाऽऽत्मनेपदम्।

॥भाषाऽर्थः॥ वायुका मैनाक पर्वत जैसे मित्र है, कौन नहीं जानता? इस कारणसे प्रसन्न होकर यत्नसे तुम्हें बुलाता हूँ, अपना अभीष्ट विषय कहो"॥ १७॥

**द्यामिवाह्वयमानं तमवोचद्भूधरं कपिः।**
**उपकुर्वन्तमत्यर्थं प्रकुर्वाणोऽनुजाविवत्॥ १८॥**

**अन्वयः**—कपिः द्याम् आह्वयमानम् इव अत्यर्थम् उपकुर्वन्तं तं भूधरम् अनुजीविवत् प्रकुर्वाणः सन् अवोचत् ।

**व्याख्या**—कपिः = हनूमान्, द्याम्=आकाशम्, आह्वयमानम् इव = स्पर्धमानम् इव, महत्तयेति शेषः । अत्यर्थं = भृशम्, उपकुर्वन्तम् = उपकारं कुर्वन्तम्, आतिथ्येनेति भावः । तं = पूर्वोक्तं, भूधरं = पर्वतं, मैनाकमित्यर्थः । अनुजीविवत्= भृत्यवत्, प्रकुर्वाणः = सेवमानः सन्, अवोचत्=अभाषत ।

**ॐव्युत्पत्तिःॐ** आह्वयमानम्—आह्वयत इति आह्वयमानस्तं "स्पर्धायामाङः" इति स्पर्धायामात्मनेपदम् । लटः शानजादेशः । अनुजीविवत्—अनुजीवतीति तच्छीलोऽनुजीवी, ताच्छील्ये णिनिः । अनुजीविना तुल्यं, वतिप्रत्ययः । प्रकुर्वाणः—"गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" इति सेवनेऽर्थे आत्मनेपदम् । लटः शानच् ।

**ॐभाषाऽर्थःॐ** हनूमान्‌जीने आकाशको चुनौती देते हुएकी तरह अवस्थित और अतिशय उपकार करते हुए मैनाक पर्वतको सेवकके सदृश सेवा करते हुए कहा ॥१८॥

**'कुलभार्यां प्रकुर्वाणमहं द्रष्टुं दशाऽऽननम् ।**
**यामि त्वरावान् शैलेन्द्र ! मा कस्यचिदुपस्कृथाः ॥ १९ ॥**

**अन्वयः**—"हे शैलेन्द्र ! अहं कुलभार्यां प्रकुर्वाणं दशाऽऽननं द्रष्टुं त्वरावान् यामि, कस्यचित् मा उपस्कृथाः ।

**व्याख्या**—हे शैलेन्द्र = हे पर्वतराज मैनाक, अहं=हनूमान्, कुलभार्यां=सद्वंशसहधर्मिणीं, प्रकुर्वाणम्=अभिगच्छन्तं, तत्र सहसा प्रवर्तमानमिति भावः । एतादृशं दशाननं=रावणं द्रष्टुं = विलोकितुं त्वरावान्=सत्वरः सन्, यामि=गच्छामि; अतः, कस्यचित्=अशनपानादिकस्य, मा उपस्कृथाः=अतिशयवन्तं मा कार्षीरित्यर्थः ।

**ॐव्युत्पत्तिःॐ** प्रकुर्वाणं—"गन्धनाऽवक्षेपणसेवनसाहसिक्ये"त्यादिना साहसिक्य आत्मनेपदम् । द्रष्टुं—"दृशिर् प्रेक्षणे" इति धातोः "समानकर्तृकेषु तुमुन्" इति तुमुन्, "सृजिदृशोर्झल्यमकिति" इत्यमागमः । कस्यचित्–"उपस्कृथा" इति पदेन योगे प्रतियत्ने ( गुणाऽऽधाने ) "कृञः प्रतियत्ने" इति कर्मणि षष्ठी । उपस्कृथाः—"गन्धनावक्षेपणे"त्यादिना प्रतियत्न आत्मनेपदम् । माङि उपपदे "माङि लुङ्" इति सर्वलकाराऽपवादो लुङ् । "तनादिभ्यस्तथासोः" इति सिचो लुक् । "उपात्प्रतियत्नवैकृतवाक्याऽध्याहारेषु च" इति प्रतियत्ने सुट् ।

**ॐभाषाऽर्थःॐ** "हे पर्वतराज ! मैं कुलकी पत्नीमें साहसके साथ प्रवृत्त होनेवाले रावणको देखनेके लिए शीघ्रतापूर्वक जा रहा हूँ, इस लिए मेरे लिए खाने-पीनेके विषयमें कोई उत्कर्ष मत कीजिए ॥ १९ ॥

**योऽपचक्रे वनात् सीतामधिचक्रे न यं हरिः ।**
**विकुर्वाणः स्वरानद्य बलं तस्य निहन्म्यहम् ॥ २० ॥**

**अन्वयः**—यः सीतां वनात् अपचक्रे, यं हरिः न अपचक्रे; अद्य स्वरान् विकुर्वाणः अहं तस्य बलं निहन्मि ।

**व्याख्या**—यः = रावणः, सीतां = जानकीं, वनात् = अरण्यात्, अपचक्रे = अभिबभूव, यं = रावणं, हरिः = इन्द्रः, न अधिचक्रे = न प्रसेहे । अद्य = अधुना, स्वरान् विकुर्वाणः=विविधान् स्वरान् कुर्वाणः, अहं=हनूमान्, तस्य = रावणस्य, बलं= सामर्थ्यम्, निहन्मि- हिनस्मि ।

ॐव्युत्पत्तिःॐ वनात्—वनमुपगम्येति "ल्यब्लोपे कर्मण्यधिकरणे च" इति पञ्चमी । अपचक्रे—"गन्धनावक्षेपणे"त्यादिनाऽऽत्मनेपदम् । अधिचक्रे—"अधेः प्रसहने" इत्यात्मनेपदम् । विकुर्वाणः—"वेः शब्दकर्मण" इत्यात्मनेपदम् ।

ॐभाषाऽर्थःॐ जिसने सीताजीको वनसे अभिभूत किया, जिसको इन्द्र भी नहीं सह सके; अभी अनेक स्वरोंको करता हुआ मैं उस रावणके सामर्थ्यको नष्ट कर देता हूं ॥ २० ॥

**विकुर्वे नगरे तस्य पापस्याऽद्य रघुद्विषः ।**
**विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः ॥ २१ ॥**

**अन्वयः**—अद्य रघुद्विषः तस्य पापस्य नगरे विकुर्वे । वा प्रियान् प्राणान् विनेष्ये, अथ वा यशः उदानेष्ये ।

**व्याख्या** - अद्य = साम्प्रतं, रघुद्विषः = रामशत्रोः, तस्य = पूर्वाभिहितस्य, पापस्य=अधार्मिकस्य, रावणस्येत्यर्थः । नगरे=पुरे, विकुर्वे=विविधं चेष्टे, वा=अथवा, एतद्वैपरीत्ये सतीति भावः । प्रियान् = अभीष्टान, प्राणान् = असून्, स्वीयानिति शेषः । विनेष्ये = अपनेष्यामि, स्वामिकार्य इति शेषः । अथवा = आहोस्वित्, यशः=कीर्तिम्, उदानेष्ये=ऊर्ध्वं नेष्यामि, रघुद्विषोऽपकाराऽऽचरणादिति भावः ।

ॐव्युत्पत्तिःॐ विकुर्वे—"अकर्मकाच्च" इत्यात्मनेपदम् । विनेष्ये—विपूर्वकात् "णीञ् प्रापणे" इति धातोः "संमाननोत्सञ्जनाऽऽचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इति व्यय आत्मनेपदम् । उदानेष्ये—पूर्वसूत्रेणैव उत्सञ्जने (उत्क्षेपणे) आत्मनेपदम् ।

ॐभाषाऽर्थःॐ आज रामके शत्रु, उस पापी रावणके शहरमें अनेक प्रकारकी चेष्टाओंको करता हूं अथवा प्यारे प्राणोंको गँवाऊंगा वा यशको ऊपर ले जाऊंगा ॥ २१ ॥

**विनेष्य क्रोधमथवा क्रममाणोऽरिरसाद ।"**
**इत्युक्त्वा खे पराक्रंस्त तूर्णं सूनुर्नभस्वतः ॥ २२ ॥**

**अन्वयः**—अथवा अरिसंसदि क्रममाणः क्रोधं विनेष्ये", इति उक्त्वा नभस्वतः सूनुः खे तूर्णं पराक्रंस्त ।

**व्याख्या**—अथवा = पक्षान्तरे, अरिसंसदि=शत्रुसभायां, क्रममाणः=अप्रतिबन्धेन प्रवर्तमानः, क्रोधं=कोपं, विनेष्ये = अपनेष्यामि, इति=इत्थम्, उक्त्वा=अभिधाय, नभस्वतः = वायोः, सूनुः = पुत्रः, हनूमानित्यर्थः । खे = आकाशे, तूर्णं=शीघ्रं, पराक्रंस्त=अप्रतिबन्धेन उत्साहेन वा जगामेत्यर्थः ।

**&व्युत्पत्तिः&** क्रममाणः—क्रमत इति, "वृत्तिसर्गतायनेषु क्रमः" इति वृत्तौ ( अप्रतिबन्धे ) आत्मनेपदम् । विनेष्ये—"कर्तृस्थे चाऽशरीरे कर्मणि" इति आत्मनेपदम् । कर्तृस्थस्य क्रोधरूपस्य कर्मणोऽशरीरत्वात् । अत्र व्ययोन संभवति । पराक्रंस्त—"उपपराभ्याम्" इति वृत्तौ ( अप्रतिबन्धे ) सर्गे ( उत्साहे ) वा आत्मनेपदम् ।

**&भाषाऽर्थः&** अथवा शत्रुओंकी सभामें रुकावटके बिना प्रवृत्त होता हुआ क्रोधको दूर करूंगा" ऐसा कहकर वायुके पुत्र हनूमान्‌जी आकाशमें शीघ्रतापूर्वक चल पड़े ॥ २२ ॥

**परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमम् ।**
**दिवमाक्रममाणेव केतुतारा भयप्रदा ॥ २३ ॥**

**अन्वयः**—दिवम् आक्रममाणा भयप्रदा केतुतारा इव राक्षसी तस्य विक्रमं परीक्षितुम् उपाक्रंस्त ।

**व्याख्या**—दिवम् = आकाशम्, आक्रममाणा=उद्गच्छन्ती, भयप्रदा=भीत्युत्पादिका, केतुतारा इव = शिखितारा इव, राक्षसी = यातुधानी, तस्य = हनूमतः, विक्रमं = शौर्यं, परीक्षितुं = निर्णेतुम्, उपाक्रंस्त = उत्सेहे ।

**&व्युत्पत्तिः&** आक्रममाणा—आक्रमत इति, "आङ उद्गमने" इति आत्मनेपदम् । लटः शानच् मुमागमश्च । भयप्रदा—भयं प्रददातीति, "प्रे दाज्ञः" इति अणोऽपवादः कः । उपाक्रंस्त—"वृत्तिसर्गतायनेषु क्रम" इति सर्गे ( उत्साहे ) आत्मनेपदम् । "लुङ्" इति लुङ् ।

**&भाषाऽर्थः&** आकाशको उठती हुई भयङ्कर केतु ताराकी सदृश किसी राक्षसीने हनूमान्‌जीके पराक्रमकी परीक्षाके लिए उत्साह किया ॥ २३ ॥

**जले विक्रममाणाया हनूमान् शतयोजनम् ।**
**आस्यं प्रविश्य निरयादणूभूयाऽप्रचेतितः ॥ २४ ॥**

**अन्वयः**—हनूमान् अणूभूय अप्रचेतितः (सन्) जले विक्रममाणायाः ( तस्याः ) शतयोजनम् आस्यं प्रविश्य निरयात् ।

**व्याख्या**—हनूमान् = आञ्जनेयः, अणूभूय = सूक्ष्मीभूय, अप्रचेतितः=अविज्ञातः सन्, जले = अम्बुनि, विक्रममाणायाः = पद्भ्यां विचरन्त्याः (तस्याः = राक्षस्याः), शतयोजनं = क्रोशचतुःशत्यायामोपेतम्, आस्यं = मुखं, प्रविश्य=प्रवेशं कृत्वा, उदरं विदार्येति शेषः । निरयात् = निर्गतः ।

❀व्युत्पत्तिः❀ अणूभूय = अनणुः अणुर्यथा संपद्यते तथा भूत्वा अणूभूय, च्विप्रत्ययः । "स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाऽणवः।" इत्यमरः । अप्रचेतितः-"चिती संज्ञाने" इति धातोः क्तः । विक्रममाणायाः—विक्रमत इति विक्रममाणा, तस्याः । "वेपाः दविहरणे" इत्यात्मनेपदम् । लटः शानच् । शतयोजनं—शतं योजनानि अस्य तत्, "प्रमाणे लोऽद्विगोर्नित्यम्" इति प्रमाणतद्धितस्य मात्रचो लुक् ।

❀भाषाऽर्थः❀ हनूमान्जी सूक्ष्म होकर अज्ञात होते हुए जलमें चलती हुई उस राक्षसीके सौ योजनवाले मुखमें प्रवेशकर (उसका पेट फाड़कर) निकल गये ॥ २४ ॥

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटम् ।
उपाक्रंस्ताऽऽकुलं घोरैः क्रममाणैर्निशाचरैः ॥ २५ ॥

**अन्वयः**—असौ सीतां द्रष्टुं प्रक्रममाणः घोरैः क्रममाणैः निशाचरैः आकुलम् अम्भोनिधेः तटम् उपाक्रंस्त ।

**व्याख्या**—असौ=हनूमान्, सीतां = जानकीं, द्रष्टुं = साक्षात्कर्तुं, प्रक्रममाणः= आरभमाणः, घोरैः=भयङ्करैः, क्रममाणैः = इतस्ततो गच्छद्भिः, निशाचरैः=राक्षसैः, आकुलं = व्याप्तम्, अम्भोनिधेः = समुद्रस्य, तटं = तीरम्, उपाक्रंस्त = गन्तुं प्रारब्धवानित्यर्थः ।

❀व्युत्पत्तिः❀ प्रक्रममाणः—प्रक्रमत इति, "प्रोपाभ्यां समर्थाभ्याम्" इति आत्मनेपदम् । लटः शानच्, मुगागमश्च । क्रममाणैः—क्रमन्त इति क्रममाणास्तैः "अनुपसर्गाद्वा" इत्यात्मनेपदम् । निशाचरैः—निशासु चरन्तीति निशाचरास्तैः, "चरेष्टः" इति टः । उपाक्रंस्त—"प्रोपाभ्यां समर्थाभ्याम्" इत्यात्मनेपदम् ।

❀भाषाऽर्थः❀ हनुमान्जीने सीताजीका पता लगानेके लिए आरम्भ करते हुए भयङ्कर और इधर उधर जाते हुए राक्षसोंसे व्याप्त समुद्रके तटपर चलना आरम्भ किया ॥ २५ ॥

आत्मानमपजानानः शशमात्रोऽनयद् दिनम् ।
ज्ञास्ये रात्राविति प्राज्ञः प्रत्यज्ञास्त क्रियापटुः ॥ २६ ॥

**अन्वयः**—प्राज्ञः क्रियापटुः (असौ) शशमात्रः आत्मानम् अपजानानः (सन्) दिनम् अनयत् । "रात्रौ ज्ञास्ये" इति प्रत्यज्ञास्त ।

**व्याख्या**—प्राज्ञः = बुद्धिमान्, एतेन विशेषणेन बुद्धिकौशलं सूच्यते । क्रिया-पटुः=कर्मनिपुणः, विशेषणेनैतेन कर्मकौशलं प्रदर्श्यते । ( असौ = हनूमान् ) शश-मात्रः = शशशरीरपरिमाणः सन्, आत्मानं = शरीरम्, अपजानानः = अपह्नुवानः सन्, दिनं = दिवसम्, अनयत्=अगमयत्, रात्रौ=रजन्यां, ज्ञास्ये=अवगमिष्यामि, इति = एवं, प्रत्यज्ञास्त = प्रतिज्ञातवान् ।

ॐव्युत्पत्तिःॐ शशमात्रः—शशो नाम प्लुतगतियुतः भाषायां "खरहा" इति नामधेयः पशुविशेषः । शशस्येव मात्रा ( अल्पपरिमाणम् ) यस्य स इति व्यधिकरण-बहुव्रीहिः । "मात्रा परिच्छेदे । अल्पे च परिमाणे स्यान्मात्रं कार्त्स्न्येऽवधारणे ।" इत्य-मरः। अपजानानः—अपपूर्वकात् "ज्ञा अवबोधने" इति धातोः "अपह्नवे ज्ञः" इत्या-त्मनेपदम् । ज्ञास्ये—"अकर्मकाच्च" इति अकर्मकक्रियावचनत्वादात्मनेपदम् । प्रत्य-ज्ञास्त—"संप्रतिभ्यामनाध्याने" इत्यात्मनेपदम् । उत्कण्ठापूर्वकं स्मरणमाध्या-नम् । "लुङ्" ।

ॐभाषाऽर्थःॐ बुद्धिमान् और कार्यमें निपुण हनुमानजीने खरहेकी तरह छोटा शरीरवाला होकर अपने शरीरको छिपाते हुए दिनको बिताया और "रातको जानूंगा" ऐसी प्रतिज्ञा की ॥ २६ ॥

सञ्जानानान् परिहरन् रावणाऽनुचरान् बहून् ।
लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमाम् ॥ २७ ॥

**अन्वयः**—संजानानान् बहून् रावणाऽनुचरान् परिहरन् वदमानः ( सः ) रात्रौ अरिदुर्गमां लङ्कां समाविशत् ।

**व्याख्या**—संजानानान् = चेतयतः, बहून्=बहुलान्, रावणानुचरान्=रावणसेव-कान्, परिहरन्=परित्यजन्, वदमानः=वदितुं जानानः, ( सः=हनूमान् ) रात्रौ= रजन्याम्, अरिदुर्गमां = शत्रुदुष्प्रवेश्यां, लङ्कां=रावणपुरीं, समाविशत् = प्रविष्टवान् ।

ॐव्युत्पत्तिःॐ संजानानान्—संजानत इति संजानानास्तान्, "सम्प्रतिभ्यामना-ध्याने" इति अनाध्यान आत्मनेपदम् । रावणाऽनुचरान्—रावणे ( लक्षणया रावण-प्रयोजने विषये ) अनुचरन्तीति रावणाऽनुचरास्तान्, "चरेष्ट" इति अधिकरण उप-पदे टः । वदमानः—वदत इति "भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इति ज्ञाने आत्मनेपदम् ।

ॐभाषाऽर्थःॐ जानते हुए बहुतेरे रावणके सेवकोंको छोड़ते हुए भाषण-कुशल हनुमानजीने रातमें शत्रुओंसे दुर्गम लङ्कामें प्रवेश किया ॥ २७ ॥

कंचिन्नोपाचदिष्टाऽसौ केनचिद् व्यवादिष्ट न ।
शृण्वन् संप्रवदमानाद्रावणस्य गुणान् जनात् ॥ २८ ॥

**अन्वयः**—असौ संप्रवदमानात् जनात् रावणस्य गुणान् शृण्वन् कंचित् न उपावदिष्ट, केनचित् न व्यवदिष्ट ( च )।

**व्याख्या**—असौ = हनूमान्, संप्रवदमानात्=संभूय भाषमाणात्, जनात् = लोकात्, रावणस्य= दशाननस्य, गुणान्=शौर्यत्यागदाक्षिण्यप्रभृतीन्, शृण्वन् = आकर्णयन्, कंचित् = जनं, न उपावदिष्ट = न उपसान्त्वितवान्, केनचित्=जनेन, न व्यवदिष्ट=न भाषितवांश्च ।

**%व्युत्पत्तिः%** संप्रवदमानात्—संप्रवदत इति संप्रवदमानः, तस्मात् । "व्यक्तवाचां समुच्चारणे" इति आत्मनेपदम् । उपावदिष्ट—"भासनोपसंभाषे"त्यादिना उपसंभाषायाम् ( उपसान्त्वने ) आत्मनेपदम् । व्यवदिष्ट—पूर्वसूत्रेणैव विमतावात्मनेपदम् ।

**%भाषाऽर्थः%** हनूमान्‌जीने इकट्ठे होकर बोलनेवाले लोगोंसे रावणके गुणोंको सुनते हुए किसीको उपसान्त्वन नहीं दिया और किसीसे भाषण भी नहीं किया॥२८॥

**जल्पितोत्क्रुष्टसंगीतप्रनृत्तस्मितवल्गितैः ।**
**घोषस्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः ॥ २९ ॥**

**अन्वयः**—लङ्का जल्पितोत्क्रुष्टसंगीतप्रनृत्तस्मितवल्गितैः पूतक्रतोः पुरो घोषस्य अन्ववदिष्ट इव ।

**व्याख्या**—लङ्का = रावणपुरी, जल्पितोत्क्रुष्टसंगीतप्रनृत्तस्मितवल्गितैः = भाषितोच्चाह्वानगाननर्तनमन्दहास्यवल्गनैः, पूतक्रतोः=इन्द्रस्य, पुरः=नगर्याः, अमरावत्या इत्यर्थः । घोषस्य=शब्दस्य, अन्ववदिष्ट इव=सदृशं वादं कृतवती इव ।

**%व्युत्पत्तिः%** लङ्का—अत्र लङ्कापदेन लङ्कास्थो जन उच्यते लक्षणाया तेन व्यक्तवाग्विषयत्वात् । "जल्पितोत्क्रुष्टसंगीतप्रनृत्तस्मितवल्गितैः-सर्वत्र भावे क्तः । पूतक्रतोः—पूताः क्रतवो येन स पूतक्रतुस्तस्य । अन्ववदिष्ट—अनुपूर्वाद्वदधातोर्लुङ् । "अनोरकर्मकात्" इत्यात्मनेपदम् ।

**%भाषाऽर्थः%** लङ्काने भाषित, क्रन्दित, गीत, नृत्य, मन्दहास्य और वल्गितसे इन्द्रकी पुरी अमरावतीके सदृश वाक्य उच्चारण किया क्या ? ऐसा मालूम पड़ता है॥२९॥

**ऐद् विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः ।**
**तथाऽवगिरमाणैश्च पिशाचैर्मांसशोणितम् ॥ ३० ॥**

**अन्वयः**—( सः ) विप्रवदमानैः ब्रह्मराक्षसैः तथा मांसशोणितम् अवगिरमाणैः पिशाचैश्च संयुक्तां ताम् ऐत् ।

**व्याख्या**—( सः = हनूमान् ) विप्रवदमानैः = परस्परविरुद्धाऽर्थाऽभिधायिभिः, ब्रह्मराक्षसैः, तथा = तेन प्रकारेण, मांसशोणितम् = क्रव्यरुधिरम् , अवगिरमा-

णैः = भक्षयद्भिः, पिशाचैश्च = देवयोनिविशेषैश्च, संयुक्तां=संयोगयुक्तां, तां = लङ्काम्, ऐत् = अगच्छत् ।

❀व्युत्पत्तिः❀ विप्रवदमानैः—विप्रवदन्त इति विप्रवदमानास्तैः विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे "विभाषा विप्रलापे" इत्यात्मनेपदम् । लटः शानच् । मांसशोणितम्—मांसं च शोणितं चेति, "जातिरप्राणिनाम्" इति समाहारद्वन्द्वः । अवगिरमाणैः—अवगिरन्त इति अवगिरमाणास्तैः, अवपूर्वकात् "गॄ निगरणे" इति धातोः "अवाद्ग्रः" इत्यात्मनेपदम् । लटः शानच् । ऐत्—"इण् गतौ" इति धातोर्लङ् ।

❀भाषाऽर्थः❀ हनूमान्जी परस्पर विरुद्ध अर्थ बोलनेवाले ब्रह्मराक्षसोंसे तथा मांस और रक्तको खानेवाले पिशाचोंसे भी संयुक्त लङ्कामें पहुँच गये ॥ ३० ॥

**यथास्वं संगिरन्ते स्म गोष्ठीषु स्वामिनो गुणान् ।**
**पानशौण्डाः पथः क्षीबा वृन्दैरुदचरन्त च ॥ ३१ ॥**

**अन्वयः**—( ब्रह्मराक्षसाः पिशाचाश्च ) गोष्ठीषु यथास्वं स्वामिनो गुणान् संगिरन्ते स्म, पानशौण्डाः क्षीबाः ( सन्तः ) वृन्दैः पथः उदचरन्त च ।

**व्याख्या**—( ब्रह्मराक्षसाः पिशाचाश्च ) गोष्ठीषु = सभासु, यथास्वम् = आत्मनः इत्यर्थः । स्वामिनः = प्रभोः, गुणान् = दयादाक्षिण्यादीन् , संगिरन्ते स्म = अभ्युपगतवन्तः, पानशौण्डाः = सुरापानविख्याताः, क्षीबाः = मत्ताः सन्तः, वृन्दैः = समूहैः, संभूयेति शेषः । पथः = मार्गान् , उदचरन्त च = उत्क्रम्य गच्छन्ति स्म ।

❀व्युत्पत्तिः❀ यथास्वं—स्वमनतिक्रम्येति, पदाऽर्थाऽनतिवृत्तिरूपे यथाऽर्थविशेषे अव्ययीभावः । संगिरन्ते—"समः प्रतिज्ञाने" इत्यात्मनेपदम् । पानशौण्डाः—पाने शौण्डाः, "सप्तमी शौण्डैः" इति समासः । "शौण्डो मत्ते च विख्याते पिप्पल्यां च भवेत्स्त्रियाम् ।" इति विश्वमेदिन्यौ । क्षीबाः—"मत्ते शौण्डोत्कटक्षीबाः" इत्यमरः । उदचरन्त—"उदश्चरः सकर्मकात्" इत्यात्मनेपदम् ।

❀भाषाऽर्थः❀ ब्रह्मराक्षस और पिशाचोंने सभाओंमें अपने मालिकके गुणोंका उच्चारण किया और वे मदिरा-पानमें विख्यात मत्त होते हुए समूहोंसे मिलकर मार्गोंको लांघकर चले भी ॥ ३१ ॥

**यानैः समचरन्ताऽन्ये कुञ्जराऽश्वरथाऽऽदिभिः ।**
**संप्रायच्छन्त बन्दीभिरन्ये पुष्पफलं शुभम् ॥ ३२ ॥**

**अन्वयः**—अन्ये कुञ्जराऽश्वरथाऽऽदिभिः यानैः समचरन्त । अन्ये बन्दीभिः शुभं पुष्पफलं संप्रायच्छन्त ।

**व्याख्या**—अन्ये = अपरे, राक्षसाः इत्यर्थः । कुञ्जराऽश्वरथादिभिः = गजहय-

स्यन्दनप्रभृतिभिः, यानैः= वाहनैः, समचरन्त = संचरन्ते स्म । अन्ये = इतरे, राक्षसा इत्यर्थः । बन्दीभिः = हठहृतमहिलाभिः, हठहृतमहिलाभ्य इति भावः । शुभं = शोभनं, पुष्पफलं = प्रसूनफलं, संप्रायच्छन्त = अददुः ।

ॐव्युत्पत्तिःॐ समचरन्त—"समस्तृतीयायुक्तात्" इत्यात्मनेपदम् । पुष्पफलं—पुष्पाणि च फलानि च पुष्पफलं, तत् "जातिरप्राणिनाम्" इति समाहारद्वन्द्वः । प्रायच्छन्त—संपूर्वकात् "दाण् दाने" इति धातोः "दाणश्च सा चेच्चतुर्थ्यर्थे" इत्यात्मनेपदम् । लङि रूपम् । "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिब-जिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति दाणो यच्छादेशः ।

ॐभाषाऽर्थःॐ दूसरे राक्षस हाथी, घोड़ा और रथ आदि सवारियोंसे चले और लोगोंने दूसरी जगहसे लाई गई स्त्रियोंके लिये सुन्दर फूल और फलोंको दिया ॥३२॥

**कोपात् काश्चित् प्रियैः प्रत्तमुपायंसत नाऽऽसवम् ।**
**प्रेम जिज्ञासमानाभ्यस्ताभ्योऽऽशप्सत कामिनः ॥ ३३ ॥**

**अन्वयः**—काश्चित् प्रियैः प्रत्तम् आसवं कोपात् न उपायंसत । कामिनः प्रेम जिज्ञासमानाभ्यः ताभ्यः अशप्सत ।

**व्याख्या**—काश्चित् = स्त्रियः, प्रियैः = दयितैः, प्रत्तं = दत्तम् , आसवं = मद्यविशेषं, कोपात् = क्रोधात् , अन्यस्त्रीगमनजनितादिति शेषः । न उपायंसत = न स्वीकृतवत्यः । कामिनः = कामुकाः, प्रेम = प्रणयं, जिज्ञासमानाभ्यः = ज्ञातुमिच्छन्तीभ्यः, ताभ्यः = स्त्रीभ्यः, अशप्सत = शपथं चक्रुः, "न मे त्वदन्या प्रियाऽस्ती"ति तदीयशरीरस्पर्शनेन इति शेषः ।

ॐव्युत्पत्तिःॐ प्रत्तं—प्रपूर्वकाद् दाधातोः क्तः "अच उपसर्गात्तः" इति तः । उपायंसत—उपपूर्वकात् यम्धातोर्लुङ् । "विभाषोपयमने" इति अकित्वपक्षे रूपम् । "उपाद्यमः स्वकरणे" इत्यात्मनेपदम् । जिज्ञासमानाभ्यः—ज्ञातुमिच्छन्तीति जिज्ञासमानास्ताभ्यः, सन्नन्तात् "ज्ञा अवबोधने" इति धातोः "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदम् । लटः शानच् । ताभ्यः—"अशप्सत" इति पदेन योगे "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति सम्प्रदानत्वाच्चतुर्थी । अशप्सत—"शप उपालम्भे" इति वार्तिकेनाऽऽत्मनेपदम् । लुङि रूपम् ।

ॐभाषाऽर्थःॐ कुछ स्त्रियोंने प्रियसे दी गई मदिराको क्रोधसे स्वीकार नहीं किया, कामी पुरुषोंने प्रेमको जाननेकी इच्छा करती हुई उन स्त्रियोंसे "तुम्हारे सिवाय मेरी दूसरी प्रिया नहीं है" इस तरह उनका शरीर छूकर शपथ खाया ॥ ३३ ॥

**प्रादिद्दक्षत नो नृत्यं नाऽशुश्रूषत गायनान् ।**
**रामं सुस्मूर्षमाणोऽसौ कपिविरहदुःखितम् ॥ ३४ ॥**

**अन्वयः**—असौ कपिः विरहदुःखितं रामं सुस्मूर्षमाणः ( सन् ) नृत्यं नो प्रादिदृक्षत, गायनान् न अशुश्रूषत ।

**व्याख्या**—असौ = अयं, कपिः = हनूमान्, विरहदुःखितं = सीतावियोगव्यथितं, रामं=रामचन्द्रं, सुस्मूर्षमाणः = स्मर्तुमिच्छन् सन्, नृत्यं = नर्तनं, नो प्रादिदृक्षत = द्रष्टुं नैच्छत्, गायनान्=गायकान् ( लक्षणयागायकगानानि ), न अशुश्रूषत= श्रोतुं न इष्टवान्, सद्भृत्याः सर्वतोभावेन स्वामिनमनुवर्तन्त इति भावः ।

ॐव्युत्पत्तिःॐ सुस्मूर्षमाणः—सन्नन्तात् स्मृधातोः "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदम्, "अज्झनगमां सनि" इति दीर्घत्वम् । "उदोष्ठ्यपूर्वस्य" इति उत्वम् । प्रादिदृक्षत—प्रपूर्वकात् सन्नन्तात् दृश्धातोर्लुङ् । पूर्वसूत्रेण आत्मनेपदम् । गायनान्—गायन्तीति गायनास्तान्, "गै शब्दे" इति धातोः "ण्युट् च" इति ण्युट् । अशुश्रूषत—सन्नन्तात् श्रुधातोर्लङ् । पूर्ववदात्मनेपदम् ।

ॐभाषाऽर्थःॐ हनूमान्‌जीने विरहसे दुःखित रामचन्द्रजीको स्मरण करनेकी इच्छा करते हुए नृत्य देखनेकी इच्छा नहीं की और गाना सुननेकी इच्छाभी नहीं की ॥३४॥

अनुजिज्ञासतेवाऽथ लङ्कादर्शनमिन्दुना ।
तमोऽपहविमुक्तांशु पूर्वस्यां दिश्युदैयत ॥ ३५ ॥

**अन्वयः**—अथ लङ्कादर्शनम् अनुजिज्ञासता इव इन्दुना पूर्वस्यां दिशि तमोपहविमुक्तांऽशु उदैयत ।

**व्याख्या**—अथ = तदनन्तरं, लङ्कादर्शनं=लङ्काविलोकनम्, अनुजिज्ञासता इव=अनुज्ञातुमिच्छता इव, इन्दुना = चन्द्रमसा, पूर्वस्यां दिशि=प्राच्यां काष्ठायां, तमोपहविमुक्तांऽशु = तिमिरनाशकप्रेरितकिरणं यथा तथा, उदैयत = उदितम् ।

ॐव्युत्पत्तिःॐ अनुजिज्ञासता=अनुज्ञातुमिच्छन् अनुजिज्ञासन्, तेन, "ज्ञाश्रुस्मृदृशां सनः" इति प्राप्तस्य आत्मनेपदस्य "नाऽनोर्ज्ञः" इति प्रतिषेधः । तमोपहविमुक्तांऽशु—तमोपहन्तीति तमोपहाः, "अपे क्लेशतमसोः" इति हन्तेर्डः । तमोऽपहा विमुक्ता अंशवो यस्मिन् (कर्मणि) तद्यथा तथेति क्रियाविशेषणम् । उदैयत—उत्पूर्वकादिणो भावे लङ् ।

ॐभाषाऽर्थःॐ अनन्तर लङ्का देखनेकी अनुज्ञा देनेकी इच्छा करते हुएके सदृश चन्द्रदेव पूर्व दिशामें अन्धकारका नाश करने वाले किरणोंको छोड़ कर उदित हुए ३५

आशुश्रूषन् स मैथिल्या वार्तां हर्म्येषु रक्षसाम् ।
शीयमानाऽन्धकारेषु समचारीदशङ्कितः ॥ ३६ ॥

**अन्वयः**—स मैथिल्या वार्ताम् आशुश्रूषन् शीयमानाऽन्धकारेषु रक्षसां हर्म्येषु अशङ्कितः ( सन् ) समचारीत् ।

**व्याख्या**—सः = हनूमान्, मैथिल्याः = सीतायाः, वार्ता=वृत्तान्तम्, आशुश्रूषन् = श्रोतुमिच्छन्, शीयमानाऽन्धकारेषु = अपगच्छत्तिमिरेषु, रक्षसां=राक्षसानां, हर्म्येषु = भवनेषु, अशङ्कितः = शङ्कारहितः सन्, समचारीत्=संक्रान्तवान् ।

ॐव्युत्पत्तिःॐ आशुश्रूषन्—"ज्ञाश्रुस्मृदृशां सनः" इति प्राप्तस्य आत्मनेपदस्य "प्रत्याङ्भ्यां श्रुवः" इति निषेधः । शीयमानाऽन्धकारेषु—शीयन्त इति शीयमानाः, "शद्लृ शातने" इति धातोः "शदेः शितः" इत्यात्मनेपदम् । "पाघ्राध्मे"त्यादिना शीयादेशः, लटः शानच् । शीयमाना अन्धकारा येभ्यस्तानि शीयमानाऽन्धकाराणि, तेषु । हर्म्येषु-हर्म्यादि धनिनां वासः" इत्यमरः । समचारीत्-संपूर्वकाच्चरधातोर्लुङ् । "अतो ल्रान्तस्य" इति वृद्धिः ।

ॐभाषाऽर्थःॐ हनुमानूजी सीताका वृत्तान्त सुननेकी इच्छा करते हुए जहांसे अन्धकार नष्ट हो रहे हैं, ऐसे राक्षसोंके भवनोंमें अशङ्कित होकर संचरण करने लगे ॥३६॥

**शतसाहस्रमारक्षं मध्यगं रक्षसां कपिः ।**
**ददर्श, यं कृतान्तोऽपि म्रियेताऽऽसाद्य भीषणम् ॥ ३७ ॥**

**अन्वयः**—कपिः मध्यगं शतसाहस्रं रक्षसाम् आरक्षं ददर्श, भीषणं यम् आसाद्य कृतान्तोऽपि म्रियेत ।

**व्याख्या**—कपिः = हनूमान्, मध्यगं = मध्यप्रकोष्ठगतं, शतसाहस्रं = लक्षपरिमाणं, रक्षसां = राक्षसानाम्, आरक्षं = गोपकं, ददर्श=विलोकितवान्, भीषणं= भयङ्करं, यं = गोपकम्, आसाद्य = प्राप्य, कृतान्तोऽपि = यमराजोऽपि, अन्यस्य का कथेति भावः । म्रियेत = प्राणान् संत्यजेत् ।

ॐव्युत्पत्तिःॐ शतसाहस्रं—शतस्य सहस्रं शतसहस्रं, तत्परिमाणमस्येति, "शतमानविंशतिकसहस्रवसनादण्" इति अण् । "संख्यायाः संवत्सरसंख्यस्य च" इति उत्तरपदवृद्धिः । म्रियेत—"मृङ् प्राणत्यागे" इति धातोर्लिङ् । "म्रियतेर्लुङ्लिङोश्च" इत्यात्मनेपदम् ॥

ॐभाषाऽर्थःॐ हनुमानूजीने मध्यप्रकोष्ठमें अवस्थित लक्षसंख्यक राक्षसोंके रक्षकोंको देखा, भयङ्कर जिनके पास पहुंचकर यमराज भी प्राण छोड़ेंगे ॥ ३७ ॥

**अध्यासिसिषमाणे ऽथ वियन्मध्यं निशाकरे ।**
**कासांचक्रे पुरी सौधैरतीवोद्भासिभिः सितैः ॥ ३८ ॥**

**अन्वयः**—अथ निशाकरे वियन्मध्यम् अध्यासिसिषमाणे ( सति ) पुरी अतीव उद्भासिभिः सितैः सौधैः कासाञ्चक्रे ।

**व्याख्या**—अथ = अनन्तरं, निशाकरे=चन्द्रमसि, वियन्मध्यं = व्योममध्यम्, अध्यासिसिषमाणे = आरोढुमिच्छति सति, पुरी = लङ्कानगरी, अतीव = अत्यर्थम्,

उद्भासिभिः = उद्दीप्यमानैः, सितैः = शुक्लवर्णैः, सौधैः = राजसदनैः, कासाञ्चक्रे= शुशुभे, सौधानां ज्योत्स्नयोद्भास्यमानत्वादिति भावः ।

❀व्युत्पत्तिः❀ वियन्मध्यम्—"अध्यासिसिषमाणे" इति पदेन योगे "अधिशीङ्स्थाऽऽसां कर्म" इत्याधारस्य कर्मत्वम् । अध्यासिसिषमाणे—अध्यासितुमिच्छन् अध्यासिसिषमाणस्तस्मिन् , "आस उपवेशने" इति धातोरनुदात्तेत्त्वेन आत्मनेपदत्वात् "पूर्ववत्सन" इति सन्नन्तादपि तस्मादात्मनेपदम् । अत्र सनि इटि कृते "अजादेर्द्वितीयस्य" इति द्विर्वचनम् । लटः शानच् । कासाञ्चक्रे—"आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इत्यात्मनेपदम् ।

❀भाषाऽर्थः❀ अनन्तर चन्द्रदेवके आकाशके मध्यभागको चढ़नेकी इच्छा करने पर लङ्का नगरी अतिशय दीप्यमान सफेद प्रासादोंसे शोभित हुई ॥ ३८ ॥

**इन्दुं चषक-संक्रान्तमुपायुङ्क्त यथाऽमृतम् ।**
**प्रयुञ्जानः प्रिया वाचः समाजाऽनुरतो जनः ॥ ३९ ॥**

**अन्वयः**—समाजाऽनुरतो जनः प्रिया वाचः प्रयुञ्जानः ( सन् ) चषकसङ्क्रान्तम्, इन्दुम् अमृतं यथा उपायुङ्क्त ।

**व्याख्या**—समाजाऽनुरतः = पानगोष्ठीरतः, जनः = लोकः, प्रियाः = प्रणयोपेताः, अनुकूला इत्यर्थः । वाचः = वचनानि, प्रयुञ्जानः = प्रयोगं कुर्वाणः अभिदधान इत्यर्थः । चषकसङ्क्रान्तं=मद्यपात्रप्रतिबिम्बितम् , इन्दुं = चन्द्रमसम् , अमृतं यथा= पीयूषम् इव, उपायुङ्क्त=उपभुक्तवान् ।

❀व्युत्पत्तिः❀ प्रयुञ्जानः—प्रयुङ्क्त इति प्रपूर्वकात् "युजिर् योगे" इति धातोः "प्रोपाभ्यां युजेरयज्ञपात्रेषु" इत्यात्मनेपदम् । चषकसंक्रान्तं—चषके संक्रान्तस्तम् , "चषकोऽस्त्री पानपात्रम्" इत्यमरः । उपायुङ्क्त—उपपूर्वकात् युजिधातोः लङ्, पूर्वसूत्रेण आत्मनेपदम् ।

❀भाषाऽर्थः❀ पानगोष्ठीमें तत्पर जनने अनुकूल वचनोंको बोलते हुए, प्यालेमें प्रतिबिम्बित चन्द्रका अमृतके समान उपभोग किया ॥ ३९ ॥

**संदृण्वान इवोत्कण्ठामुपाभुङ्क्त सुरामलम् ।**
**ज्योत्स्नायां विगलन्मानस्तरुणो रक्षसां गणः ॥ ४० ॥**

**अन्वयः**—विगलन्मानः तरुणो रक्षसां गणः उत्कण्ठां संदृण्वान इव ज्योत्स्नायां सुराम् अलम् उपाभुङ्क्त ।

**व्याख्या**—विगलन्मानः = अपगताऽभिमानः, तरुणः = युवा, रक्षसां = राक्षसानां, गणः = समूहः, उत्कण्ठाम् = उत्कलिकां, प्रियासु संस्मरणमित्यर्थः । संदृण्-

चान इव = समुत्तेजयन्निव, ज्योत्स्नायां = चन्द्रिकायां, सुरां = मदिराम् , अलं = पर्याप्तं यथा तथा, उपाभुङ्क्त = अभ्याहृतवान् ।

॥व्युत्पत्तिः॥ उत्कण्ठाम्—"उत्कण्ठोत्कलिके समे" इत्यमरः । संक्ष्णुवानः—संक्ष्णुते इति, संपूर्वकात् "क्ष्णु तेजने" इत्यदादिगणस्थाद्धातोः "समः क्ष्णुवः" इत्यात्मनेपदम् । लटः शानच् । उपाभुङ्क्त—उपपूर्वकात् "भुज पालनाऽभ्यवहारयोः" इति धातोः "भुजोऽनवने" इत्यात्मनेपदम् ।

॥भाषाऽर्थः॥ अभिमानशून्य युवक राक्षसोंके समूहने उत्कण्ठाको उत्तेजित करते हुए की तरह चन्द्रिका ( चाँदनी ) में मदिराका पर्याप्त उपभोग किया ॥ ४० ॥

**मध्वपाययत स्वच्छं सोत्पलं दयिताऽन्तिके ।**
**आत्मानं सुरताऽऽभोगविश्रम्भोत्पादनं मुहुः ॥ ४१ ॥**

**अन्वयः**—स्वच्छं सोत्पलं मधु मुहुः सुरताऽऽभोगविश्रम्भोत्पादनम् आत्मानं दयिताऽन्तिके अपाययत ।

**व्याख्या**—स्वच्छं = निर्मलं, सोत्पलम् = उत्पलसहितं, सौरभसम्पन्नमिति भावः । एतादृशं मधु = मद्यं, मुहुः=पुनः पुनः, सुरताऽऽभोगविश्रम्भोत्पादनं = निधुवनपरिपूर्णताविश्वासजनकम् , आत्मानं = स्वं, दयिताऽन्तिके = प्रियसमीपे, अपाययत = पायितवत् ।

॥व्युत्पत्तिः॥ सुरताऽऽभोगविश्रम्भोत्पादनं—सुरतस्य आभोगे विश्रम्भस्य उत्पादनम् । उत्पादयतीति उत्पादनं, "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट् । "आभोगः परिपूर्णता" इत्यमरः । अपाययत—णिजन्तात् "पा पाने" इति धातोः "णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने" इत्यात्मनेपदम् । लङि रूपम् ।

॥भाषाऽर्थः॥ निर्मल और कमलसे युक्त मदिराने बार-बार सुरतकी परिपूर्णताके विश्वासको उत्पन्न करनेवाली अपनेको प्रियके समीपमें पिलाया ॥ ४१ ॥

**अभीषयन्त ये शक्रं राक्षसा रणपण्डिताः ।**
**अविस्माप्यमानस्तान् कपिराटीद् गृहाद् गृहम् ॥ ४२ ॥**

**अन्वयः**—रणपण्डिता ये राक्षसाः शक्रम् अभीषयन्त, कपिः तान् अविस्मापयमानः ( सन् ) गृहात् गृहम् आटीत् ।

**व्याख्या**—रणपण्डिताः = युद्धकुशलाः, ये, राक्षसाः = यातुधानाः, शक्रम् = इन्द्रम् , अभीषयन्त = भीषितवन्तः, कपिः = हनूमान् , तान् = पूर्वोक्तान् राक्षसान् , अविस्मापयमानः = विस्मयमकारयन् सन् , गृहात् = भवनात् , गृहं = भवनान्तरम् , आटीत् = गतः ।

*व्युत्पत्तिः* रणपण्डिताः—सदसद्विवेकवती बुद्धिः पण्डा, सा संजाता एषां ते पण्डिताः, "तदस्य संजातं तारकादिभ्य इतच्" इतीतच्। रणे पण्डिताः। अभीषयन्त—णिजन्तात् "ञिभी भये" इति धातोः "भीस्म्योर्हेतुभये" इत्यात्मनेपदम्। "भियो हेतुभये षुक्" इति षुक्। लङि रूपम्। अविस्मापयमानः—विस्मापयत इति विस्मापयमानः, विपूर्वकात् "स्मिङ् ईषद्धसने" इति ण्यन्तद्धातोः पूर्वसूत्रेणैवात्मनेपदम्। भयग्रहणमुपलक्षणं तेन स्मयतेरपि भवति। "नित्यं स्मयतेः" इत्यात्वम्। लटः शानच्। न विस्मापयमानः। आटीत्—"अट गतौ" इति धातोर्लुङ्।

*भाषाऽर्थः* युद्धमें कुशल जो राक्षस इन्द्रको डराते थे, हनूमान्जी उनको विस्मित न करते हुए एक भवनसे दूसरे भवनको गये ॥ ४२ ॥

**सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्धयत राक्षसान्।**
**अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषाम् ॥ ४३ ॥**

**अन्वयः**—सीतां दिदृक्षुः स प्रच्छन्नः ( सन् ) राक्षसान् अगर्धयत्, स्वमायाभिः नरद्विषां मायाश्च अवञ्चयत।

**व्याख्या**—सीतां=मैथिलीं, दिदृक्षुः=द्रष्टुमिच्छुः, सः=हनूमान्, प्रच्छन्नः=दर्शनाऽगोचरः सन्, राक्षसान्=यातुधानान्, अगर्धयत्=व्यामोहयत्, स्वमायाभिः=आत्ममायाभिः, नरद्विषां=मनुष्यद्वेषिणां, राक्षसानामित्यर्थः। मायाश्च=शाम्बरीश्च, अवञ्चयत=अतिसंहितवांश्च।

*व्युत्पत्तिः* दिदृक्षुः—सन्नन्ताद् दृशधातोरुः। अगर्धयत—"गृधु अभिकाङ्क्षायाम्" इति धातोर्णिजन्ताद् "गृधिवञ्च्योः प्रलम्भने" इति प्रलम्भने ( प्रतारणेऽर्थे ) आत्मनेपदम्। लङि रूपम्। मायाः—"स्यान्माया शाम्बरी"त्यमरः। अवञ्चयत—गत्यर्थाद्वञ्चुधातोः पूर्वसूत्रेणैव आत्मनेपदम्। लङि रूपम्।

*भाषाऽर्थः* सीताजीको देखनेकी इच्छा करनेवाले हनूमान्जीने प्रच्छन्न होकर राक्षसोंको मोहित किया और उनकी मायाओंकी वञ्चना की ॥ ४३ ॥

**अपलापयमानस्य शत्रूंस्तस्याऽभवन्मतिः।**
**मिथ्याकारयते चारैर्घोषणां राक्षसाऽधिपः ॥ ४४ ॥**

**अन्वयः**—शत्रून् अपलापयमानस्य तस्य मतिः अभवत्—"राक्षसाऽधिपः चारैः घोषणां मिथ्या कारयते"।

**व्याख्या**—शत्रून्=रिपून्, अपलापयमानस्य = न्यक्कुर्वतः, तस्य = हनूमतः, मतिः = बुद्धिः, अभवत्=सञ्जाता, राक्षसाऽधिपः=यातुधानेश्वरः, रावण इत्यर्थः। चारैः = दण्डवाहकैः, घोषणां="जागृत जागृते"तिरूपामित्यर्थः। मिथ्या कारयते= मृषाभूतां कारयति, येनाऽहमविज्ञात एव प्रविष्ट इति भावः।

॥व्युत्पत्तिः॥ अपलापयमानस्य—अपलापयत इति अपलापयमानस्तस्य । णिजन्तात् अपपूर्वकात् दैवादिकात् "लीङ् श्लेषणे" इति धातोः "विभाषा लीयतेः" इत्यात्वे "लियः संमाननशालीनीकरणयोश्च" इति शालीनीकरणे ( न्यग्भावने ) आत्मनेपदम् । लटः शानच् । मिथ्याकारयते—"मिथ्योपपदात्कृञोऽभ्यासे" इत्यात्मनेपदम् । अभ्यासश्च पुनः पुनः करणम् ।

॥भाषाऽर्थः॥ राक्षसोंको अभिभूत करते हुए हनुमान्‌जीकी बुद्धि हुई—"राक्षसेश्वर रावण चारोंसे "जागते रहो, जागते रहो "ऐसी घोषणाको झूठी करा रहा है, ( जो कि अविज्ञात ही होकर मैं प्रविष्ट हुआ )" ॥ ४४ ॥

कुलकम् ४५-४९

**गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः ।**
**नृभ्योऽपवदमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥**

**अन्वयः**—( सः ) स्वमाहात्म्यं गूहमानः मन्त्रिसंसदः अटित्वा नृभ्यः अपवदमानस्य रावणस्य गृहं ययौ ।

**व्याख्या**—( सः=हनूमान् ) स्वमाहात्म्यं = निजपराक्रमं, गूहमानः=आवृण्वन् सन्, मन्त्रिसंसदः = शुकसारणादिसचिवगृहाणि, अटित्वा=गत्वा, नृभ्यः=मनुष्येभ्यः, अपवदमानस्य = कुप्यतः असूयतो वा । रावणस्य = दशाननस्य, गृहं=सौधं, ययौ =जगाम ।

॥व्युत्पत्तिः॥ स्वमाहात्म्यं—महान् आत्मा ( यत्नः ) यस्य स महात्मा, महात्मनो भावः कर्म वा माहात्म्यं, "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ् "नस्तद्धिते" इति टिलोपः, आदिवृद्धिश्च। स्वं च तत् माहात्म्यं स्वमाहात्म्यं, तत् । गूहमानः—गूहत इति, "गुहू संवरणे" इति धातोः "ऊदुपधाया गोहः" इति उपधाया ऊत्वम् । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यात्मनेपदम् । नृभ्यः—"अपवादमानस्य" इति पदेन योगे "क्रुधद्रुहेर्ष्यासूयाऽर्थानां यं प्रति कोप" इति चतुर्थी। अपवदमानस्य-अपवदत इति अपवदमानस्तस्य, "अपाद्वद" इत्यात्मनेपदम् ।

॥भाषाऽर्थः॥ हनूमान्‌जी अपने पराक्रमको छिपाते हुए शुक-सारण आदि मन्त्रियोंके भवनोंको जाकर मनुष्योंसे क्रोध करनेवाले रावणके प्रासादको गये ॥ ४५ ॥

**दिशो द्योतयमानाभिर्दिव्यनारीभिराकुलम् ।**
**श्रियमायच्छमानाभिरुत्तमाभिरनुत्तमाम् ॥ ४६ ॥**

**अन्वयः**—दिशो द्योतयमानाभिः अनुत्तमां श्रियम् आयच्छमानाभिः उत्तमाभिः दिव्यनारीभिः आकुलम् ( रावणस्य गृहं ययौ ) ।

**व्याख्या**—दिशः = आशाः, द्योतयमानाभिः = भासयमानाभिः, अनुत्तमाम्= अतिशयवतीं, श्रियं=शोभाम् , आयच्छमानाभिः=स्वीकुर्वाणाभिः, उत्तमाभिः=श्रेष्ठाभिः, दिव्यनारीभिः=मनोज्ञललनाभिः, आकुलं=व्याप्तं, "रावणस्य गृहं ययौ" इति पूर्वश्लोकस्थैः पदैः सम्बन्धः ।

❀व्युत्पत्तिः❀ द्योतयमानाभिः—द्योतयन्त इति द्योतयमानास्ताभिः, णिजन्तात् "द्युत दीप्तौ" इति धातोः "णिचश्च" इति कर्तृगामिनि क्रियाफल आत्मनेपदम् । अनुत्तमाम्—अविद्यमाना उत्तमा यस्याः साऽनुत्तमा ताम् । "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति नञ्बहुव्रीहिः । आयच्छमानाभिः—आयच्छन्त इति आयच्छमानास्ताभिः, आङ्पूर्वकात् "यम उपरमे" इति धातोः "समुदाङ्भ्यो यमो ग्रन्थे" इत्यात्मनेपदम् । लटः शानच् ।

❀भाषाऽर्थः❀ दिशाओंको प्रकाशित कराती हुई और अतिशय शोभाको स्वीकार करती हुई उत्तम और सुन्दरी स्त्रियोंसे व्याप्त रावणके भवनको हनूमान्‌जी गये ॥४६॥

**नित्यमुद्यच्छमानाभिः स्मरसम्भोगकर्मसु ।**
**जानानाभिरलं लीलाकिलकिंचितविभ्रमान् ॥ ४७ ॥**

**अन्वयः**—स्मरसम्भोगकर्मसु नित्यम् उद्यच्छमानाभिः लीलाकिलकिञ्चितविभ्रमान् अलं जानानाभिः ( दिव्यनारीभिः आकुलं रावणस्य गृहं ययौ ) ।

**व्याख्या**—स्मरसम्भोगकर्मसु = कामोपभोगक्रियासु, नित्यम् = अजस्रम् , उद्यच्छमानाभिः = उत्साहमानाभिः, एवं च लीलाकिलकिञ्चितविभ्रमान् = स्त्रीणां शृङ्गारचेष्टाविशेषान् , अलं=पर्याप्तं यथा तथा, जानानाभिः=अवगच्छन्तीभिः ( दिव्यनारीभिराकुलं रावणस्य गृहं ययौ, इति पूर्वश्लोकस्थपदैः सम्बन्धः ) ।

❀व्युत्पत्तिः❀ उद्यच्छमानाभिः—उद्यच्छन्त इति उद्यच्छमानास्ताभिः, "समुदाङ्भ्यो यमोऽग्रन्थे" इति आत्मनेपदम् । लटः शानच् । लीलाकिलकिञ्चितविभ्रमान्—लीला च किलकिञ्चितं च विभ्रमश्च लीलाकिलकिञ्चितविभ्रमास्तान् । स्त्रीणां यौवने अष्टादशसंख्यकेषु स्वभावजेष्वलङ्कारेषु अन्यतमत्वेन निर्दिष्टा एते त्रयोऽलङ्कारा अन्येषामपि उपलक्षणत्वेन प्रस्तूयन्ते । तत्र लीलालक्षणं यथा साहित्यदर्पणे—

"अङ्गैर्वेषैरलङ्कारैः प्रेमभिर्वचनैरपि ।
प्रीतिप्रयोजितैर्लीलां प्रियस्याऽनुकृतिं विदुः ॥" ३-११४ इति ।

किलकिञ्चितलक्षणमपि तत्रैव—

"स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् ।
साङ्कर्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात् ॥" ३-११८ इति ।

विभ्रमलक्षणमपि तत्रस्थं यथा—

"त्वरया हर्षरागादेर्दयिताऽऽगमनादिषु ।

अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः ॥" ३-१२१ इति ।

जानानाभिः—जानते इति जानानास्ताभिः, "ज्ञा अवबोधने" इति धातोः "अनुपसर्गाज्ज्ञः" इत्यात्मनेपदम् ।

ॐभाषाऽर्थःॐ कामके उपभोगकी क्रियाओंमें नित्य उत्साह करती हुई लीला, किलकिञ्चित और विभ्रम आदि शृङ्गारकी चेष्टाओंको पर्याप्त जानती हुई दिव्य स्त्रियोंसे व्याप्त रावणके प्रासादको हनुमान्‌जी गये ॥ ४७ ॥

**स्वं कर्म कारयन्नास्ते निश्चिन्तो या झषध्वजः ।**
**स्वाऽर्थं कारयमाणाभिर्यूनो मदविमोहितान् ॥ ४८ ॥**

**अन्वयः**—स्वं कर्म याः कारयन् झषध्वजो निश्चिन्त आस्ते । मदविमोहितान् यूनः स्वाऽर्थं कारयमाणाभिः ( दिव्यनारीभिः आकुलं रावणस्य गृहं स ययौ )।

**व्याख्या**—स्वम् = आत्मीयं, कर्म = क्रियां मोहनादिरूपामित्यर्थः । याः = दिव्यनारीः, कारयन् = अनुष्ठापयन्, झषध्वजः = कामदेवः, निश्चिन्तः = चिन्तारहितः, आस्ते = तिष्ठति । मदविमोहितान् = मधुपानमदपरवशान्, यूनः = तरुणान्, स्वार्थम् = आत्मप्रयोजनं, निधुवनमित्यर्थः । कारयमाणाभिः = तैः कारयन्तीभिरित्यर्थः, दिव्यनारीभिराकुलं रावणस्य गृहं स ययौ ।

ॐव्युत्पत्तिःॐ याः—"हृक्रोरन्यतरस्याम्" इति वैकल्पिकी कर्मसंज्ञा । कारयन्—कारयतीति, णिजन्तात्कृधातोर्लटः शत्रादेशः । झषध्वजः—झषो ध्वजो यस्य सः, "पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः" इत्यमरः । यूनः = पूर्वसूत्रेण कर्मसंज्ञा ।

ॐभाषाऽर्थःॐ जहांपर अपने मोहन आदि कर्मको दिव्यस्त्रियोंसे कराते हुए कामदेव निश्चिन्त होकर रहते हैं । मद्यपानसे मोहित जवानोंसे रतिक्रीडा कराती हुई दिव्यस्त्रियोंसे व्याप्त रावणके भवनको हनुमान्‌जी गये ॥ ४८ ॥

**कान्ति स्वां वहमानाभिर्यजन्तीभिः स्वविग्रहान् ।**
**नेत्रैरिव पिबन्तीभिः पश्यतां चित्तसंहतीः ॥ ४९ ॥**

**अन्वयः**—स्वां कान्ति वहमानाभिः स्वविग्रहान् यजन्तीभिः पश्यतां चित्तसंहतीः नेत्रैः पिबन्तीभिः इव ( दिव्यनारीभिः आकुलं रावणस्य गृहं ययौ )।

**व्याख्या**—स्वाम् = आत्मीयां, कान्ति = द्युतिं, वहमानाभिः = दधतीभिः, स्वविग्रहान् = आत्मशरीराणि, यजन्तीभिः = ददतीभिः, कामिभ्य इति शेषः । पश्यतां = विलोकयतां, चित्तसंहतीः = मानससमूहान्, नेत्रैः = नयनैः, पिबन्तीभिः इव = धयन्तीभिः इव, एतादृशीभिर्दिव्यनारीभिराकुलं रावणस्य गृहं ययौ ।

✽व्युत्पत्तिः✽ वहमानाभिः—वहन्त इति वहमानास्ताभिः, "वह प्रापणे" इति धातोः "विभाषोपपदेन प्रतीयमान" इति क्रियाफले कर्तृगामिनि सति विकल्पात् आत्मनेपदम्। लटः शानच्। यजन्तीभिः—यजन्तीति यजन्त्यस्ताभिः, "यज देवपूजासङ्गतिकरणदानेषु" इति धातोः क्रियाफले कर्त्रगामिनि सति पूर्वसूत्रस्य प्रवृत्त्यभावात् परस्मैपदम्। लटः शत्रादेशः। इत्यात्मनेपदाधिकारः। शेषभूतत्वात्परस्मैपदविधानमाह—नेत्रैरिति। पिबन्तीभिः—पिबन्तीति पिबन्त्यस्ताभिः, "दृशिर् प्रेक्षणे" इति धातोः "शेषात्कर्तरि परस्मैपदम्" इति परस्मैपदम्। लटः शत्रादेशः। स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीप्।

✽भाषाऽर्थः✽ अपनी कान्तिको धारण करती हुईं, अपने शरीरको कामियोंको सौंपती हुईं और देखनेवालोंके चित्त-समुदायको नेत्रोंसे पान करती हुईंके सदृश दिव्य स्त्रियोंसे व्याप्त रावणके प्रासादको हनूमान्जी गये ॥ ४९ ॥

**ता हनूमान् पराकुर्वन्नगमत् पुष्पकं प्रति।**
**विमानं मन्दरस्याद्रेरनुकुर्वदिव श्रियम् ॥ ५० ॥**

**अन्वयः**—हनूमान् ताः पराकुर्वन् मन्दरस्य अद्रेः श्रियम् अनुकुर्वत् इव पुष्पकं विमानं प्रति जगाम।

**व्याख्या**—हनूमान् = आञ्जनेयः, ताः = दिव्यनारीः, पराकुर्वन् = निराकुर्वन्, मन्दरस्य=मन्दरनामकस्य, अद्रेः = पर्वतस्य, श्रियं = शोभाम्, अनुकुर्वत् इव=विडम्बयत् इव, पुष्पकं = तन्नामकं, विमानं प्रति=व्योमयानं प्रति, जगाम=ययौ।

✽व्युत्पत्तिः✽ पराकुर्वन्—पराकरोतीति पराकुर्वन्, परापूर्वकात् "डुकृञ् करणे" इति धातोः क्रियाफले कर्त्रभिप्राये "स्वरितञित" इत्यादिसूत्रेण आत्मनेपदे प्राप्ते "अनुपराभ्यां कृञः" इत्यात्मनेपदम्। लटः शत्रादेशः। अनुकुर्वत्—अनुकरोति इति अनुकुर्वत् तत्, पूर्वसूत्रेणैव परस्मैपदम्। विमानं—"प्रति"पदेन योगे "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि" इति द्वितीया।

✽भाषाऽर्थः✽ हनूमान्जी उन दिव्यस्त्रियोंको छोड़ते हुए मन्दर पर्वतकी शोभाकी नकल करते हुएके सदृश पुष्पक विमानके पास चले गये ॥ ५० ॥

**तस्मिन् कैलाससंकाशं शिरःशृङ्गं भुजद्रुमम्।**
**अभिक्षिपन्तमैक्षिष्ट रावणं पर्वतश्रियम् ॥ ५१ ॥**

**अन्वयः**—( सः ) तस्मिन् कैलाससङ्काशं शिरःशृङ्गं भुजद्रुमं पर्वतश्रियम् अभिक्षिपन्तं रावणम् ऐक्षिष्ट।

**व्याख्या**—( सः = हनूमान् ) तस्मिन् = विमाने, कैलाससङ्काशं = कैलाससदृशं, शिरःशृङ्गं = शिखरतुल्यमस्तकं, भुजद्रुमं = वृक्षसमबाहुम्, अत एव—पर्वत-

श्रियम् = अद्रिशोभाम्, अभिक्षिपन्तम् = अभिभवन्तं, रावणं = दशाननम्, ऐक्षिष्ट= दृष्टवान् ।

ॐव्युत्पत्तिःॐ कैलाससङ्काशं—कैलासेन सदृशः कैलाससङ्काशस्तम्, अस्वपदविग्रहो नित्यसमासः । "निभसङ्काशनीकाशप्रतीकाशोपमादयः ।" इत्यमरः । शिरःशृङ्गं—शिरांसि शृङ्गाणीव यस्य स शिरःशृङ्गस्तम् । भुजद्रुमं—भुजा द्रुमा इव यस्य स भुजद्रुमस्तम् । अभिक्षिपन्तम्—अभिक्षिपतीति अभिक्षिपन्, तम् । अभिपूर्वकात् "क्षिप प्रेरणे" इति धातोः स्वरितेत्त्वात्क्रियाफले कर्त्रभिप्राये आत्मनेपदे प्राप्ते "अभिप्रत्यतिभ्यः क्षिपः" इति परस्मैपदम् । ऐक्षिष्ट—ईक्षधातोर्लुङ् । उपमाऽलङ्कारः ।

ॐभाषाऽर्थःॐ हनुमान्‌जीने उस विमानमें कैलासके सदृश, चोटीके तुल्य शिरोंसे युक्त, वृक्षके सदृश बाहुओंसे युक्त, अतः पर्वतकी शोभाको अभिभूत करते हुए रावणको देखा ॥ ५१ ॥

प्रवहन्तं सदाऽऽमोदं सुप्तं परिजनाऽन्वितम् ।
मघोने परिमृष्यन्तमारमन्तं परं स्मरे ॥ ५२ ॥

**अन्वयः**—सदा आमोदं प्रवहन्तं सुप्तं परिजनाऽन्वितं मघोने परिमृष्यन्तं स्मरे परम् आरमन्तम् ( रावणम् ऐक्षिष्ट ) ।

**व्याख्या**—सदा = सर्वदा, आमोदं = कस्तूरिकादिपरिमलं, प्रवहन्तं = धारयन्तं, सुप्तं = शयने संविष्टं, परिजनाऽन्वितं = पारिपार्श्विकाऽधिष्ठितं, मघोने = इन्द्राय, परिमृष्यन्तम् = असूयन्तं, स्मरे = कामे, परम् = अत्यर्थम्, आरमन्तं = सक्तिं कुर्वाणं, रावणमैक्षिष्टेति पूर्वश्लोकस्थपदाभ्यां सम्बन्धः ।

ॐव्युत्पत्तिःॐ प्रवहन्तं—प्रवहतीति प्रवहन्, तम् । वहधातोः स्वरितेत्त्वादात्मनेपदे प्राप्ते "प्राद्वहः" इति परस्मैपदम् । लटः शत्रादेशः । मघोने—"परिमृष्यन्तम्" इति असूयार्थकेन पदेन योगे "क्रुधद्रुहेर्ष्यासूयाऽर्थानां यं प्रति कोपः" इति संप्रदानत्वाच्चतुर्थी । परिमृष्यन्तं—परिमृष्यतीति परिमृष्यन्, तम् । "मृष तितिक्षायाम्" इति धातोः स्वरितेतः "परेर्मृषः" इति परस्मैपदम् । आरमन्तं—"रमु क्रीडायाम्" इति धातोरनुदात्तेत्त्वात् "अनुदात्तङित आत्मनेपदम्" इति आत्मनेपदे प्राप्ते आङ्पूर्वकस्य तस्य "व्याङ्परिभ्यो रमः" इति परस्मैपदम् ।

ॐभाषाऽर्थःॐ सब समय कस्तूरी आदि परिमलको धारण करते हुए, पलंगपर लेटे हुए, नौकरोंसे घिरे हुए, इन्द्रकी असूया करते हुए और काममें अतिशय आसक्ति करते हुए रावणको हनुमान्‌जीने देखा ॥ ५२ ॥

व्यरमत् प्रधनाद् यस्मात् परित्रस्तः सहस्रदृक् ।
क्षणं पर्यरमत्तस्य दर्शनान्मारुताऽऽत्मजः ॥ ५३ ॥

**अन्वयः**—सहस्रदृक् यस्मात् परित्रस्तः ( सन् ) प्रधनात् व्यरमत्; मारुताऽऽत्मजः तस्य दर्शनात् क्षणं पर्यरमत् ।

**व्याख्या**—सहस्रदृक् = इन्द्रः, यस्मात् = रावणात्, परित्रस्तः = पर्युद्विग्नः सन्, प्रधनात् = युद्धात्, व्यरमत् = उपरतव्यापारोऽभूत्, मारुताऽऽत्मजः = वायुनन्दनः, हनूमानित्यर्थः । तस्य=रावणस्य, महाबलस्येति भावः । दर्शनात् = विलोकनात्, क्षणं = कञ्चित्कालं, पर्यरमत् = परितुष्टोऽभूत् ।

॥व्युत्पत्तिः॥ सहस्रदृक्—सहस्रं दृशो यस्य सः । यस्मात्—"परित्रस्त" इति पदेन योगे "भीत्रार्थानां भयहेतुः" इति अपादानत्वात्पञ्चमी । प्रधनात्—"व्यरमत्" इति पदेन योगे "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इति पञ्चमी । "युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।" इत्यमरः । व्यरमत्—विपूर्वकात् रमुधातोः "व्याङ्परिभ्यो रमः" इति परस्मैपदत्वम् । क्षणं—"कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया । पर्यरमत्—पूर्वसूत्रेणैवाऽऽत्मनेपदम् । लङि रूपम् ।

॥भाषाऽर्थः॥ इन्द्र जिससे भीत होकर युद्धसे विरत हो गये, हनूमान्‌जी उस रावणको देखनेसे कुछ समय तक परितुष्ट हुए ॥ ५३ ॥

उपारंसीच्च संपश्यन् वानरस्तं चिकीर्षितात् ।
रम्यं मेरुमिवाऽऽधूतकाननं श्वसनोर्मिभिः ॥ ५४ ॥

**अन्वयः**—वानरः श्वसनोर्मिभिः आधूतकाननं मेरुम् इव रम्यं तं संपश्यन् चिकीर्षितात् उपारंसीत् च ।

**व्याख्या**—वानरः = हनूमान्, श्वसनोर्मिभिः = मेरुपक्षे—वातसमूहैः, रावणपक्षे—श्वसिततरङ्गैः, आधूतकाननं = मेरुपक्षे—प्रचलितवनं, रावणपक्षे—प्रचलितमस्तकमुखं, तं = रावणं, संपश्यन् = विलोकयन्, चिकीर्षितात् = कर्तुमिष्टात्, सीताऽन्वेषणादिति भावः । उपारंसीच्च = निवृत्तश्च ।

॥व्युत्पत्तिः॥ आधूतकाननम्—ईषद् धूतम् आधूतं, "कुगतिप्रादयः" इति समासः । आधूतं काननं यस्य, तम् । रावणपक्षे—कानि च आननानि च काऽऽननं, "द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्" इति समाहारद्वन्द्वः । "मारुते वेधसि ब्रध्ने पुंसि कः, कं शिरोऽम्बुनोः ।" इत्यमरः । उपारंसीत्—उपपूर्वकाद्रमुधातोः "उपाच्च" इत्यधिकृत्य "विभाषाऽकर्मकात्" इति वैकल्पिकं परस्मैपदत्वम् ।

॥भाषाऽर्थः॥ हनूमान्‌जी वायुके समूहोंसे प्रचलित वनोंसे युक्त सुमेरु पर्वतके सदृश सुन्दर और हिले हुए मस्तक और मुखोंसे सम्पन्न रावणको देखते हुए सीताके अन्वेषणसे उपरत हुए ॥ ५४ ॥

**दृष्ट्वा दयितया साकं रहीभूतं दशाननम् ।**
**नाऽत्र सीतेत्युपारंस्त दुर्मना वायुसंभवः ॥ ५५ ॥**

**अन्वयः**—वायुसंभवः रहीभूतं दशाननं दयितया साकं दृष्ट्वा 'अत्र सीता न' इति दुर्मनाः ( सन् ) उपारंस्त ।

**व्याख्या**—वायुसंभवः = वातात्मजः, हनूमानित्यर्थः । रहीभूतं = विजनस्थमिति भावः । दशाननं = रावणं, दयितया = प्रियया, साकं = सह, स्थितमिति शेषः । दृष्ट्वा = विलोक्य, अत्र = स्थाने, सीता = मैथिली, न = न वर्तते, इति = एवं, विमृश्येति शेषः । दुर्मनाः = विमनाः सन् , उपारंस्त = निवर्तते स्म, रावणप्रासादादिति शेषः ।

*व्युत्पत्तिः* रहीभूतम्—अरहो रहो यथा संपद्यते तथा भूतो रहीभूतस्तम्, "अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च" इति च्विप्रत्ययः सलोपश्च । दयितया—"साकं" पदेन योगे "सहयुक्तेऽप्रधाने" इति तृतीया । उपारंस्त—"विभाषाऽकर्मकात्" इति परस्मैपदस्य वैकल्पिकत्वात्पक्षे आत्मनेपदम् ।

*भाषाऽर्थः* हनूमान्‌जी विजनस्थ रावणको प्रियाके साथ देखकर "यहां सीताजी नहीं हैं" ऐसा सोचकर विमना होकर वहांसे निकले ॥ ५५ ॥

**ततः प्राकारमारोहत् क्षपाटानविबोधयन् ।**
**नाऽयोधयत् समर्थोऽपि सीतादर्शनलालसः ॥ ५६ ॥**

**अन्वयः**—तत ( सः ) क्षपाटान् अविबोधयन् प्रकारम् आरोहत् ; समर्थोऽपि सीतादर्शनलालसः ( सन् ) न अयोधयत् ।

**व्याख्या**—ततः = अनन्तरं, ( सः = हनूमान् ), क्षपाटान् = राक्षसान् , अविबोधयन् = अचेतयन् , प्राकारं = वप्रम् , आरोहत् = आरूढवान् , समर्थोऽपि = शक्तोऽपि, सीतादर्शनलालसः = मैथिलीविलोकनोत्सुकः सन् , न अयोधयत् = न संग्रामितवान् , तानिति शेषः ।

*व्युत्पत्तिः* क्षपाटान्—क्षपायामटन्तीति क्षपाटास्तान् , क्षपोपपदपूर्वकात् "अट गतौ" इति धातोः पचाद्यच् । अविबोधयन्—न विबोधयतीति, "णिचश्च" इत्यात्मनेपदे प्राप्ते "बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः" इति परस्मैपदम् । लटः शत्रादेशः । अयोधयत्—णिजन्तात् "युध संप्रहारे" इति धातोः अणावकर्मकत्वाच्चित्तवत्कर्तृकत्वाच्च "अणावकर्मकाच्चित्तवत्कर्तृकात्" इति परस्मैपदम् ।

*भाषाऽर्थः* तब हनूमान्‌जी राक्षसोंको पता नहीं देते हुए प्राकारोंपर चढे, समर्थ होते हुए भी सीताजीके दर्शनमें उत्सुक होकर उन्होंने राक्षसोंको संग्राम नहीं कराया ॥ ५६ ॥

अवाद्वायुः शनैर्यस्यां लतां नर्तयमानवत् ।
नाऽऽयासयन्त सन्त्रस्ता ऋतवोऽन्योन्यसंपदः ॥ ६१ ॥

**अन्वयः**—यस्यां वायुः लतां नर्तयमानवत् शनैः अवात्, ऋतवः संत्रस्ताः ( सन्तः ) अन्योन्यसम्पदे न आयासयन्त ।

**व्याख्या**—यस्याम्=अशोकवनिकायां, वायुः = वातः, लतां=वल्लीं, नर्तयमानवत्=नृत्यं कारयन् इव, शनैः=मन्दम् , अवात्=वाति स्म, ऋतवः =वसन्तादयः, संत्रस्ताः=भीताः सन्तः, रावणादिति शेषः । अन्योन्यसंपदः = परस्परस्य विभूतीः, न आयासयन्त = न उपपीडयन्ति स्म, अशोकवनिकायां रावणप्रीतिसम्पादनार्थमृतुषट्कं यौगपद्येन स्वस्वपुष्पफलं प्रादर्शयदिति भावः ।

**व्युत्पत्तिः** नर्तयमानवत्—नर्तयत इति नर्तयमानः, "नृती गात्रविक्षेपे" इत्ययं धातुर्गात्रविक्षेपस्याऽपि चलनविशेषत्वाच्चलने वर्तते, ततश्च "निगरणचलनाऽर्थेभ्यश्च" इत्यनेन परस्मैपदं प्राप्तं ततश्च "न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः" इत्यनेन प्रतिषिद्धत्वादात्मनेपदम् । लटः शानच् । नर्तयमानेन तुल्यं, वतिप्रत्ययः । अवात्—"वा गतिगन्धनयोः" इति धातोर्लङ् । आयासयन्त—आङ्पूर्वकात् णिजन्तात् "यसु प्रयत्ने" इति धातोश्चित्तवत्कर्तृकत्वात् 'अणा'वित्यादिना प्राप्तस्य परस्मैपदस्य पूर्ववत् "ने"त्यादिना प्रतिषिद्धत्वादात्मनेपदम् । लङि रूपम् ।

**भाषाऽर्थः** जिस अशोकवनिकामें वायु लताको नृत्य कराते हुएके सदृश धीरे धीरे बहता था और वसन्त आदि ऋतु रावणसे त्रस्त होते हुए परस्परकी विभूतियोंको उपपीडित नहीं करते थे ॥ ६१ ॥

ज्योत्स्नाऽमृतं शशी यस्यां वापीर्विकसितोत्पलाः ।
अपाययत संपूर्णः सदा दशमुखाऽऽज्ञया ॥ ६२ ॥

**अन्वयः**—यस्यां दशमुखाऽऽज्ञया शशी सदा संपूर्णः ( सन् ) विकसितोत्पला वापी ज्योत्स्नाऽमृतम् अपाययत ।

**व्याख्या**—यस्याम्=अशोकवनिकायां, दशमुखाऽऽज्ञया=रावणादेशेन, शशी = चन्द्रः, सदा=सर्वदा, संपूर्णः=संपूरितः सन् , षोडशकलोपेत इति भावः । विकसितोत्पलाः=प्रफुल्लकुवलयाः, वापीः =दीर्घिकाः, ज्योत्स्नाऽमृतं=चन्द्रिकापीयूषम्, अपाययत=पायितवान् ।

**व्युत्पत्तिः** विकसितोत्पलाः—विकसितान्युत्पलानि यासु ता विकसितोत्पलास्ताः, "स्यादुत्पलं कुवलयम्" इत्यमरः। वापीः—पाधातोः प्रत्यवसानाऽर्थत्वात्तद्योगे "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ" इति कर्मत्वाद्वृद्धि-

तीया । ज्योत्स्नाऽमृतं—ज्योत्स्ना एव अमृतं ज्योत्स्नाऽमृतं, तत् । अपाययत—णिजन्तात् "पा पाने" इति धातोर्लङ् निगरणाऽर्थत्वात् निगरणचलनाऽर्थेभ्यश्च" इति परस्मैपदत्वे प्राप्ते "न"त्यादिसूत्रेण प्रतिषिद्धत्वात् "णिचश्च" इत्यनेन आत्मनेपदत्वम् ।

❀भाषाऽर्थः❀ जिस अशोकवनिकामें रावणकी आज्ञासे चन्द्रमा सदा षोडश कलाओंसे पूर्ण होते हुए विकसित कमलोंसे युक्त बावलियोंको चन्द्रिका ( चांदनी ) रूप अमृत पिलाता था ॥ ६२ ॥

**प्रादमयन्त पुष्पेषुं यस्यां बन्द्यः समाहृताः ।**
**परिमोह्यमाणाभी राक्षसीभिः समावृताः ॥ ६३ ॥**

**अन्वयः**—यस्यां समाहृताः परिमोह्यमाणाभिः राक्षसीभिः समावृता बन्द्यः पुष्पेषुं प्रादमयन्त ।

**व्याख्या**—यस्याम् = अशोकवनिकायां, समाहृताः = समानीताः, नानादिगन्तेभ्य इति शेषः । परिमोह्यमाणाभिः=व्यामोहयन्तीभिः, राक्षसीभिः = रक्षःस्त्रीभिः, समावृताः = परिवृताः, बन्द्यः = बन्दीकृताः स्त्रियः, पुष्पेषुं = कामं, प्रादमयन्त = शमितवत्यः, तन्मतस्याऽऽदरणादिति शेषः ।

❀व्युत्पत्तिः❀ परिमोह्यमाणाभिः—परिमोहयन्त इति परिमोह्यमाणास्ताभिः, परिपूर्वकात् णिजन्तात् "मुह वैचित्त्ये" इति धातोः "अणावकर्मकाच्चित्तवत्कर्तृकात्" इति प्राप्तस्य परस्मैपदस्य "न पे"त्यादिना प्रतिषिद्धत्वात् "णिचश्चे"त्यनेनाऽऽत्मनेपदम् । लटः शानच् । पुष्पेषुं—पुष्पाणि इषवो यस्य स पुष्पेषुस्तम् । प्रादमयन्त—प्रपूर्वकात् "दमु उपशमे" इति दैवादिकाद्धातोः पूर्ववदात्मनेपदम् । लङि रूपम् ।

❀भाषाऽर्थः❀ जिस अशोकवनिकामें मोह करनेवाली राक्षसियोंसे घिरी हुई और अनेक स्थानोंसे लाई गई बन्दी स्त्रियां कामको शोभित करती थीं ॥ ६३ ॥

**यस्यां वासयते सीतां केवलं स्म रिपुः स्मरात् ।**
**न त्वरोचयताऽऽत्मानं चतुरो बुद्धिमानपि ॥ ६४ ॥**

**अन्वयः**—रिपुः स्मरात् यस्यां सीतां केवलं वासयते स्म, चतुरो बुद्धिमान् अपि आत्मानं न तु अरोचयत ।

**व्याख्या**—रिपुः = शत्रुः, रावण इत्यर्थः । स्मरात् = कामाद्धेतोः, यस्याम् = अशोकवनिकायां, सीतां = मैथिलीं, केवलं = निष्फलमिति भावः । वासयते स्म = वासितवान्, चतुरः = निपुणः, योषिदाराधन इति शेषः । बुद्धिमान् अपि = सम्पत्तियुक्तोऽपि, आत्मानं = स्वं, न तु अरोचयत् = नैव उपरोचितवान् ।

ॐव्युत्पत्तिःॐ वासयते स्म—णिजन्तात् "वस निवासे" इति धातोः "अणावकर्मका"दित्यादिना प्राप्तस्यापि परस्मैपदस्य "न पे"त्यादिना प्रतिषेधे "णिचश्चे"-त्यात्मनेपदम्। "लट् स्मे" इति स्मयोगे भूते लट्। अरोचयत—"रुच दीप्तावभिप्रीतौ चे"ति णिजन्तात् धातोः पूर्ववदात्मनेपदम्। लङि रूपम्।

ॐभाषाऽर्थःॐ शत्रु रावणने कामके कारणसे जहां ( अशोकवनिका ) पर सीताको केवल टिकाया, चतुर और सम्पत्तिशाली होता हुआ भी वह अपनेको पसन्द नहीं करा सका ॥ ९४ ॥

**मन्दायमानगमनो हरितायत्तरूं कपिः।**
**द्रुमैः शकशकायद्भिर्मारुतेनाऽऽट सर्वतः ॥ ९५ ॥**

**अन्वयः**—मन्दायमानगमनः कपिः हरितायत्तरूं मारुतेन शकशकायद्भिः द्रुमैः ( ताम् ) सर्वतः आट।

**व्याख्या**—मन्दायमानगमनः = मन्दीभवद्गमनः, कपिः = हनूमान्, हरितायत्तरूं = हरिद्वर्णीभवद्वृक्षां, पुनः—मारुतेन = वायुना, शकशकायद्भिः = शकीभवद्भिः, द्रुमैः = वृक्षैः, उपलक्षितां, तामिति शेषः। अशोकवनिकां, सर्वतः = सर्वत्र, आट = विजहार।

ॐव्युत्पत्तिःॐ मन्दायमानगमनः—अमन्दं मन्दं भवति मन्दायमानं, "लोहितादिडाज्भ्यः क्यष्" इति लोहितादित्वात्क्यष्, तदन्ताल्लटः शानच्। मन्दायमानं गमनं यस्य सः। हरितायत्तरूम्—अहरिता हरिता भवन्तीति हरितायन्तः, लोहितादित्वात्क्यष्। "वा क्यषः" इति वैकल्पिकं परस्मैपदम्। लटः शत्रादेशः। हरितायन्तः तरवो यस्यां सा हरितायत्तरूस्ताम्, "अप्राणिजातेश्चाऽरज्ज्वादीनामुपसंख्यानम्" इत्यूङ्। शकशकायद्भिः—अशकाः शका भवन्तीति शकशकायन्तस्तैः, शकशब्दात् "अव्यक्ताऽनुकरणाद्द्व्यजवरार्धादनितौ डाच्" इति डाच्। तस्मिन्विषयभूते "डाचि विवक्षिते द्वे बहुलम्" इति द्वित्वम्। "नित्यमाम्रेडिते डाचीति वक्तव्यम्" इति पररूपत्वम्। ततश्च डाजन्तात् शकशकाशब्दात्क्यष्। पूर्ववद्वैकल्पिकं परस्मैपदम्।

ॐभाषाऽर्थःॐ गतिको मन्द करते हुए हनूमान्जीने हरे पेड़ोंवाली और शकशक-शब्द करनेवाले पेड़ोंसे उपलक्षित अशोकवनिकामें सर्वत्र विहार किया ॥ ९५ ॥

**अस्यदन्निन्दुमणयो व्यरुचन् कुमुदाऽऽकराः।**
**अलोठिषत वातेन प्रकीर्णाः स्तवकोच्चयाः ॥ ९६ ॥**

**अन्वयः**—( यत्र ) इन्दुमणयः अस्यदन्, कुमुदाऽऽकरा व्यरुचन्, स्तवकोच्चया वातेन प्रकीर्णाः ( सन्तः ) अलोठिषत।

**व्याख्या**—( यत्र = अशोकवनिकायाम् ), इन्दुमणयः=चन्द्रकान्तमणयः, अस्य-

दन् = प्रस्नुताः, कुमुदाऽऽकराः = कैरवसमूहाः, व्यरुचन् = विराजितवन्तः, स्तबकोच्चयाः = गुच्छराशयः, वातेन = वायुना, प्रकीर्णाः = विक्षिप्ताः सन्तः, अलोठिषत = लोठन्ते स्म ।

॥व्युत्पत्तिः॥ अस्यदन्—"स्यन्दू प्रस्रवण" इति धातोः "द्युद्भ्यो लुङि" इति वैकल्पिकं परस्मैपदत्वम् । लुङि रूपम्॥ "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इति अङ् । "अनिदितां हल उपधायाः क्ङिति" इति नलोपः । व्यरुचन्—विपूर्वात् "रुच दीप्तावभिप्रीतौ च" इति धातोर्लुङ्, पूर्ववत्प्रक्रिया ज्ञेया । अलोठिषत—"लुठ प्रतिघाते" इति धातोर्लुङ् । "द्युद्भ्यो लुङि" इति परस्मैपदस्य वैकल्पिकत्वात्पक्षे तदभावः । अनुदात्तेत्वादात्मनेपदम् ।

॥भाषाऽर्थः॥ जहांपर चन्द्रकान्त नामकी मणियां पिघलती थीं, कुमुदोंके समूह शोभित होते थे और गुच्छोंकी राशियां बिखरती हुई टक्कर मारती थीं ॥ ६६ ॥

सीताऽन्तिके विवृत्सन्तं वर्त्स्यत्सिद्धिं प्लवङ्गमम् ।
पतत्त्रिणः शुभा मन्द्रमानुवानास्त्वजिह्लदन् ॥ ६७ ॥

अन्वयः—मन्द्रम् आनुवानाः शुभाः पतत्त्रिणः सीताऽन्तिके विवृत्सन्तं वर्त्स्यत्सिद्धिं प्लवङ्गमम् अजिह्लदन् ।

व्याख्या—मन्द्रं = गम्भीरम्, आनुवानाः = वाश्यमानाः, शुभाः = प्रशस्ताः, पतत्त्रिणः = पक्षिणः, सीताऽन्तिके = मैथिलीसमीपे, विवृत्सन्तं = वर्तितुमिच्छन्तं, वर्त्स्यत्सिद्धिं = भविष्यत्साफल्यं, प्लवङ्गमं = हनूमन्तम्, अजिह्लदन् = सुखयन्ति स्म ।

॥व्युत्पत्तिः॥ आनुवानाः—आनुवते इति, आङ्पूर्वकात् "णु स्तुतौ" इति आदादिकस्य धातोः "आङि नुप्रच्छ्योः" इत्यात्मनेपदम् । लटः शानच् । विवृत्सन्तं—सन्नन्तात् "वृतु वर्तने" इति धातोः "वृद्भ्यः स्यसनोः" इति वैकल्पिकं परस्मैपदम् । लटः शत्रादेशः । वर्त्स्यत्सिद्धिं—वर्त्स्यतीति वर्त्स्यन्ती, पूर्वसूत्रेणैव लृटः स्ये परस्मैपदम् "न वृद्भ्यश्चतुर्भ्यः" इतीडागमनिषेधः । वर्त्स्यन्ती सिद्धिर्यस्य स वर्त्स्यत्सिद्धिस्तम् । अजिह्लदन्—"ह्लादी सुखे च" इति धातोर्णिचि लुङि चङि रूपम् ।

॥भाषाऽर्थः॥ गम्भीर शब्द करती हुई उत्तम चिड़ियोंने सीताजीके समीपमें रहनेकी इच्छा करनेवाले तथा भविष्यमें सफलता प्राप्त करनेवाले हनूमान्‌जीको सुखी किया ॥ ६७ ॥

वर्तिष्यमाणमात्मानं सीता पत्युरिवाऽन्तिके ।
उदपश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः ॥ ६८ ॥

अन्वयः—सीता तदा तथ्यैः इष्टदर्शनैः निमित्तैः आत्मानं पत्युः अन्तिके वर्तिष्यमाणम् इव उदपश्यत् ।

व्याख्या—सीता = मैथिली, तदा = तस्मिन् काले, तथ्यैः=सत्यैः अविसंवादिभिरित्यर्थः । इष्टदर्शनैः = अभीष्टाऽर्थप्रकाशकैः, निमित्तैः=वामनेत्रस्पन्दनादिभिः शकुनैः । आत्मानं=स्वं, पत्युः = भर्तुः, रामस्येत्यर्थः । अन्तिके = समीपे, वर्तिष्यमाणम् इव=वर्तनं करिष्यन्तम् इव, उदपश्यत्=उत्प्रैक्षत ।

※व्युत्पत्तिः※ इष्टदर्शनैः—दर्शयन्तीति दर्शनानि, णिजन्तात् दृशधातोः "कृत्यल्युटो बहुलम्" इति बहुलग्रहणसामर्थ्यात्कर्तरि ल्युट । इष्टस्य दर्शनानि तैः । वर्तिष्यमाणं—वर्तिष्यते इति वर्तिष्यमाणस्तम्, "वृतु वर्तने" इति धातोः "लृटः सद्वा" इति लृटः शानच् । "वृद्भ्यः स्यसनोः" इति परस्मैपदस्य वैकल्पिकत्वात्पक्षे तदभावः ।

※भाषाऽर्थः※ सीताजीने उस समय अविसंवादी, अभीष्ट विषयको प्रकाशित करनेवाले बांईं आंख फड़कना आदि शुभ शकुनोंसे अपनेको पतिके समीप रहनेवालीकी तरह देखा ॥ ६८ ॥

'निरवर्त्स्यत्र न चेद्वार्ता सीताया वितथैव नः ।
अकल्प्स्यदुद्यतिः सर्वा' हनूमानित्यचिन्तयत् ॥ ६९ ॥

अन्वयः—हनूमान् "सीताया वार्ता न निरवर्त्स्यत् चेत् नः सर्वा उद्यतिः वितथा एव अकल्प्स्यत्" इति अचिन्तयत् ।

व्याख्या—हनूमान् = आञ्जनेयः, सीतायाः = मैथिल्याः, वार्ता = प्रवृत्तिः, न निरवर्त्स्यत् चेत् = निर्वृतिं न आयास्यत् यदि, नः = अस्माकं, सर्वा = सकला, उद्यतिः=उद्यमः, समुद्रलङ्घनादिक इत्यर्थः । वितथा एव=निष्फला एव, अकल्प्स्यत् = अभविष्यत्, इति=एवम्, अचिन्तयत्=चिन्तितवान् ।

※व्युत्पत्तिः※ निरवर्त्स्यत्—निरुपसर्गपूर्वकात् वृतुधातोः "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" इति लृङ् । "वृद्भ्यः स्यसनोः" इति विभाषा परस्मैपदम् । उद्यतिः=उद्यमनम् उद्यतिः, उत्पूर्वकाद्यमेः "स्त्रियां क्तिन्" इति क्तिन् । "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इति अनुनासिकलोपः । अकल्प्स्यत्—"कृपू सामर्थ्ये" इति धातोर्लृङ् । "लुटि च क्लृपः" इति चकारात्स्यसनोरपि भवति वैकल्पिकं परस्मैपदत्वम् ।

※भाषाऽर्थः※ हनूमान्‌जीने "सीताकी वार्ता सम्पादित नहीं होगी तो हमारा समुद्रलङ्घन आदि सब उद्यम निष्फल हो जायगा" ऐसा विचार किया ॥ ६९ ॥

अथ कारकाऽधिकारः । विशेषकम् ७०–७२

वृक्षाद् वृक्षं परिक्रामन् रावणाद् बिभ्यतीं भृशम् ।
शत्रोस्त्राणमपश्यन्तीमदृश्यो जनकाऽऽत्मजाम् ॥ ७० ॥

**अन्वयः**—रावणात् भृशं बिभ्यतीं शत्रोः त्राणम् अपश्यन्तीं जनकाऽऽत्मजां वृक्षात् वृक्षं परिक्रामन् अदृश्यः ( कपिकुञ्जरः अपश्यत् )।

**व्याख्या**—रावणात् = दशाननात्, भृशम् = अत्यर्थं, बिभ्यतीं=त्रस्यन्तीं, शत्रोः=रिपोः, त्राणं = रक्षणं, मुक्तिरूपमिति भावः, अपश्यन्तीम्=अनीक्षमाणां, जनकात्मजां = वैदेहीं, सीतामित्यर्थः। वृक्षात् = महीरुहात्, वृक्षं = महीरुहान्तरं, परिक्रामन् = गच्छन्, अदृश्यः = प्रच्छन्नो भूत्वा, कपिकुञ्जरोऽपश्यत् इति वक्ष्यमाणेन सम्बन्धः।

※व्युत्पत्तिः※ रावणात्—"भीत्रार्थानां भयहेतुः" इत्यपादानत्वात् "अपादाने पञ्चमी" इति। पञ्चमी। शत्रोः—पूर्वसूत्रेणैवाऽपादानसंज्ञा पञ्चमी च। वृक्षात्—"ध्रुवमपायेऽपादानम्" इत्यपादानत्वम्। अदृश्यः—द्रष्टुं योग्यो दृश्यः, "दृशिर् प्रेक्षणे" इति धातोः "ऋदुपधाच्चाऽक्लृपिचृतेः" इति क्यप्। न दृश्यः।

※भाषाऽर्थः※ रावणसे बहुत ही डरती हुई शत्रुसे रक्षा नहीं देखती हुई सीताजी को एक पेड़से दूसरे पेड़को जाते हुए हनूमान्‌जीने प्रच्छन्न होकर देखा ॥ ७० ॥

**तां पराजयमानां स प्रीते रक्ष्यां दशाऽऽननात्।**
**अन्तर्दधानां रक्षोभ्यो मलिनां म्लानमूर्धजाम् ॥ ७१ ॥**

**अन्वयः**—प्रीतेः पराजयमानां दशाऽऽननात् रक्ष्यां रक्षोभ्यः अन्तर्दधानां मलिनां म्लानमूर्धजां ताम् ( कपिकुञ्जरोऽपश्यत् )।

**व्याख्या**—प्रीतेः = प्रणयात्, रावणसम्बन्धिन इति शेषः। पराजयमानां = विमुखीभवन्तीं, दशाऽऽननात् = रावणात्, रक्ष्यां = रक्षणीयां, रक्षोभ्यः=राक्षसेभ्यः, अन्तर्दधानां = मा मां रक्षांसि द्राक्षुरिति निलीयमानामित्यर्थः। मलिनां = मलीमसां, संस्कारविरहादिति भावः। म्लानमूर्धजां = मलिनकेशां, बद्धवेणीत्वादिति भावः। तां=सीतां, कपिकुञ्जरोऽपश्यत् इति वक्ष्यमाणेन सम्बन्धः।

※व्युत्पत्तिः※ प्रीतेः—"पराजयमानाम्" इति पदेन योगे "पराजेरसोढः" इत्यपादानत्वम्। अत्राऽसोढोऽर्थः प्रीतिः। पराजयमानां—पराजयते इति पराजयमाना, तां "विपराभ्यां जेः" इत्यात्मनेपदम्। लटः शानच्। दशाऽऽननात्—"रक्ष्याम्" इति पदेन योगे "भीत्रार्थानां भयहेतुः" इत्यपादानत्वम्। "वारणार्थानामीप्सितः" इत्यपादानत्वम्, प्रवृत्तिविघातलक्षणया रक्षणक्रियया आत्मसम्बन्धिन्या दशाननस्य व्याप्तुमभिप्रेतत्वादिति जयमङ्गलः। रक्षोभ्यः—"अन्तर्दधानाम्" इति पदेन योगे "अन्तर्धौ येनाऽदर्शनमिच्छति" इत्यपादानसंज्ञा। म्लानमूर्धजां—मूर्ध्नि जायन्ते इति मूर्धजाः, "सप्तम्यां जनेर्डः" इति डः। म्लाना मूर्धजा यस्याः सा म्लानमूर्धजा, ताम्।

※भाषाऽर्थः※ रावणकी प्रीतिसे विमुख होती हुई, रावणसे रक्षा करनेके योग्य,

राक्षसोंसे अन्तर्हित होती हुई, मलिन और मलिन केशोंसे युक्त सीताजीको हनूमान्‌ने देखा ॥ ७१ ॥

**रामादधीतसंदेशो वायोर्जातश्च्युतस्मिताम् ।**
**प्रभवन्तीमिवादित्यादपश्यत् कपिकुञ्जरः ॥ ७२ ॥**

**अन्वयः**—रामात् अधीतसन्देशो वायोः जातः कपिकुञ्जरः च्युतस्मिताम् आदित्यात् प्रभवन्तीम् इव ( ताम् ) अपश्यत् ।

**व्याख्या**—रामात् = रामचन्द्रात् आख्यातुः, अधीतसन्देशः = गृहीतवाचिकः, भक्त्येति शेषः । वायोः=वातात्, जातः = उत्पन्नः, कपिकुञ्जरः=वानरश्रेष्ठः, हनूमानित्यर्थः, च्युतस्मिताम्=अस्तमितहासाम्, शोकाऽऽक्रान्तत्वादिति भावः । आदित्यात्= सूर्यात्, प्रभवन्तीम् इव=प्रादुर्भवन्तीम् इव, तेजसेति शेषः । ( तां = सीताम् ) अपश्यत् = व्यलोकयत् ।

**ॐव्युत्पत्तिःॐ** रामात्—"अधीतसन्देश" इति योगे "आख्यातोपयोगे" इति अपादानत्वम् । भक्तिपूर्वकत्वात्सन्देशस्य विद्यावद्ग्रहणम् । वायोः—"जात" इति योगे "जनिकर्तुः प्रकृतिः" इत्यपादानत्वम् । जनेः ( जन्मनः ) कर्तुर्हनूमतो वायुः प्रकृतिः ( कारणम् ) । कपिकुञ्जरः—कपिः कुञ्जर इव, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति समासः । आदित्यात्—"प्रभवन्तीम्" इति पदेन योगे "भुवः प्रभवः" इति भवनक्रियायाः कर्तृभूताया सीतायाः प्रथमत उपलभ्यमानत्वात्, तत्प्रभवस्य आदित्यस्य अपादानत्वम् ।

**ॐभाषाऽर्थःॐ** रामचन्द्रजीसे सन्देशको लेनेवाले वायुपुत्र कपिश्रेष्ठ हनूमान्‌जीने शोकके कारण हास्यरहित और तेजस्विनी होनेसे सूर्यसे प्रादुर्भूत होती हुई की सदृश सीताजीको देखा ॥ ७२ ॥

अथ सम्प्रदानकारकभेदाः—

**रोचमानः कुदृष्टिभ्यो रक्षोभ्यः प्रत्तवान् श्रियम् ।**
**श्लाघमानः परस्त्रीभ्यस्तत्राऽऽगाद्राक्षसाऽधिपः ॥ ७३ ॥**

**अन्वयः**—कुदृष्टिभ्यो रोचमानो रक्षोभ्यः श्रियं प्रत्तवान् परस्त्रीभ्यः श्लाघमानो राक्षसाधिपः तत्र आगात् ।

**व्याख्या**—कुदृष्टिभ्यः = कुबुद्धिभ्यः, रोचमानः = रुचिकरः, न तु साधुभ्य इति भावः । रक्षोभ्यः = राक्षसेभ्यः, श्रियं=लक्ष्मीं, प्रत्तवान्=प्रकर्षेण दत्तवान्, परस्त्रीभ्यः = अन्यनारीभ्यः, श्लाघमानः=कत्थमानः, कामुकतया परस्त्रीः स्तुवान इति भावः । एतादृशो राक्षसाऽधिपः=रावणः, तत्र=तस्याम्, अशोकवनिकायामित्यर्थः । आगात्= आयातः ।

❀व्युत्पत्तिः❀ कुदृष्टिभ्यः—दर्शनं दृष्टिः, "स्त्रियां क्तिन्" इति क्तिन्, अत्र दृशिर्ज्ञानसामान्यवचनः । कुत्सिता दृष्टिर्येषां ते कुदृष्टयस्तेभ्यः "रोचमान" इति पदेन योगे प्रीयमाणत्वात् "रुच्यर्थानां प्रीयमाण" इति सम्प्रदानत्वं, "चतुर्थी सम्प्रदाने" इति चतुर्थी । रोचमानः—रोचत इति, "रुच दीप्तावभिप्रीतौ च" इति धातोर्लटः शानच् । रक्षोभ्यः—"कर्मणा यमभिप्रैति स सम्प्रदानम्" इति सम्प्रदानत्वम् । प्रत्तवान्—प्रपूर्वात् "डुदाञ् दाने" इति धातोः क्तवतुप्रत्ययः, "अच उपसर्गात्तः" इति दकारस्य तकारः । परस्त्रीभ्यः—"श्लाघमान" इति पदेन योगे "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति ज्ञीप्स्यमानत्वात् ( बोधयितुमिष्टत्वात् ) सम्प्रदानत्वम् । आगात्—आङ्पूर्वात् "इण् गतौ" इति धातोर्लुङ् । "इणो गा लुङि" इति गादेशः । "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुक् ।

❀भाषाऽर्थः❀ कुबुद्धियोंको रुचिकर राक्षसोंको सम्पत्ति देनेवाला और परस्त्रियों की स्तुति करनेवाला राक्षसेश्वर रावण वहां ( अशोकवनिकामें ) आया ॥ ७३ ॥

**अशप्त निह्नुवानोऽसौ सीतायै स्मरमोहितः ।**
**धारयन्निव चैतस्यै वसूनि प्रत्यपद्यत ॥ ७४ ॥**

**अन्वयः**—स्मरमोहितः असौ सीतायै निह्नुवानः ( सन् ) अशप्त, एतस्यै धारयन् इव वसूनि च प्रत्यपद्यत ।

**व्याख्या**—स्मरमोहितः = कामाऽन्धः, असौ = रावणः, सीतायै = मैथिल्यै, निह्नुवानः = स्वदौर्जन्यमपह्नुवानः सन्, अशप्त=न कदाचिदपरात्स्यामीति शपथमकार्षीत्, एतस्यै=स्वामिनीभूतायै सीतायै, धारयन् इव=गृहीतवसुः इव, वसूनि च= सर्वस्वानि च, प्रत्यपद्यत=अङ्गीकृतवान् ।

❀व्युत्पत्तिः❀ सीतायै—"निह्नुवान" इति पदेन योगे "श्लाघह्नुङ्स्थाशपां०" इति ज्ञीप्स्यमानत्वात्संप्रदानत्वम् । निह्नुवानः—निह्नुत इति, निपूर्वकात् "ह्नुङ् अपनयने" इति धातोर्लटः शानच् । "अपलापस्तु निह्नव" इत्यमरः । अशप्त—"शप आक्रोशे" इति धातोर्लुङ् । "झलो झलि" इति सिचो लोपः । "अशप्यत" इति मल्लिनाथसम्मतः पाठः । तत्र पूर्वार्थे वर्तमानाद्दैवादिकाद्धातोर्लङ् । एतस्यै—"धारयन्" इति पदेन योगे "धारेरुत्तमर्ण" इति सम्प्रदानत्वम् । वसूनि—"रिक्थमृक्थं धनं वसु" इत्यमरः । प्रत्यपद्यत—प्रतिपूर्वकात् "पद गतौ" इति धातोर्लङ् ।

❀भाषाऽर्थः❀ काममोहित रावणने सीतासे अपनी दुर्जनताको छिपाकर "मैं कभी अपराध नहीं करूंगा" ऐसा शपथ खाया और सीताजीको ऋणीके सदृश होकर सर्वस्व देना स्वीकार किया ॥ ७४ ॥

**तस्यै स्पृहयमाणोऽसौ बहु प्रियमभाषत ।**
**सानुनीतिश्च सीतायै नाऽक्रुध्यन्नाप्यसूयत ॥ ७५ ॥**

**अन्वयः**—असौ तस्यै स्पृहयमाणो बहु प्रियम् अभाषत, साऽनुनीतिश्च ( सन् ) सीतायै न अक्रुध्यत्, नाऽपि असूयत ।

**व्याख्या**—असौ = रावणः, तस्यै = सीतायै, स्पृहयमाणः = ईप्सन्, बहु = अधिकं, प्रियं = हृद्यं, वक्ष्यमाणप्रकारमित्यर्थः । अभाषत = अब्रवीत्, साऽनुनीतिश्च = अनुनययुक्तश्च सन्, सीतायै = मैथिल्यै, न अक्रुध्यत् = अतिप्रातिकूल्येऽपि न अकुप्यत्, नाऽपि = नैव, असूयत = असूयां कृतवान् ।

***व्युत्पत्तिः*** तस्यै—उत्तरपदयोगे "स्पृहेरीप्सित" इति सम्प्रदानत्वम् । स्पृहयमाणः—स्पृहयते इति, "स्पृह ईप्सायाम्" इति धातोर्लटः शानच् । साऽनुनीतिः—अनुनीत्या सहितः। सीतायै—"अक्रुध्यत्" "असूयत" च इति योगे "क्रुधद्रुहेर्ष्यासूयाऽर्थानां यं प्रति कोपः" इति सम्प्रदानत्वम् । अक्रुध्यत्—"क्रुध क्रोधे" इति धातोर्लङ् । असूयत—"षूङ् प्राणिप्रसवे असूयायां च" इति धातोर्लङ् ।

***भाषाऽर्थः*** रावणने सीताजीको पानेकी इच्छाकर बहुत प्रिय भाषण किया, और वह अनुनय करता हुआ सीताजीसे कुपित नहीं हुआ, न तो उसने असूया ही की ॥

**संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे ।**
**ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम् ॥ ७६ ॥**

**अन्वयः**—हे मृगेक्षणे ! त्वं दिदृक्षुं मां मृषा किं संक्रुध्यसि ? परस्त्रीभ्य ईक्षितव्यम् अयं रक्षसां स्वधर्मः ।

**व्याख्या**—हे मृगेक्षणे = हे हरिणलोचने, त्वं, दिदृक्षुं = द्रष्टुमिच्छुं, शुभाऽशुभे इति शेषः । एतादृशं मां = रावणं, मृषा = मिथ्या व्यर्थमिति भावः । किं = किमर्थं, संक्रुध्यसि = संकुप्यसि । परस्त्रीभ्यः ईक्षितव्यं = विविधप्रश्नपूर्वकं तद्दर्शनम्, अयं = तद्विलोकनव्यापारः, रक्षसां=राक्षसानां, स्वधर्मः = आत्मधर्मः, जातिधर्म इत्यर्थः, अतो नाऽयं दोष इति भावः । श्लोकोऽयं वाल्मीकिरामायणस्य—

"स्वधर्मो रक्षसां भीरु सर्वथैव न संशयः । गमनं वा परस्त्रीणां हरणं संप्रमथ्य वा ॥"
इति ( सुन्दरकाण्डः २०–५ ) एतच्छ्लोकमूलकः ।

***व्युत्पत्तिः*** मृगेक्षणे—मृगस्येवेक्षणे यस्याः सा मृगेक्षणा, तत्सम्बुद्धौ । मां—"संक्रुध्यसि" इति क्रुधधातोः प्रयोगे "क्रुधे"त्यादिना संप्रदानत्वे प्राप्ते "क्रुधद्रुहोरुपसृष्टयोः कर्म" इति कर्मत्वं, "कर्मणि द्वितीया" इति द्वितीया । परस्त्रीभ्यः—"ईक्षितव्यम्" इति पदेन योगे "राधीक्ष्योर्यस्य विप्रश्नः" इति सम्प्रदानत्वम् । अयं—विधेयस्य स्वधर्मस्य प्राधान्यात्पुंल्लिङ्ग निर्देशः ।

ॐभाषाऽर्थःॐ हे हरिणलोचने सीते ! तुम शुभ अशुभ देखनेकी इच्छा करनेवाले मेरे ऊपर व्यर्थ क्यों क्रुद्ध होती हो ? विविध प्रश्न करके परस्त्रियोंको देखना यह राक्षसों का स्वधर्म है ॥ ७६ ॥

साम्प्रतमात्मोत्कर्षं प्रतिपादयति—

**शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु ! नोत्तमाः ।**
**गृणद्भ्योऽनुगृणन्त्यन्येऽकृताऽर्था नैव मद्विधाः ॥ ७७ ॥**

**अन्वयः**—हे भीरु ! मध्यमाः शृण्वद्भ्यः प्रतिशृण्वन्ति उत्तमा न । अकृताऽर्था अन्ये गृणद्भ्यः अनुगृणन्ति मद्विधा न एव ( अनुगृणन्ति ) ।

**व्याख्या**—हे भीरु = हे कातरे ! मध्यमाः = प्रथमेतरे प्रभवः, शृण्वद्भ्यः = श्रुतशालिभ्यः, इदं कार्यमिदमकार्यमिति हिताऽहितमुपदिशद्भ्य इत्यर्थः । प्रतिशृण्वन्ति = अङ्गीकुर्वन्ति, तथैव कुर्म इति प्रतिज्ञां कुर्वन्तीत्यर्थः । उत्तमाः = श्रेष्ठाः, प्रभवो मादृशा इति भावः, न = न प्रतिशृण्वन्ति, सर्वतन्त्रस्वतन्त्रत्वात् न परोपदेशाऽपेक्षा इति भावः । एवं च—अकृताऽर्थाः = अकृतकृत्याः, अन्ये = अपरे, मद्भिन्ना इति भावः । गृणद्भ्यः = शंसद्भ्यः, स्तावकेभ्य इत्यर्थः । अनुगृणन्ति = प्रोत्साहयन्ति, दानेच्छासूचकालापैरिति शेषः । "कृतार्था" इति मल्लिनाथसम्मतः पाठः स "मद्विधा" इत्यस्य विशेषणत्वेन बोद्धव्यः । मद्विधाः = मादृशाः, उत्तमा इति शेषः । नैव = नैव अनुगृणन्ति, स्तुतिं विनैव अर्थिभ्यः प्रयच्छन्तीति भावः ।

ॐव्युत्पत्तिःॐ भीरु—"ह्रस्वस्य गुणः" इति संज्ञापूर्वकस्य विधेरनित्यत्वान्न गुणः इति मल्लिनाथः । शृण्वद्भ्यः—"प्रतिशृण्वन्ति" इति पदेन योगे "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" इति शृण्वतां सम्प्रदानत्वम् । गृणद्भ्यः—गृणन्तीति गृणन्तस्तेभ्यः, "गॄ शब्दे" इति धातोर्लटः शत्रादेशः । "अनुप्रतिगृणश्च" इति पूर्वस्य शंसनकर्तुः सम्प्रदानत्वम् । मद्विधाः—ममेव विधा ( प्रकारः ) येषां ते ।

ॐभाषाऽर्थःॐ हे भीरु ! मध्यम श्रेणीके प्रभुलोग शास्त्रज्ञोंके उपदेशको अङ्गीकार करते हैं, परन्तु उत्तम श्रेणीके प्रभुलोग नहीं । अकृताऽर्थ दूसरे प्रभुलोग स्तुति करनेवालोंको देनेकी इच्छाको प्रकाशित करनेवाले भाषणोंसे प्रोत्साहित करते हैं, परन्तु मेरे ऐसे प्रभुलोग नहीं ( स्तुतिके विना ही याचकोंको देते हैं ) ॥ ७७ ॥

**इच्छ स्नेहेन दीव्यन्तीं विषयान् भुवनेश्वरम् ।**
**संभोगाय परिक्रीतः कर्तास्मि तव नाऽप्रियम् ॥ ७८ ॥**

**अन्वयः**—विषयान् दीव्यन्ती स्नेहेन भुवनेश्वरम् इच्छ, संभोगाय परिक्रीतः ( अहम् ) तव अप्रियं न कर्तास्मि ।

**व्याख्या**—विषयान् = इन्द्रियाऽर्थान् , स्रक्चन्दनादिभिरिति भावः । दीव्यन्ती = क्रीडन्ती, त्वमति शेषः । स्नेहेन = प्रणयेन, भुवनेश्वरं = लोकेशं, मामित्यर्थः। इच्छ = अङ्गीकुरु । संभोगाय = विषयोपभोगेनेति भावः । परिक्रीतः = नियतकालं त्वया सेवाऽर्थं स्वीकृतः, अहमिति शेषः । तव = भवत्याः, अप्रियम् = अनभीष्टं, न कर्तास्मि = न करिष्यामि ।

**ॐव्युत्पत्तिःॐ** विषयान्—"दीव्यन्ती"ति पदेन योगे "दिवः कर्म च" इति करणसंज्ञाऽपवादात्कर्मसंज्ञा वैकल्पिकी । स्नेहेन—"साधकतमं करणम्" इति करणसंज्ञा, "कर्तृकरणयोस्तृतीया" इति तृतीया । संभोगाय—"परिक्रीत" इति पदेन योगे "परिक्रयणे संप्रदानमन्यतरस्याम्" इति परिक्रयणकरणस्य संभोगस्य वैकल्पिकं संप्रदानत्वम् । कर्तास्मि—कृधातोर्लुटि मिपि रूपम् ।

**ॐभाषाऽर्थःॐ** हे सीते ! माला चन्दन आदि विषयोंसे क्रीडा करती हुई स्नेहसे लोकेश्वर मुझे अङ्गीकार करो, विषयोपभोगसे नियतकालको तुमसे सेवाके लिए स्वीकृत होकर मैं तुम्हारा अप्रिय नहीं करूंगा ॥ ७८ ॥

**आस्स्व साकं मया सौधे, माऽधिष्ठा निर्जनं वनम् ।**
**माऽधिवात्सीर्भुवं, शय्यामधिशेष्व स्मरोत्सुका ॥ ७९ ॥**

**अन्वयः**—( हे सीते ! ) मया साकं सौधे आस्स्व, निर्जनं वनं मा अधिष्ठाः, भुवं मा अधिवात्सीः, स्मरोत्सुका ( सती ) शय्याम् अधिशेष्व ।

**व्याख्या**—( हे सीते ! ) मया = रावणेन, साकं = सह, सौधे = राजसदने, आस्स्व = तिष्ठ, निर्जनं = जनरहितं, वनं = काननं, मा अधिष्ठाः = न अधितिष्ठ, भुवं = भूमिं, मा अधिवात्सीः = न अधिवस, स्मरोत्सुका = कामाऽर्थिनी सती, शय्यां = शयनीयम् , अधिशेष्व = अधिशयीथाः, मदीयं मनोरथं पूरयेति भावः ।

**ॐव्युत्पत्तिःॐ** मया—सहाऽर्थेन "साकम्"इति पदेन योगे "सहयुक्तेऽप्रधाने"इति तृतीया । साकं—"सार्धं तु साकं सत्रा समं सह" इत्यमरः । सौधे—"आधारोऽधिकरणम्" इति सौधस्य अधिकरणत्वम्, "सप्तम्यधिकरणे च" इति सप्तमी । "सौधोऽस्त्री राजसदनम्" इत्यमरः । आस्स्व—"आस उपवेशने" इति धातोर्लोट् । "सवाभ्यां वाऽमौ" इति वभावः । वनम्—"अधिष्ठा" इति पदेन योगे "अधिशीङ्स्थाऽऽसां कर्म" इति आधारस्य वनस्य कर्मत्वम् । "कर्मणि द्वितीया" इति द्वितीया । मा अधिष्ठाः—अधिपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोः माङि उपपदे 'माङि लुङ्" इति लुङ् । "न माङ्योगे" इत्यडभावः । "गातिस्थाघुपे"त्यादिना सिचो लुक् । भुवम्—"अधिवात्सीः" इति पदेन योगे "उपान्वध्याङ्वसः" इति आधारभूताया भुवः कर्मत्वम् । मा अधिवात्सीः—अधिपूर्वकात् "वस निवासे" इति धातोः पूर्वव-

न्लुङ् । पूर्ववदडभावः । सिचि "वदव्रजहलन्तस्याऽचः" इति वृद्धिः । "सः स्यार्द्धधातुके" इति तत्वम् । स्मरोत्सुका—स्मरेण स्मरे वा उत्सुका, "प्रसितोत्सुकाभ्यां तृतीया च" इति तृतीया सप्तमी वा, ततः समासः । शय्याम्—"अधिशेष्व" इति पदेन योगे "अधिशीङ्स्थाऽऽसां कर्मे"ति आधारस्य कर्मत्वम् । अधिशेष्व—शीङ्धातोर्लोट् ।

ॐभाषाऽर्थःॐ हे सीते ! मेरे साथ राजसदनमें रहो, निर्जन वनमें मत रहो; जमीनमें मत बैठो, कामार्थिनी होकर शय्यापर लेटो ॥ ७९ ॥

**अभिन्यविक्षथास्त्वं मे यथैवाऽव्याहता मनः ।**
**तवाऽप्यध्यावसन्तं मां मा रौत्सीर्हृदयं तथा ॥ ८० ॥**

**अन्वयः**—( हे सीते ! ) यथैव त्वं मे मनः अव्याहता ( सती ) अभिन्यविक्षथाः, तथा तव हृदयम् अध्यावसन्तं मां मा रौत्सीः ।

**व्याख्या**—( हे सीते ! ) यथैव = येन प्रकारेणैव, त्वं, मे = मम, मनः = हृदयम्, अव्याहता = अनिवारिता सती, "अव्याहतम्" इति पाठे अनिवारितं यथा तथेति क्रियाविशेषणम् । अभिन्यविक्षथाः = अभिनिविष्टाऽसि, तथा = तेन प्रकारेण, तव = भवत्याः, हृदयं = हृत्, अध्यावसन्तम् = अधिवासं कुर्वन्तं, मां = रावणं, मा रौत्सीः = नो निवारय, यथाऽहं त्वय्यनुरक्तस्तथा त्वमपि मय्यनुरक्ता भवेति भावः ।

ॐव्युत्पत्तिःॐ मनः—"अभिन्यविक्षथाः" इति पदेन योगे "अभिनिविशश्च" इत्याधारस्य मनसः कर्मत्वम् । अभिन्यविक्षथाः—अभिनिपूर्वात् "विश प्रवेशने" इति धातोः "नेर्विशः" इत्यात्मनेपदम् । थासि "शल इगुपधादनिटः क्सः" इति क्सः । हृदयम्—"अध्यावसन्तम्" इति पदेन योगे "उपान्वध्याङ्वसः" इति आधारस्य कर्मत्वम् । अध्यावसन्तम्—अध्यावसतीति अध्यावसन्, तम्, लटः शत्रादेशः । मा रौत्सीः—माङि उपपदे "रुधिर् आवरणे" इति धातोः "माङि लुङ्" इति लुङ् । अडभावः । लुङि सिपि सिचि "वदव्रजे"त्यादिना वृद्धिः ।

ॐभाषाऽर्थःॐ हे सीते ! जिस तरह तुम मेरे हृदयमें अनिवारित होकर घुस गई हो, उस तरह तुम्हारे हृदयमें रहते हुए मुझे मत रोको ॥ ८० ॥

**माऽवमंस्था नमस्यन्तमकार्यज्ञे ! जगत्पतिम् ।**
**संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का ? ॥ ८१ ॥**

**अन्वयः**—हे अकार्यज्ञे ! नमस्यन्तं जगत्पतिं ( माम् ) मा अवमंस्थाः, मयि संदृष्टे अधन्यं काकुत्स्थं का कामयेत ?

**व्याख्या**—हे अकार्यज्ञे = हे कार्यज्ञानरहिते ! नमस्यन्तं = प्रणमन्तं, जगत्पतिं = लोकनाथं, ( माम् = रावणम् ), मा अवमंस्थाः = न अवमन्यस्व, मयि = रावणे, संदृष्टे =

अवलोकिते सति, अधन्यम् = अभाग्यं, काकुत्स्थं=रामं, का = स्त्री, कामयेत्=इच्छेत्, न काऽपीत्यर्थः ।

ॐव्युत्पत्तिःॐ नमस्यन्तं—नमस्यतीति नमस्यन्, तम् । "नमोवरिवश्चित्रङः क्यच्" इति क्यजन्ताल्लटः शत्रादेशः । जगत्पतिं—"कर्तुरीप्सिततमं कर्म" इति कर्मत्वम् । कर्तृसम्बन्धिन्याऽवमानक्रियया जगत्पतेराप्तुमिष्टत्वात् । मा अवमंस्थाः—अवपूर्वात् "मन ज्ञाने" इति दैवादिकाद्धातोः कर्तरि लुङि थास् । अधन्यं—धनं लब्धा धन्यः, "धनगणं लब्धा" इति यत् । न धन्योऽधन्यस्तम् । काकुत्स्थं—ककुत्स्थस्याऽपत्यं पुमान् काकुत्स्थस्तम्, "तस्याऽपत्यम्" इत्यण् । "तथायुक्तं चाऽनीप्सितम्" इति कर्मत्वम् । कामयेत—"कमु कान्तौ" इति धातोर्लिङ् ।

ॐभाषाऽर्थःॐ हे कार्यज्ञानरहिते सीते ! नमस्कार करनेवाले जगत्पति मेरा अपमान मत करो, मेरे देखे जानेपर भाग्यहीन रामको कौन स्त्री चाहेगी ? ॥ ८१ ॥

**यः पयो दोग्धि पाषाणं, स रामाद् भूतिमाप्नुयात् ।**
**रावणं गमय प्रीतिं बोधयन्तं हिताऽहितम् ॥ ८२ ॥**

**अन्वयः**—यः पाषाणं पयो दोग्धि स रामात् भूतिम् आप्नुयात्, ( भवतीम् ) हिताऽहितं बोधयन्तं रावणं प्रीतिं गमय ।

**व्याख्या**—( हे सीते ! ) यः = जनः, पाषाणं = प्रस्तरादिति भावः । पयः = दुग्धं, दोग्धि = निःसारयति, सः = जनः, रामात् = रामचन्द्रात्, भूतिम्=ऐश्वर्यम्, आप्नुयात् = लभेत । ( भवतीम्=त्वाम् ) हिताऽहितं = पथ्याऽपथ्यं, बोधयन्तं = बोधं कारयन्तं, रावणं=मां, प्रीतिं=प्रणयं, गमय=यापय ।

ॐव्युत्पत्तिःॐ पाषाणं—दुहधातोः कर्मयुक्तत्वात् "अकथितं च" इति अकथितकर्मत्वम् । पयः—"कर्तृरीप्सिततमं कर्म" इति मुख्यकर्मत्वम् । दोग्धि—"दुह प्रपूरणे" इति धातोर्लट् । भूतिं—"विभूतिर्भूतिरैश्वर्यम्" इत्यमरः । हिताऽहितं—हितं च अहितं च हिताऽहितं, तत् । "विप्रतिषिद्धं चाऽनधिकरणवाचि" इति समाहारद्वन्द्वः । भवतीं—"बोधयन्तम्" इति बुद्ध्यर्थेन पदेन योगे "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ" इति अणिकर्तुः कर्मत्वम् । रावणं—"गमये"—ति गत्यर्थकेन धातुना प्रयोगे पूर्वसूत्रेणैव अणिकर्तुः कर्मत्वम् । गमय—णिजन्तात् "गम्लृ गतौ" इति धातोर्लोट् । अत्र पाषाणात्पयोदोहनं रामाद्भूतिप्राप्तिसदृशमिति असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, तल्लक्षणं यथा—

"सम्भवन्वस्तु सम्बन्धोऽसम्भवन्वाऽपि कुत्रचित् ।
यत्र बिम्बाऽनुबिम्बत्वं बोधयेत्सा निदर्शना ॥" इति ॥

ॐभाषाऽर्थःॐ हे सीते ! जो पत्थरसे दूध दूहेगा वह रामसे ऐश्वर्य पायगा, तुम अपनेको हिताहित समझानेवाले रावणकी प्रीतिको उत्पन्न करो ॥ ८२ ॥

प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयम् ।
किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणम् ॥ ८३ ॥

**अन्वयः**—( हे सीते ! ) अहं प्रीतो भवतीं भुवनत्रयं भोजयिष्यामि, अत्यर्थं किं विलापयसे ? रावणं पार्श्वे शायय ।

**व्याख्या**—( हे सीते ! ) अहं = रावणः, प्रीतः = सन्तुष्टः सन्, भवतीं = त्वां, भुवनत्रयं=लोकत्रितयं, लक्षणया तत्समुत्थं भोज्यं, भोजयिष्यामि=भोजनं कारयिष्यामि, अत्यर्थं=भृशं, किं=किमर्थं, विलापयसे=विविधं भाषयसे, आत्मानमिति शेषः । रावणं= मां, पार्श्वे=समीपे, शायय=स्वापय ।

***व्युत्पत्तिः*** भवतीं—प्रत्यवसानाऽर्थस्य भुजधातोः प्रयोगे "गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्माऽकर्मकाणामणिकर्ता स णौ" इति अणिकर्तुः कर्मत्वम् । भोजयिष्यामि—णिजन्तात् "भुज पालनाऽभ्यवहारयोः" इति धातोर्लृट् । निगरणाऽर्थत्वात् "निगरणचलनाऽर्थेभ्यश्च" इति परस्मैपदम् । विलापयसे—विपूर्वकात् णिजन्तात् "लप व्यक्तायां वाचि" इति धातोर्लट् । कर्त्रभिप्राये "णिचश्चे"त्यात्मनेपदम् । लपधातोः शब्दकर्मत्वात् आत्मानमित्यत्र पूर्वसूत्रेणैव कर्मत्वम् । रावणं—शीङ् धातोरकर्मकत्वात्तद्योगे पूर्वसूत्रेणैव अणिकर्तुः कर्मत्वम् । शायय—णिजन्तात् "शीङ् स्वप्ने" इति धातोः "अणावकर्मकाच्चित्तवत्कर्तृकात्" इति परस्मैपदम् । प्रार्थनायां लोट् ।

***भाषाऽर्थः**—हे सीते ! मैं सन्तुष्ट होकर तुम्हें तीन लोकोंका भोज्य पदार्थ खिलाऊंगा; अपनेको क्यों अतिशय भाषण कराती हो, रावणको समीपमें सुलाओ ८३.

आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय ।
कः शक्रेण कृतं नेच्छेदधिमूर्धानमञ्जलिम् ॥ ८४ ॥

**अन्वयः**—( हे सीते ! त्वम् ) रक्षोभिः आज्ञां कारय, मां प्रियाणि उपहारय । शक्रेण कृतम् अधिमूर्द्धानम् अञ्जलिं को न इच्छेत् ?

**व्याख्या**—( हे सीते ! त्वम् ) रक्षोभिः = राक्षसैः, प्रयोज्यैः । आज्ञाम् = आदेशं, त्वद्वाक्यरूपमिति भावः । कारय = कर्तुं प्रेरय । मां = रावणं, प्रियाणि = अभीष्टानि वस्तूनि, उपहारस्य = उपानय । किञ्च—शक्रेण = इन्द्रेण, कृतं=विहितम्, अधिमूर्द्धानम् = शिरःस्थापितम्, अञ्जलिं = हस्तसम्पुटं, कः = जनः, न इच्छेत् = न कामयेत ? कस्येदं वाञ्छाविषयभूतं नेत्यर्थः, मत्स्वीकारे त्वमिन्द्रवन्द्या भविष्यसीति भावः ।

***व्युत्पत्तिः*** रक्षोभिः—"कारये"ति योगे "हृक्रोरन्यतरस्याम्" इति अणिकर्तुः कर्मत्वस्य वैकल्पिकत्वेन पक्षे तृतीया । "तत्प्रयोजको हेतुश्च" इति सीतायाः प्रयोजक-

कर्तृत्वम्। माम्—"उपहारये"ति पदेन योगे पूर्वसूत्रेणैव अणिकर्तुः कर्मत्वम्। शक्रेण—"स्वतन्त्रः कर्ता" इति कर्तृसंज्ञायां कर्तरि तृतीया। अधिमूर्द्धानम्—मूर्द्धानमधिगतोऽधिमूर्द्धा, तम्। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः।

ꙮभाषाऽर्थःꙮ हे सीते! तुम राक्षसोंको अपनी आज्ञा माननेके लिए प्रेरणा करो, अभीष्ट पदार्थ लानेके लिए मुझे प्रेरित करो। इन्द्रसे शिरमें रक्खे गये अञ्जलिको कौन नहीं चाहेगा? ॥ ८४॥

अथ कर्मप्रवचनीयाऽधिकारः।

**वचनं रक्षसां पत्युरनु क्रुद्धा पतिप्रिया।**
**पापाऽनु वसितं सीता रावणं प्राब्रवीद्वचः॥ ८५॥**

**अन्वयः**—पतिप्रिया सीता रक्षसां पत्युः वचनम् अनु क्रुद्धा (सती) पापाऽनुवसितं रावणं वचः प्राब्रवीत्।

**व्याख्या**—पतिप्रिया = स्वामिवल्लभा, पतिव्रतेत्यर्थः। सीता=मैथिली, रक्षसां= राक्षसानां, पत्युः = भर्तुः, रावणस्येत्यर्थः। वचनम् अनु = वचनेन हेतुना इत्यर्थः। क्रुद्धा=कुपिता सती, पापाऽनु=पापेन, वसितं=सम्बद्धम्, रावणं=दशाननं, वचः=वचनं, प्राब्रवीत्=अकथयत्।

ꙮव्युत्पत्तिःꙮ वचनम्—"अनु" इति कर्मप्रवचनीयसंज्ञकेन पदेन योगे "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया। अनु—"अनुर्लक्षणे" इति कर्मप्रवचनीयसंज्ञा। अत्र लक्ष्यते ज्ञायतेऽनेनेति लक्षणं, तच्च हेतुभूतं विवक्षितम्, न तु सूर्यं प्रति विद्योतते विद्युदितिवच्चिह्नमात्रम्। पापाऽनु—पापम् अनु, "तृतीयाऽर्थे" इति अनोः कर्मप्रवचनीयसंज्ञायां तद्योगे "पापम्" इत्यत्र द्वितीया। पापम् अनु, पापाऽनु, "द्वितीये"ति योगविभागाद्वा "सह सुपा" इति समासः। वसितं—"षिञ् बन्धने" इति धातोः कर्तरि क्तः। "अवसितमि"त्यत्र भागुरिमतेन अल्लोपः। रावणं—ब्रूधातोर्द्विकर्मकत्वात् अकथितं कर्म। वचः—मुख्यं कर्म।

ꙮभाषाऽर्थःꙮ पतिव्रता सीताने राक्षसेश्वर रावणके वचनसे क्रुद्ध होकर पापसे सम्बद्ध रावणको (ऐसा) वचन कहा— ॥ ८५॥

**न भवाननु रामं चेदुप शूरेषु वा, ततः।**
**अपवाह्यच्छलाद्वीरौ किमर्थं मामिहाऽहरः? ॥ ८६॥**

**अन्वयः**—(हे रावण!) भवान् अनु रामं न, वा उप शूरेषु चेत्, ततः छलात् वीरौ अपवाह्य इह मां किमर्थम् आहरः।

**व्याख्या**—(हे रावण!) भवान् = दीप्यमानः, त्वमिति शेषः। अनु रामं= रामात् हीनः इत्यर्थः, न = न असि, वा = अथवा, उप शूरेषु = शूरेभ्यः अधिक

इत्यर्थः । असीति शेषः । चेत्=यदि, ततः=तर्हि, छलात्=कपटात्, मायामृगव्याजादिति भावः । वीरौ=शूरौ, रामलक्ष्मणौ इत्यर्थः, अपवाह्य=अन्यतो नीत्वा, इह=अत्र अशोकवनिकायां, मां = सीतां, किमर्थं = किन्निमित्तम्, आहरः = आनीतवानसि; तस्मात्त्वं चौरः, न शूर इति भावः ।

ॐव्युत्पत्तिःॐ भवान्—भातीति, "भातेर्डवतुः" इति डवतुः । रूढ्या शब्दोऽयं युष्मदर्थकः परमत्र यौगिकः । अस्येह यौगिकत्वे सति "आहरः" इति क्रियापदमनुपपन्नं स्यात्, "शेषे प्रथमः" इत्यनुशासनबलात्तत्र "आहरत्" इत्येव क्रियापदमुपपत्तियुक्तं स्यादित्यभिप्रायः । मल्लिनाथमते "न त्वं पापाऽनुरामम्" एतादृशः पाठस्तत्र तु न काऽपि चिन्ता । अनु—"हीने" इति सूत्रेण कर्मप्रवचनीयसंज्ञा । रामम्—कर्मप्रवचीयसंज्ञकेन "अनु " पदेन योगे द्वितीया । उप—"उपोऽधिके च" इति अधिकाऽर्थे कर्मप्रवचनीयसंज्ञा । शूरेषु—"उपे"ति पदेन योगे "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" इति सप्तमी । किमर्थं—कस्मै ( प्रयोजनाय ), इ दं यथा तथेति क्रियाविशेषणम् ।

ॐभाषाऽर्थःॐ हे रावण ! दीप्यमान होता हुआ तू रामसे हीन नहीं है वा शूरोंसे अधिक है तो मायामृगका छलकर वीर राम और लक्ष्मणको अन्यत्र ले जाकर यहां मुझे किस लिए ले आया ? ॥ ८६ ॥

'उपशूरं न ते वृत्तं कथं रात्रिचराऽधम ! ।
यत् संप्रत्यपलोकेभ्यो लङ्कायां वसतिर्भयात् ॥ ८७ ॥

अन्वयः--हे रात्रिञ्चराऽधम ! ते वृत्तं कथम् उप शूरं न, यत् सम्प्रति भयात् अप लोकेभ्यो लङ्कायां वसतिः ।

व्याख्या--हे रात्रिञ्चराऽधम = हे राक्षसाऽवर ! ते = तव, वृत्तं = चरित्रं, कथं = केन प्रकारेण, उप शूरं = शूराद्धीनं, न = न वर्तते, यत्=यस्माद्धेतोः, सम्प्रति = अधुना, भयात् = भीतेर्हेतोः, अप लोकेभ्यः = लोकान् वर्जयित्वा, लङ्कायां= लङ्कापुर्यां, जलपर्वतदुर्गायामिति भावः । वसतिः = निवासः । लोकान्तरं वर्जयित्वा जलपर्वतदुर्गायां लङ्कायां निवसनाद्धेतोस्त्वं शौर्यहीनोऽसीति भावः ।

ॐव्युत्पत्तिःॐ रात्रिञ्चराऽधम—रात्रौ चरन्तीति रात्रिञ्चराः, "चरेष्ट" इति टः । "रात्रेः कृति विभाषा" इति पक्षे मुमागमः । रात्रिञ्चरेषु अधमो रात्रिञ्चराऽधमस्तत्सम्बुद्धौ । उप—"उपोऽधिके च" इति चकाराद्धीने उपशब्दस्य कर्मप्रवचनीयसंज्ञा । शूरम्—उपशब्दयोगाद्द्वितीया । भयात्—"विभाषा गुणोऽस्त्रियाम्" इति हेतौ पञ्चमी । अप—"अपपरी वर्जने" इति वर्जनाऽर्थे अपपदस्य कर्मप्रवचनीयसंज्ञा । लोकेभ्यः—अपपदेन १ "पञ्चम्यपाङ्परिभिः" इति द्वितीयाऽपवादेन पञ्चमी । वस-

तिः—"वस निवासे" इति धातोः "वहिवस्यर्तिभ्यश्चित्" इत्यौणादिकोऽतिप्रत्ययः।

※भाषाऽर्थः※ हे राक्षसोंमें अधम रावण ! तेरा चरित्र कैसे शूरसे हीन नहीं है ? जो कि अभी डरसे अन्य लोकोंको छोड़कर जल और पर्वतसे दुर्गम लङ्कामें तेरा निवास है ॥ ८७ ॥

**आ रामदर्शनात् पाप ! विद्योतस्व स्त्रियः प्रति ।**
**सद्वृत्ताननु दुर्वृत्तः परस्त्रीं जातमन्मथः ॥ ८८ ॥**

**अन्वयः**—हे पाप ! आ रामदर्शनात् सद्वृत्तान् अनु दुर्वृत्तः स्त्रीं परिजातमन्मथः ( सन् ) स्त्रियः प्रति विद्योतस्व ।

**व्याख्या**—पाप=हे अधार्मिक ! आ रामदर्शनात्=रामदर्शनपर्यन्तं, सद्वृत्तान् अनु=साधून् प्रति, दुर्वृत्तः = दुश्चरित्रः सन्, स्त्रीं परि = स्त्रीं स्त्रीं प्रति, जातमन्मथः = उत्पन्नकामः सन्, स्त्रियः प्रति=नारीः लक्ष्यीकृत्य "श्रियं प्रति" इति मल्लिनाथसंमतः पाठस्तत्र श्रियं=लक्ष्मीमित्यर्थः । विद्योतस्व=दीप्यस्व । रामदर्शनाऽनन्तरं त्वं सपदि विनङ्क्ष्यसीति भावः ।

※व्युत्पत्तिः※ पाप—पापमस्याऽस्तीति पापस्तत्सम्बुद्धौ, "अर्श आदिभ्योऽच्" इत्यच् । आ—"आङ् मर्यादावचने" इत्याङः कर्मप्रवचनीयसंज्ञा॥ रामदर्शनात्—आङ्योगे "पञ्चम्यपाङ्परिभिः" इति पञ्चमी । सद्वृत्तान्—सत् वृत्तं येषां ते सद्वृत्तास्तान्, इत्थंभूताख्यानद्योतकेन कर्मप्रवचनीयसंज्ञकेन अनुपदेन योगे द्वितीया । अनु—"लक्षणेत्थंभूताऽऽख्यानभागवीप्सासु प्रतिपर्यनवः" इति इत्थंभूताख्याने कर्मप्रवचनीसंज्ञा । स्त्रीं—कर्मप्रवचनीयसंज्ञकेन परिपदेन योगे द्वितीया । परि—पूर्वसूत्रेणैव वीप्सायां कर्मप्रवचनीयत्वम् । स्त्रियः—लक्षणद्योतकेन कर्मप्रवचनीयसंज्ञकेन प्रतिपदेनयोगे द्वितीया । "वाम्शसोः" इति विकल्पादियङ् । प्रति—पूर्वसूत्रेणैव लक्षणे कर्मप्रवचनीयत्वम् ।

※भाषाऽर्थः※ हे अधार्मिक ! रामजीका दर्शन न होने तक सज्जनोंके प्रति दुश्चरित्र होता हुआ तू प्रत्येक स्त्रियोंमें ,कामविकारवाला होता हुआ स्त्रियोंको लक्ष्यकर दीप्यमान हो ॥ ८८ ॥

**अभि द्योतिष्यते रामो भवन्तमचिरादिह ।**
**उद्गूर्णबाणः संग्रामे यो नारायणतः प्रति ॥ ८९ ॥**

**अन्वयः**—अचिरात् रामो भवन्तम् अभि इह द्योतिष्यते । संग्रामे उद्गूर्णबाणो यो नारायणतः प्रति ।

**व्याख्या**—अचिरात् = क्षिप्रमेव, रामः = रामचन्द्रः, भवन्तम् अभि = त्वां

लक्ष्यीकृत्य, इह = लङ्कायां, द्योतिष्यते = दीप्यमानो भविष्यति । संग्रामे = रणे, उद्गूर्णबाणः = उद्यतेषुः, यः = रामः, नारायणतः प्रति = विष्णुना सदृशः ।

⊛व्युत्पत्तिः⊛ भवन्तम्—लक्षणाऽर्थद्योतकेन कर्मप्रवचनीयसंज्ञकेन अभिपदेन योगे "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया । अभि—"अभिरभागे" इति लक्षणाऽर्थे कर्मप्रवचनीयत्वम् । नारायणतः—प्रतिनिध्यर्थद्योतकेन कर्मप्रवचीयसंज्ञकेन प्रतिपदेन योगे "प्रतिनिधिप्रतिदाने च यस्मात्" इति द्वितीयाऽपवादिनी पञ्चमी । नारायणात् इति नारायणतः "प्रतियोगे पञ्चम्यास्तसिः" इति तसिः । प्रति—"प्रतिः प्रतिनिधिप्रतिदानयोः" इति प्रतेः प्रतिनिधौ कर्मप्रवचनीयत्वम् ।

⊛भाषाऽर्थः⊛ शीघ्र ही रामचन्द्रजी तुझे लक्ष्यकर लङ्कामें दीप्यमान होंगे, संग्राममें बाण उठानेवाले जो ( रामचन्द्रजी ) विष्णुके सदृश हैं ॥ ८९ ॥

कुतोऽधियास्यसि क्रूर ! निहतस्तेन पत्रिभिः ? ।
न सूक्तं भवताऽत्युग्रमति रामं मदोद्धत ! ॥ ९० ॥

**अन्वयः**—हे क्रूर ! तेन पत्त्रिभिः निहतः ( सन् ) कुतः अधियास्यसि ? हे मदोद्धत ! भवता अत्युग्रम् अति रामं न सूक्तम् ।

**व्याख्या**—हे क्रूर = हे नृशंस !, तेन = रामेण, पत्त्रिभिः = बाणैः, निहतः = प्रहृतः सन्, कुतः = क्व, अधियास्यसि = प्राप्स्यसि । हे मदोद्धत = हे मदोद्दण्ड !, भवता = त्वया, अत्युग्रम् = अतिरौद्रम्, अति रामं = रामम् अतिक्रम्य, "संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का ।" इत्यादिनेति भावः । न सूक्तं = शोभनं नोक्तम्, तादृशस्य दुर्वाक्यस्य फलमाशु भविष्यतीति भावः ।

⊛व्युत्पत्तिः⊛ क्रूर—"नृशंसो घातुकः क्रूर" इत्यमरः । अधि—"अधिपरी अनर्थकौ" इत्यधेः अनर्थकत्वात् ( धात्वर्थाऽतिरिक्ताऽर्थरहितत्वात् ) कर्मप्रवचनीयसंज्ञा, ततो गत्युपसर्गसंज्ञाबाधः । तत एव "गतिर्गतौ" इति निघातत्वम् ( अनुदात्तत्वम् ) न । अत्युग्रम्—अत्यर्थमुग्रं यथा तथा "कुगतिप्रादय" इति समासः । अति—"अतिरतिक्रमणे च" इति कर्मप्रवचनीयसंज्ञा । रामम्—अतिक्रमणाऽर्थद्योतकेन कर्मवचनीयसंज्ञकेन अतिपदेन योगे द्वितीया । सूक्तं—शोभनमुक्तं, पूर्वसूत्रेण समासः । "सुः पूजायाम्" इति कर्मप्रवचनीयत्वम् । "गतिरनन्तर" इति स्वराऽभावः ।

⊛भाषाऽर्थः⊛ हे क्रूर ! रामजीके द्वारा बाणोंसे प्रहृत होकर तू कहाँ जायगा ? हे मदोद्धत ! तूने अति उग्र प्रकारसे रामजीको लङ्घन करके अच्छा नहीं कहा ? ॥ ९० ॥

परिशेषं न नामाऽपि स्थापयिष्यति ते विभुः ।
अपि स्थाणुं जयेद् रामो, भवतो ग्रहणं कियत् ? ॥ ९१ ॥

**अन्वयः**—विभुः ते परिशेषं नाम अपि न स्थापयिष्यति। रामः स्थाणुम् अपि जयेत् भवतो ग्रहणं कियत् ?

**व्याख्या**—विभुः=प्रभुः, राम इत्यर्थः। ते=तव, रावणस्येत्यर्थः। परिशेषं=परिशिष्टं, नाम अपि=संज्ञाम् अपि, न स्थापयिष्यति=न स्थापितं करिष्यति, किमुत शरीरमित्यर्थः। रामः = रामचन्द्रः, स्थाणुम् अपि=रुद्रम् अपि, तवोपास्यमिति भावः। जयेत् = जितं कुर्यात्, भवतः = तव, ग्रहणं=बन्धनं, कियत् = किंपरिमाणम्, स्वल्पाऽऽयाससाध्यमेवेति भावः। यो यस्य उपास्यं जयेत् तस्य कृते उपासकनिग्रहे कः क्लेश इति तात्पर्यम् ॥

**ॐव्युत्पत्तिःॐ** अपि—अत्राऽप्रयुक्तशरीरपदाऽर्थद्योतकत्वादपेः "अपिः पदाऽर्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु" इति कर्मप्रवचनीयसंज्ञा। स्थाणुम् अपि—अत्राऽपेः पूर्वसूत्रेणैव संभावनायां कर्मप्रवचनीयत्वम्। अपि स्थाणुम्, अपि स्थापयिष्यतीत्युभयत्राऽपि कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाबाधात् "उपसर्गात्सुनोती"त्यादिना न षत्वम्।

**ॐभाषाऽर्थःॐ** प्रभु राम तेरा अवशिष्ट नाम भी बाकी नहीं रक्खेंगे ( शरीरकी क्या बात ? )। रामजी रुद्रको भी जीतेंगे, तेरा ग्रहणा क्या है ? ॥ ९१ ॥

अपि स्तुह्यपिसेधाऽस्मांस्तथ्यमुक्तं नराऽशन।
अपि सिञ्चेः कृशानौ त्वं दर्पं, मय्यपि योऽभिकः॥ ९२ ॥

**अन्वयः**—हे नराऽशन ! अस्मान् अपि स्तुहि अपि सेध ( वा ) तथ्यम् उक्तम् ! यः मयि अपि अभिकः, ( स ) त्वं कृशानौ दर्पम् अपि सिञ्चेः।

**व्याख्या**—हे नराऽशन=हे मनुष्यभक्षक रावण !, अस्मान् = माम्, अपिस्तुहि=साधूक्तमिति प्रशंस, अपिसेध = निन्द वेत्यर्थः। तथ्यं=सत्यम्, "परिशेषं न नामाऽपी"त्याकारकं वाक्यमिति भावः। उक्तम् = अभिहितम्, यः, मयि अपि = मद्विषयेऽपि, अभिकः = कामुकः, त्वं = रावणः, कृशानौ = अग्नौ, दर्पम् = वीर्यम्, अपि सिञ्चेः = क्षरेः।

अत्र मत्कामुकत्वं कृशान्वधिकरणकवीर्यकर्मकक्षरणसदृशमित्यसंभवद्वस्तुसम्बन्धो निदर्शनाऽलङ्कारः॥

**ॐव्युत्पत्तिःॐ** अपिस्तुहि, अपिसेध—अत्र अपेः "अपिः पदाऽर्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु" इति अन्ववसर्गे ( कामचाराऽनुज्ञायाम् ) कर्मप्रवचनीयसंज्ञा। स्तुहीत्यत्र "ष्टुञ् स्तुतौ" इति धातोर्लोट् "सेर्ह्यपिच्च" इति अपित्त्वेन ङित्त्वाद्गुणाऽभावः। उक्तम्—"अप्रधाने दुहादीनाम्" इति नियमेन अप्रधाने कर्मणि क्तः। अभिकः—"अनुकाऽभिकाऽभीकः कमिता" इति निपातनात्साधुत्वम्। "कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः" इत्यमरः। अपि सिञ्चेः—गर्हायामपेः पूर्वसूत्रेणैव कर्मप्रवच-

नीयसंज्ञा । कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाबाधात् "स्तुहि" "सेध" "सिद्धेः" इत्यत्र "उपसर्गात्सुनोती"त्यादिना न षत्वम् ।

ॐभाषाऽर्थःॐ हे मनुष्यभक्षक राक्षस ! मेरी प्रशंसा कर वा निषेध कर, मैंने सच्ची बात कही है । जा मेरे विषयमें भी कामुक होता है ऐसा तू आगमें वीर्यस्राव कर॥९२॥

अधि रामे पराक्रान्तमधिकर्ता स ते क्षयम् ।
इत्युक्त्वा मैथिली तूष्णीमासाञ्चक्रे दशाननम् ॥ ९३ ॥

अन्वयः—अधि रामे पराक्रान्तं, स ते क्षयम् अधिकर्ता, मैथिली दशाननम् इति उक्त्वा तूष्णीम् आसाञ्चक्रे ।

व्याख्या—अधि रामे = पराक्रान्तस्वामिनि रामे, पराक्रान्तं = पराक्रमः, वर्तत इति शेषः । अतः सः = पराक्रान्तस्वामी रामः, ते = तव, रावणस्येत्यर्थः । क्षयं = नाशम्, अधिकर्ता = करिष्यति । मैथिली=सीता, दशाऽऽननं = रावणम्, इति=इत्थम्, उक्त्वा=अभिधाय, तूष्णीं = जोषम्, आसाञ्चक्रे=आस्त ।

ॐव्युत्पत्तिःॐ अधि रामे—"अधिरीश्वरे" इति रामपराक्रमयोः स्वस्वामिभावसम्बन्धे द्योत्ये अधेः कर्मप्रवचनीयत्वे "रामे" इत्यत्र "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" इति सप्तमी । पराक्रान्तं—पराक्रमणं, "नपुंसके भावे क्तः" इति क्तः । क्षयम्—"विभाषा कृञि" इत्यत्र विभाषाग्रहणात् पक्षे "अधी"त्यस्य कर्मप्रवचनीय संज्ञाऽभावात् कर्मणि द्वितीया । संज्ञापक्षे उपसर्गसंज्ञाबाधात् "तिङि चोदात्तवती"ति निघाताऽभावः फलम् । आसाञ्चक्रे—"आस उपवेशने" इति धातोर्लिट् । "दयायासश्च" इत्याम्प्रत्ययः ।

ॐभाषाऽर्थःॐ हे रावण ! पराक्रमके स्वामी राममें पराक्रम है, वे तेरा नाश करेंगे" सीताजी रावणको ऐसा कहकर चुप हो रहीं ॥ ९३ ॥

अथ विभक्त्यधिकारः ।

ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः ।
वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन् ॥ ९४ ॥

अन्वयः—ततः क्रुद्धः क्रूरविग्रहो रावणो वैदेहीम् ( आत्मानं च ) अन्तरा खड्गम् उद्यम्य क्षणं विनिश्वसन् ऊचे ।

व्याख्या—ततः=सीतावचनाऽनन्तरं, क्रुद्धः=कुपितः, क्रूरविग्रहः=भीषणशरीरः, रावणः=दशाननः, वैदेहीं=सीताम्, आत्मानं चेति शेषः । अन्तरा = मध्ये, उभयोर्मध्य इत्यर्थः । खड्गं=करवालम्, उद्यम्य=उत्क्षिप्य, क्षणं=कंचित्कालं, विनिश्वसन् रोषाद्दीर्घमुष्णं च निश्वसन्नित्यर्थः । ऊचे=उक्तवान्, वक्ष्यमाणप्रकारं वाक्यमिति शेषः ।

ॐव्युत्पत्तिःॐ वैदेहीम्—"अन्तरे"ति पदेन योगे "अन्तराऽन्तरेण युक्ते" इति षष्ठ्यपवादाद् द्वितीया। खड्गम्—"कर्तुरीप्सिततमं कर्म" इति कर्मसंज्ञायां। "कर्मणि द्वितीया" इति द्वितीया। क्षणं—"कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया।

ॐभाषाऽर्थःॐ सीताजीके वाक्यके अनन्तर क्रुद्ध होकर भीषण शरीरवाला रावण सीताजीके और अपने बीचमें खड्ग उठाकर कुछ क्षण तक दीर्घ और उष्ण श्वास लेकर बोला—॥ १४ ॥

"चिरेणाऽनुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी।
न मासे प्रतिपत्तासे मां चेन्मर्ताऽसि मैथिलि !" ॥ १५ ॥

अन्वयः—"हे मैथिलि ! चिरेण अनुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी ( त्वम् ) मासे मां न प्रतिपत्तासे चेत् मर्तासि।"

व्याख्या—हे मैथिलि = हे सीते ! चिरेण = बहुकालेन, अनुगुणम् = अनुकूलं, प्रोक्ता = अभिहिताऽपि, प्रतिपत्तिपराङ्मुखी = अङ्गीकारविमुखी, एतादृशी त्वं, मासे = त्रिंशद्दिवसपरिमिते काले, मां=रावणं, न प्रतिपत्तासे=न अङ्गीकरिष्यसि, चेत्= यदि, तर्हीति शेषः, मर्तासि = मरिष्यसि, मासादूर्ध्वं त्वदीयं व्यतिक्रमं न सहिष्य इति भावः।

ॐव्युत्पत्तिःॐ चिरेण—"अपवर्गे तृतीया" इति फलप्राप्तितृतीयाऽर्थे अव्ययम्। प्रोक्ता—दुहादित्वादप्रधाने कर्मणि क्तः। प्रतिपत्तिपराङ्मुखी - प्रतिपत्तौ पराङ्मुखी। मासे—"सप्तमी पञ्चम्यौ कारकमध्ये" इति सप्तमी, कर्तृकर्मकारकयोर्मध्यगतत्वान्मासस्य। प्रतिपत्तासे—प्रतिपूर्वकात् "पद गतौ" इति दैवादिकाद्धातोर्लुट् "थासः से" इति से आदेशः। मर्तासि—"मृङ् प्राणत्यागे" इति धातोः "म्रियतेर्लुङ्लिङोश्च" इति नियमाल्लुटि परस्मैपदम्।

ॐभाषाऽर्थःॐ "हे सीते ! बहुत समयसे अनुकूल कही गई, तथाऽपि अङ्गीकार नहीं करने वाली तुम एक मासमें मुझे स्वीकार नहीं करोगी तो मरोगी" ॥ १५ ॥

प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन्।
'भयानि दत्त सीतायै सर्वा यूयं कृते मम ॥ १६ ॥'

अन्वयः—( रावणः ) मन्दिराय प्रतिव्रजन् "सर्वा यूयं मम कृते सीतायै भयानि दत्त" ( इति ) भीमा राक्षसीः प्रायुङ्क्त।

व्याख्या—( रावणः ) मन्दिराय प्रतिव्रजन् = मन्दिरं गच्छन्, सर्वाः = सकलाः, यूयं=राक्षस्यः मम कृते = मदर्थं, सीतायै = मैथिल्यै, भयानि = भीतीः, दत्त = प्रयच्छत, भयान्युत्पादयतेत्यर्थः। ( इति=इत्थम् ) भीमाः = भयानकाः, राक्षसीः=यातुधानीः, प्रायुङ्क्त=नियुक्तवान्।

**व्युत्पत्तिः** मन्दिराय—"प्रतिव्रजन्" इति पदेन योगे "गत्यर्थकर्मणि द्वितीया-चतुर्थ्यौ चेष्टायामनध्वनि" इति चतुर्थी । सीतायै—"कर्मणे"त्यादिना सम्प्रदानत्वे "चतुर्थी सम्प्रदाने" इति चतुर्थी । "स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारो दानम्" इति वृत्तिकाराऽभिमतदानलक्षणेऽभ्युपगते तु नाऽत्र संप्रदानत्वं, नाऽपि चतुर्थी । "खण्डिकोपाध्यायः शिष्याय चपेटां ददाती" त्यादिप्रयोगदर्शनात् लक्षणमिदमनुपपन्नम् । दत्त—"डुदाञ् दाने" इति धातोर्लोट् । प्रायुङ्क्त—"युजिर् योगे" इति धातोर्लङ् ।

**भाषाऽर्थः** भवनको जाते हुए रावणने "तुम सब मेरे लिए सीताको डर दिखाओ" ऐसा कहकर राक्षसियोंको नियुक्त किया ॥ ९६ ॥

**गते तस्मिन् समाजग्मुर्भयाय प्रति मैथिलीम् ।**
**राक्षस्यो रावणप्रीत्यै क्रूरं चोचुरलं मुहुः ॥ ९७ ॥**

**अन्वयः**—तस्मिन् गते राक्षस्यो भयाय मैथिलीं प्रति समाजग्मुः, रावणप्रीत्यै अलं क्रूरं मुहुः ऊचुः ।

**व्याख्या**—तस्मिन्=रावणे, गते=याते सति, राक्षस्यः=रक्षःस्त्रियः, भयाय=भयमुत्पादयितुं, मैथिलीं प्रति=सीतां लक्ष्यीकृत्य, समाजग्मुः=समागताः । रावणप्रीत्यै = रावणं प्रीणयितुम् , अलम्=अत्यर्थं, क्रूरं=कठोरं, वाक्यमिति शेषः । ऊचुः=उक्तवत्यः ।

**व्युत्पत्तिः** तस्मिन् गते—"यस्य च भावेन भावलक्षणम्" इति सप्तमी । भयाय—"क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । उत्पादनस्य क्रियाऽर्थोपपदस्य स्थानिनः प्रयुज्यमानस्य भयं कर्म । क्रिया चाऽत्र समागमः । तत्रोपपदं क्रियाऽर्थम् । मैथिलीं—प्रतियोगे "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि" इति द्वितीया । समाजग्मुः—"समो गम्यृच्छिभ्याम्" इत्यात्मनेपदं न आङा व्यवहितत्वात् । रावणप्रीत्यै—"तुमर्थाच्च भाववचनात्" इति चतुर्थी ।

**भाषाऽर्थः** उस रावणके जानेपर राक्षसियाँ भय उत्पन्न करनेके लिए सीताजीको लक्ष्यकर आगईं और रावणको प्रसन्न करनेके लिये अतिशय कठोर वचन बारंबार कहने लगीं ॥ ९७ ॥

**रावणाय नमस्कुर्याः, स्यात्सीते ! स्वस्ति ते ध्रुवम् ।**
**अन्यथा प्रातराशाय कुर्याम त्वामलं वयम् ॥ ९८ ॥**

**अन्वयः**—"हे सीते ! रावणाय नमस्कुर्याः, ते स्वस्ति ध्रुवं स्यात् , अन्यथा वयं त्वां प्रातराशाय अलं कुर्याम" ।

**व्याख्या**—हे सीते = हे मैथिलि !, रावणाय नमस्कुर्याः = रावणमनुकूलयितुं प्रणम । ते =तुभ्यं, स्वस्ति = कल्याणं, ध्रुवं = नित्यं यथा तथा, स्यात् = भवेत् ।

अन्यथा = अनमस्कारे, वयं = राक्षस्यः, त्वां = सीतां, प्रातराशाय = प्रातर्भोजनाय, अलं = पर्याप्तं, कुर्याम = विदधीमहि । रावणप्रणयाऽनभ्युपगमे तव शरीरं न स्थास्यतीति भावः ।

॥व्युत्पत्तिः॥ रावणाय—अनुकूलयितुमित्यर्थविवक्षायां "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । "साक्षात्प्रभृतीनि च" इति नमःशब्दस्य गतिसंज्ञया, "नमस्पुरसोर्गत्योः" इति विसर्गस्य सः । "नमस्कृत्ये"ति पदेन योगे "नमः स्वस्ती"त्यादिना चतुर्थीति जयमङ्गलमल्लिनाथमतं तु असत्, "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"ति नियमेन द्वितीयायाः प्राप्तेः । अनुकूलयितुमित्यर्थविवक्षायां द्वितीयाऽपवादिनी चतुर्थ्येव इति सर्वं निरवद्यम् । "नमस्कृत्वे"ति पाठान्तरं, तत्र "स्थितायै" इति अध्याहार्यम् । अन्यथाऽसमानकर्तृकत्वात्क्त्वाप्रत्ययो न घटते । "नमस्कृत्ये"ति पाठान्तरम् । "साक्षात्प्रभृतीनि च" इति नमःशब्दस्य वैकल्पिकी गतिसंज्ञा । ततः समासः क्त्वो ल्यबादेशश्च । ते—"स्वस्ति" पदेन योगे पूर्वसूत्रेणैव चतुर्थी । प्रातराशाय—"अलं" पदेन योगे पूर्वसूत्रेणैव चतुर्थी । कुर्याम—कृधातोर्लिङ् । "नित्यं ङितः" इति सलोपः ।

॥भाषाऽर्थः॥ "हे सीते ! तुम रावणको प्रणाम करो, तुम्हारा नित्य कल्याण होगा । नहीं तो हम तुम्हें जलपानके लिए पर्याप्त करेंगीं" ॥ ९८ ॥

तृणाय मत्वा ताः सर्वा वदन्तीस्त्रिजटाऽवदत् ।
'आत्मानं हत दुर्वृत्ताः ! स्वमांसैः कुरुताऽशनम् ॥ ९९ ॥

**अन्वयः**—त्रिजटा वदन्तीः ताः सर्वाः तृणाय मत्वा अवदत्—"हे दुर्वृत्ताः ! आत्मानं हत, स्वमांसैः अशनं कुरुत ।

**व्याख्या**—त्रिजटा = काचिद्राक्षसी, रावणभगिनीति जयमङ्गलः, वदन्तीः = एवं प्रलपन्तीः, ताः, सर्वाः = सकला, राक्षसीः, तृणाय मत्वा = तृणमिव संगणय्य अवदत् = उक्तवती, हे दुर्वृत्ताः = हे दुराचाराः !, आत्मानं = स्वं, हत = मारयत; स्वमांसैः = आत्मपललैः, अशनं = भक्षणं, कुरुत = विधत्त, सीतामनूद्य युष्मत्कर्तृकं दुर्वाच्यप्रकाशनमात्महत्योपमं स्वमांसभक्षणसन्निभं चेति भावः ।

॥व्युत्पत्तिः॥ तृणाय—"मत्वे"त्यस्य कर्मत्वात् तिरस्कारेऽर्थे "मन्यकर्मण्यनादरे विभाषाऽप्राणिषु" इति चतुर्थी । हत—"हन हिंसागत्योः" इति धातोर्लोटि थस्य तादेशः । स्वमांसैः—"साधकतमं करणम्" इति करणत्वं, "कर्तृकरणयोस्तृतीया" इति करणे तृतीया ।

॥भाषाऽर्थः॥ त्रिजटाने ऐसा कहती हुई उन सब राक्षसियोंको तृणसदृश विचार कर कहा—"हे दुष्ट आचारवाली राक्षसियो ! अपनेको मारो; अपने मांसोंके भोजन करो ॥ ९९ ॥

किमर्थमेवमाहेति प्रतिपादयति—

**अद्य सीता मया दृष्टा सूर्यं चन्द्रमसा सह ।**
**स्वप्ने स्पृशन्ती मध्येन तनुः श्यामा सुलोचना ॥ १०० ॥**

**अन्वयः**—अद्य स्वप्ने मया मध्येन तनुः श्यामा सुलोचना सीता चन्द्रमसा सह सूर्यं स्पृशन्ती दृष्टा" ॥

**व्याख्या**—अद्य = अस्यां रात्रौ, स्वप्ने = स्वापे, मया = त्रिजटया, मध्येन= अवलग्नेन, तनुः = तन्वी, कृशेत्यर्थः, श्यामा = यौवनमध्यस्था, युवतिरित्यर्थः । सुलोचना = सुनेत्रा, एतादृशी, सीता = मैथिली, चन्द्रमसा = इन्दुना, सह = समं, सूर्यं = भास्करं, स्पृशन्ती = आमृशन्ती, दृष्टा=अवलोकिता । सूर्याचन्द्रमसौ = रामलक्ष्मणौ इति जयमङ्गला ।

**ॐव्युत्पत्तिःॐ** मया—"कर्तृकरणयोस्तृतीया" इति कर्तरि तृतीया । मध्येन— "इत्थंभूतलक्षणे" इति तृतीया । मल्लिनाथमते तु "येनाऽङ्गविकारः" इति तृतीया । तनुः—"वोतो गुणवचनात्" । इति वैकल्पिकङीषभावपक्षे रूपम् । श्यामा—"श्यामा यौवनमध्यस्था" । भरतमते तु—"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते ॥" इति । चन्द्रमसा—"सहे"ति पदेन योगे "सहयुक्तेऽप्रधाने" इति तृतीया । चन्द्रसूर्यस्पर्शलक्षणः स्वप्नः साम्राज्यसूचक इति केचित् ।

**ॐभाषाऽर्थःॐ** आज स्वप्नमें मैंने पतली कमरवाली, युवति तथा सुन्दर नेत्रोंसे युक्त सीताको चन्द्रमाके साथ सूर्यको स्पर्श करती हुई देखा" ॥ १०० ॥

**तास्तया तर्जिताः सर्वा मुखैर्भीमा यथाऽऽगतम् ।**
**ययुः सुषुप्सवस्तल्पं भीमैर्वचनकर्मभिः ॥ १०१ ॥**

**अन्वयः**—तया तर्जिताः मुखैः भीमाः भीमैः वचनकर्मभिः ( उपलक्षिताः ) सर्वाः ताः सुषुप्सवः ( सत्यः ) यथागतं तल्पं ययुः ।

**व्याख्या**—तया = त्रिजटया, "आप्तया" इति मल्लिनाथसंमतः पाठस्तत्र हितयेत्यर्थः । तर्जिताः = भर्त्सिताः, मुखैः=आननैः, भीमाः = रौद्राः, भीमैः= भयङ्करैः, वचनकर्मभिः = वाक्यक्रियाभिः, उपलक्षिताः, सर्वाः=सकलाः, ताः= राक्षस्यः, सुषुप्सवः=स्वप्तुमिच्छवः सत्यः, यथागतम्=आगमनमनतिक्रम्य, आगमना-ऽनुसारमित्यर्थः । "यथायथम्" इति मल्लिनाथसम्मतः पाठस्तत्र यथास्वमित्यर्थः । तल्पं=शय्यां, "तल्पान्" इति मल्लिनाथसंमतः पाठोऽपपाठस्तल्पशब्दस्य क्लीबत्वात् । ययुः = जग्मुः ।

❀व्युत्पत्तिः❀ मुखैः—"येनाऽङ्गविकारः" इति तृतीया। भीमैर्वचनकर्मभिः—"इत्थम्भूतलक्षणे" इति तृतीया। यथाऽऽगतम्–आगमनमागतं, "नपुंसके भावे क्त" इति क्तप्रत्ययः। आगतमनतिक्रम्य यथागतं, तद्यथा तथा। "यथाऽसादृश्ये" इति नियमात् पदार्थाऽनतिवृत्तिरूपे यथाऽर्थे "अव्ययं विभक्ती"त्यादिना समासः। जयमङ्गलमते तु वीप्सायामव्ययीभावस्तत्र यतो यतस्तल्पादुत्थाय गता इत्यर्थः। तल्पं—"तल्पं शय्याऽट्टदारेषु" इत्यमरः। "तल्पमट्टे कलत्रे च शयनीये च न द्वयोः।" इति मेदिनी।

❀भाषाऽर्थः❀ त्रिजटासे भर्त्सनाकी गई, मुखोंसे भयङ्कर, भयङ्कर वचन और कर्मसे उपलक्षित वे सब राक्षसियां सोनेकी इच्छा करती हुईं आगमनके अनुसार शय्याको गईं ॥ १०१ ॥

युग्मम् १०२–१०३।

**गतासु तासु मैथिल्या संजानानोऽनिलाऽऽत्मजः।**
**आयातेन दशाऽऽस्यस्य संस्थितोऽन्तर्हितश्चिरम् ॥१०२॥**

**अन्वयः**—तासु गतासु दशाऽऽस्यस्य आयातेन चिरम् अन्तर्हितः ( सन् ) संस्थितः मैथिल्या संजानानः अनिलात्मजः ( रामसंकथां प्रास्तावीत् )।

**व्याख्या**—तासु = पूर्वोक्तासु राक्षसीषु, गतासु = यातासु सतीषु, दशाऽऽस्यस्य = रावणस्य, आयातेन=आगमनेन, चिरं=बहुकालं यावत्, अन्तर्हितः=निलीनः सन्, संस्थितः=विद्यमानः, मैथिल्या संजानानः=मैथिलीं जानन्, अनिलात्मजः=वायुपुत्रः, हनूमानित्यर्थः, रामसंकथां प्रास्तावीत्" इति वक्ष्यमाणश्लोकस्थाभ्यां पदाभ्यां सम्बन्धः।

❀व्युत्पत्तिः❀ आयातेन—आयानम् आयातं, तेन "नपुंसके भावे क्त" इति क्तः "हेतौ" इति तृतीया। मैथिल्या—"संजानान" इति पदेन योगे "संज्ञोऽन्यतरस्यां कर्मणि" इति विकल्पात्कर्मणि तृतीया, पक्षे मैथिलीमिति। संजानानः—संजानीते इति "सम्प्रतिभ्यामनाध्याने" इत्यात्मनेपदं, लटः शानच्।

❀भाषाऽर्थः❀ उन राक्षसियोंके जानेपर रावणके आगमनसे बहुत समय तक छिपकर रहे हुए और सीताजीको पहचानते हुए वायुपुत्र हनूमानजीने रामकथाका प्रारम्भ किया ॥ १०२ ॥

**ऋणाद्बद्ध इवोन्मुक्तो वियोगेन क्रतुद्विषः।**
**हेतोर्बोधस्य मैथिल्याः प्रास्तावीद्रामसंकथाम् ॥ १०३ ॥**

**अन्वयः**—ऋणात् बद्ध इव क्रतुद्विषो वियोगेन उन्मुक्तः ( सन्, अनिलाऽऽत्मजः ) मैथिल्या बोधस्य हेतोः रामसङ्कथां प्रास्तावीत्।

**व्याख्या**—ऋणात् = पर्युदञ्चनाद्धेतोः, बद्ध इव = नद्ध इव, प्रागिति शेषः।

पश्चात्—क्रतुद्विषः = यज्ञद्वेषिणः, रावणस्येत्यर्थः । वियोगेन = विश्लेषेण, उन्मुक्तः = ऋणनिर्मुक्त इव सन्, (अनिलात्मजः = हनूमान्) मैथिल्याः = सीतायाः, बोधस्य हेतोः = बोधाऽर्थम्, रामसङ्कथां = "राजा दशरथो नाम रथकुञ्जरवाजिमान् ।" इत्यादिरामायणोक्तां कथां, प्रास्तावीत् = प्रारब्ध ।

⁂व्युत्पत्तिः⁂ ऋणात्—"ऋणमाधमर्ण्ये" इति ऋधातोः क्तः, तकारस्य नत्वं च निपात्यते । "अकर्तर्यृणे पञ्चमी" इति पञ्चमी । "ऋणं पर्युदञ्चनम् । उद्धारः" इत्यमरः । वियोगेन—"विभाषा गुणेऽस्त्रियाम्" इति हेतौ पञ्चम्या वैकल्पिकत्वात्तदभावपक्षे "हेतौ" इति तृतीया । बोधस्य हेतोः—"षष्ठी हेतुप्रयोगे" इति षष्ठी । प्रास्तावीत्—प्रपूर्वकात् "ष्टुञ् स्तुतौ" धातोर्लुङ् । "स्तुसुधूञ्भ्यः परस्मैपदेषु" इतीट् । "सिचि वृद्धिः परस्मैपदेषु" इति इगन्तलक्षणा वृद्धिः । "इट ईटि" इति सलोपः ।

⁂भाषाऽर्थः⁂ पहले ऋणसे बद्धकी तरह पीछे रावणके जानेपर ऋणमुक्तके सदृश होते हुए हनुमान्‌जीने सीताजीको समझानेके लिए रामचन्द्रजीकी कथा कहना प्रारम्भ किया ॥ १०३ ॥

**तं दृष्ट्वाऽचिन्तयत् सीता हेतोः कस्यैष रावणः ।**
**अवरुह्य तरोरारादेति वानरविग्रहः ॥ १०४ ॥**

**अन्वयः**—तं दृष्ट्वा सीता अचिन्तयत्—"कस्य हेतोः एष रावणः वानरविग्रहः (सन्) तरोः अवरुह्य आरात् ऐति ।

**व्याख्या**—तं = हनूमन्तं, रामं स्तुवन्तमिति शेषः । दृष्ट्वा = विलोक्य, सीता = मैथिली, अचिन्तयत् = चिन्तितवती, कस्य हेतोः = केन हेतुना, एषः = अयं, रावणः = राक्षसराजः, वानरविग्रहः = मर्कटशरीरः सन्, तरोः = वृक्षात्, अवरुह्य = अवतीर्य, आरात् = समीपम्, ऐति = आगच्छति ।

⁂व्युत्पत्तिः⁂ कस्य हेतोः—"सर्वनाम्नस्तृतीया च" इति चकारात् षष्ठी, पक्षे तृतीया च । वानरविग्रहः—वानरस्येव विग्रहो यस्य सः । आरात्—"आरात्" इति पदेन समं कस्याऽपि नामवाचकपदस्य सम्बन्धाऽभावेन पञ्चम्यभावः । जयमङ्गलमते तरोः आरात् अवरुह्येत्यन्वयः, तत्र तरोरित्यत्र "अन्यारादितरर्तेदिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी, "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इत्यतः तरोरित्यत्र अपादान एव पञ्चमीति केचित् इति भरतः । "आराद् दूरसमीपयोः" इत्यमरः । ऐति—आङ्पूर्वात् "इण् गतौ" इति धातोर्लट् ।

⁂भाषाऽर्थः⁂ हनूमान्‌जीको देखकर सीताजीने विचार किया—"किस कारणसे यह रावण वानरका शरीर लेकर पेड़से उतरकर समीप आरहा है ? ॥ १०४ ॥

**पूर्वस्मादन्यवद् भाति भावादाशरथिं स्तुवन् ।**

ऋते क्रौर्यात् समायातो मां विश्वासयितुं नु किम् ? ॥१०५॥

अन्वयः—( अयम् ) भावात् दाशरथिं स्तुवन् पूर्वस्मात् अन्यवत् भाति, क्रौर्यात् ऋते मां विश्वासयितुं समायातो नु किम् ?

व्याख्या—( अयं = रावणः, वानराकार इति शेषः ) भावात् = अनुरागात्, दाशरथिं = रामं, स्तुवन् = स्तुतिं कुर्वन्, पूर्वस्मात् = प्राक्क्षणदृष्टात् रावणात्, अन्यवत् = अन्य इव, भाति = प्रकाशते, क्रौर्यात् ऋते = क्रूरतां परित्यज्य, मां = सीतां, विश्वासयितुं = विश्वासं कारयितुं, समायातो नु किं = संप्राप्तः किं, "नु" इति वितर्के ।

❀व्युत्पत्तिः❀ दाशरथिं—दशरथस्याऽपत्यं पुमान्दाशरथिस्तम्, "अत इञ्" इति इञ् । पूर्वस्मात्—अन्यपदयोगे "अन्यारादितरर्तेदिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी । अन्यवत्—अन्येन तुल्यम्, "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययः । क्रौर्यात्—"ऋते" योगे पूर्वसूत्रेणैव पञ्चमी ।

❀भाषाऽर्थः❀ यह ( रावण ) अनुरागसे रामचन्द्रजीकी स्तुति करता हुआ पूर्व-दृष्ट रावणसे दूसरेके सदृश प्रकाशित हो रहा है, यह क्रूरताको छोड़कर मुझे विश्वास दिलानेके लिए आया है क्या ? ॥ १०५ ॥

इतरो रावणादेष राघवाऽनुचरो यदि ।
सफलानि निमित्तानि प्राक् प्रभातात् ततो मम ॥ १०६ ॥

अन्वयः—एष रावणात् इतरो राघवाऽनुचरो यदि, ततो मम प्रभातात् प्राक् निमित्तानि सफलानि ।

व्याख्या—एषः = वानराऽऽकारः पुरुषः, रावणात् = दशाऽऽननात्, इतरः = अन्यः, रावणविरोधीति भावः । राघवाऽनुचरः = रामाऽर्थकारी, "राघवाऽर्थपर" इति मल्लिनाथसम्मतः पाठस्तस्य रामकार्यतत्पर इत्यर्थः । यदि = चेत्, ततः = तर्हि, मम = सीतायाः, प्रभातात् = विभातात्, सूर्योदयादिति भावः, प्राक् = पूर्वस्मिन्काले, दृष्टानीति शेषः, निमित्तानि = शकुनानि, वामाऽक्षिस्पन्दनादीनीत्यर्थः । सफलानि = फलजनकानीत्यर्थः ।

❀व्युत्पत्तिः❀ रावणात्—इतरपदयोगे "अन्यारादितरर्तेदिक्शब्दाऽञ्चूत्तरपदाजाहि-युक्ते" इति पञ्चमी । प्रभातात्—"प्राक्" इति अञ्चूत्तरपदेन योगे पूर्वसूत्रेणैव पञ्चमी ।

❀भाषाऽर्थः❀ यह ( वानराकार पुरुष ) रावणसे भिन्न रामचन्द्रजीका अनुचर हो तो मेरे सूर्योदयसे पहलेके बांई आंख फड़कना आदि शकुन सफल हैं ॥ १०६ ॥

उत्तराहि वसन् रामः समुद्राद् रक्षसां पुरम् ।
अवैल्लवणतोयस्य स्थितां दक्षिणतः कथम् ॥ १०७ ॥

**अन्वयः**—समुद्रात् उत्तराहि वसन् रामः लवणतोयस्य दक्षिणतः स्थितां रक्षसां पुरं कथम् अवैत् ?

**व्याख्या**—समुद्रात = सागरात्, उत्तराहि=उत्तरदिग्भागे, वसन् = वासं कुर्वन्, रामः = रामचन्द्रः, लवणतोयस्य = लवणसमुद्रस्य, दक्षिणतः=दक्षिणदिग्भागे, स्थितां= विद्यमानां, रक्षसां = राक्षसानां, पुरं = नगरीं, लङ्कामित्यर्थः । कथं = केन प्रकारेण, अवैत् = अवगतवान् ।

ॐव्युत्पत्तिःॐ समुद्रात्—"उत्तराही"ति आहिप्रत्ययान्तेन योगे "अन्यारादितरर्ते" इत्यादिना पञ्चमी । उत्तराहि—"आहि च दूरे" "उत्तराच्च" इत्याहिप्रत्ययः । लवणतोयस्य—"दक्षिणत" इत्यतसुच्प्रत्ययान्तेन योगे "षष्ठ्यतसर्थप्रत्ययेन" इति षष्ठी । दक्षिणतः-"दक्षिणोत्तराभ्यामतसुच" इति अतसुच्प्रत्ययः ।

ॐभाषाऽर्थःॐ समुद्रसे उत्तर दिशामें रहनेवाले रामने लवणसमुद्रकी दक्षिण दिशामें विद्यमान राक्षसपुरी लङ्काको कैसे जाना ? ॥ १०७ ॥

**दण्डकान् दक्षिणेनाऽहं सरितोऽद्रीन् वनानि च ।**
**अतिक्रम्याऽम्बुधिं चैव पुंसामगममाहृता ॥ १०८ ॥**

**अन्वयः**—अहं दण्डकान् दक्षिणेन सरितः अद्रीन् वनानि च अम्बुधिं च अतिक्रम्य पुंसाम् अगमम् आहृता ।

**व्याख्या**—अहं = सीता, दण्डकान् दक्षिणेन = दण्डकाऽरण्यस्य दक्षिणतः, सरितः = नदीः, अद्रीन् = पर्वतान्, वनानि च = अरण्यानि च, अम्बुधिं च = समुद्रं च, अतिक्रम्य = लङ्घयित्वा, पुंसां = पुरुषाणाम्, अगमम् = अगम्यं देशम्, आहृता = आनीता ।

ॐव्युत्पत्तिःॐ दण्डकान्—"दक्षिणेन" इति एनप्प्रत्ययाऽन्तेन योगे "एनपा द्वितीया" इति द्वितीया, "एनपे"ति योगविभागात्पक्षे षष्ठ्यपि । दक्षिणेन—दक्षिणस्यां दिशीति, "एनबन्यतरस्यामदूरेऽपञ्चम्याः" इत्येनप्प्रत्ययः । अगमम्—न गम्यत इति अगमस्तं, "ग्रहवृदृनिश्चिगमश्च" इति कर्मणि अप्प्रत्ययः ।

ॐभाषाऽर्थःॐ मैं दण्डकाऽरण्यकी दक्षिण दिशामें नदियों, पर्वतों, वनों और समुद्रको भी लांघकर पुरुषोंके अगम्य प्रदेशको लाई गई हूँ ॥ १०८ ॥

**पृथङ् नभस्वतश्चण्डाद्वैनतेयेन वा विना ।**
**गन्तुमुत्सहते नेह कश्चित्, किमुत वानरः ? ॥ १०९ ॥**

**अन्वयः**—चण्डात् नभस्वतः पृथक् वा वैनतेयेन विना इह कश्चित् गन्तुं न उत्सहते, वानरः किमुत ?

**व्याख्या**—चण्डात् = तीव्रात्, नभस्वतः = वायोः, पृथक् = विना, वा = अथवा, वैनतेयेन = गरुडेन, विना = पृथक्, इह = अस्मिन्प्रदेशे, कश्चित् = कोऽपि जनः, गन्तुं=प्राप्तुं, न उत्सहते = नोत्साहं करोति। वानरः = मर्कटः, किमुत = उत्सहते इति किं वक्तव्यमित्यर्थः।

**॥व्युत्पत्तिः॥** नभस्वतः—"पृथक्"पदेन योगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति पञ्चमी, पक्षे तृतीया द्वितीया च। वैनतेयेन—विनताया अपत्यं पुमान् वैनतेयस्तेन, "स्त्रीभ्यो ढक्" इति ढक्। "विने"ति पदेन योगेन पूर्वेण तृतीया। गन्तुं—"शकधृषज्ञाग्लाघटरभलभक्रमसहार्हाऽस्त्यर्थेषु तुमुन्" इति तुमुन्।

**॥भाषाऽर्थः॥** तीव्र वायु वा गरुडको छोड़कर यहांपर कोई जानेके लिए उत्साह नहीं करता है, वानरकी क्या बात? ॥ १०९ ॥

**इति चिन्तावतीं कृच्छ्रात् समासाद्य कपिद्विपः।**
**मुक्तां स्तोकेन रक्षोभिः प्रोचेऽहं रामकिङ्करः॥ ११०॥**

**अन्वयः**—कपिद्विपः इति चिन्तावतीं रक्षोभिः स्तोकेन मुक्तां (सीताम्) कृच्छ्रात् समासाद्य प्रोचे—"अहं रामकिङ्करः"।

**व्याख्या**—कपिद्विपः = वानरश्रेष्ठः, हनूमान्। इति = इत्थं, चिन्तावतीं = चिन्ताऽऽक्रान्तां, रक्षोभिः = राक्षसैः कर्तृभिः, स्तोकेन = लेशेन, मुक्तां = त्यक्तां, सीतामिति शेषः। कृच्छ्रात् = कष्टात्, समासाद्य = सम्प्राप्य, प्रोचे = प्रोवाच, अहं, रामकिङ्करः = रामाऽनुचरः।

**॥व्युत्पत्तिः॥** कपिद्विपः—कपिर्द्विप इव, उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे इति समासः। स्तोकेन—"करणे च स्तोकाऽल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य" इति तृतीया, पक्षे पञ्चमी च। कृच्छ्रात्—पूर्वसूत्रेणैव पञ्चमी, पक्षे तृतीया च।

**॥भाषाऽर्थः॥** वानरश्रेष्ठ हनूमान्‌जीने इस प्रकार चिन्ता करनेवाली और राक्षसोंसे अल्प समयसे छोड़ी गई सीताजीको कष्टसे पाकर कहा—"मैं रामचन्द्रजी का अनुचर हूँ॥ ११०॥

**विप्रकृष्टं महेन्द्रस्य न दूरं विन्ध्यपर्वतात्।**
**नाऽनभ्यासे समुद्रस्य तव माल्यवति प्रियः॥ १११॥**

**अन्वयः**—(हे मैथिलि!) तव प्रियः महेन्द्रस्य विप्रकृष्टं विन्ध्यपर्वतात् न दूरं समुद्रस्य न अनभ्यासे माल्यवति (वसति)।

**व्याख्या**—यदि त्वं रामकिङ्करः, क्वाऽसौ राम इत्याह—(हे मैथिलि!) तव= भवत्याः, प्रियः = दयितः, राम इत्यर्थः। महेन्द्रस्य = महेन्द्रपर्वतस्य, विप्रकृष्टं=दूरं,

विन्ध्यपर्वतात् = विन्ध्याऽचलात्, न दूरं = न विप्रकृष्टं, समुद्रस्य=सागरस्य, न अनभ्यासे="द्वौ नञौ प्रकृताऽर्थं द्योतयतः" इति न्यायेन समीप इत्यर्थः । माल्यवति= माल्यवन्नामके पर्वते वसतीति शेषः ।

❀व्युत्पत्तिः❀ महेन्द्रस्य—"विप्रकृष्टम्" इति पदेन योगे "दूराऽन्तिकाऽर्थैः षष्ठ्यन्यतरस्याम्" इति षष्ठी । विप्रकृष्टं—"स्याद्दूरं विप्रकृष्टकम्" इत्यमरः । "दूराऽन्तिकाऽर्थेभ्यो द्वितीया च" इति द्वितीया, चात् पक्षे पञ्चमी तृतीया च । एवं "दूरम्" इत्यत्राऽपि । प्रातिपदिकाऽर्थमात्रे विधिरयम् । अत्र सूत्रे "असत्त्ववचनस्य" इत्यनुवृत्तेर्नेह—दूरः पन्थाः । विन्ध्यपर्वतात्—"दूराऽन्तिकाऽर्थैः" इत्यादिना पञ्चमी । समुद्रस्य—"न अनभ्यासे" इति योगे पूर्वसूत्रेणैव वैकल्पिकी षष्ठी । न अनभ्यासे—"सप्तम्यधिकरणे च" इति चकाराद्दूराऽन्तिकाऽर्थेभ्यश्च सप्तमी, तेनाऽत्र असत्त्ववचनादन्तिकाऽर्थात् प्रातिपदिकाऽर्थे सप्तमी ।

❀भाषाऽर्थः❀ हे मैथिलि ! आपके प्यारे राम महेन्द्र पर्वतसे दूर, विन्ध्य पर्वतके समीप और समुद्रके भी समीप माल्यवान् नामके पर्वतपर रहते हैं ॥ १११ ॥

**असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनम् ।**
**तस्मिन् प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥**

**अन्वयः**—दशग्रीवे असम्प्राप्ते ( सति ) अहम् अचेतितः ( सन् ) इदं वनं प्रविष्टः, तस्मिन् प्रतिगते त्वां द्रष्टुम् उपाक्रंसि ।

**व्याख्या**—( हे जानकि ! ) दशग्रीवे=रावणे, असम्प्राप्ते = अप्रविष्टे सति ततः प्रागेवेति भावः । अहं=हनूमान्, अचेतितः = अप्रज्ञातः सन्, इदम्=एतत्, वनम्= उपवनम्, अशोकवनिकाऽऽख्यमित्यर्थः । प्रविष्टः = प्रविष्टवान् । तस्मिन् = रावणे, प्रतिगते = प्रतियाते सति, त्वां = भवतीं, द्रष्टुं = साक्षात्कर्तुम्, उपाक्रंसि = उत्साहं कृतवानस्मि ।

❀व्युत्पत्तिः❀ दशग्रीवे असम्प्राप्ते—"यस्य च भावेन भावलक्षणम्" इति दशग्रीवस्य असम्प्राप्तिक्रियया हनूमत्कर्तृकवनप्रवेशनक्रियाया लक्षितत्वात् सप्तमी । अचेतितः—"चिती संज्ञाने" इति धातोः क्तः । तस्मिन् प्रतिगते—पूर्वसूत्रेणैव भावलक्षणसप्तमी । उपाक्रंसि—उपपूर्वकात् "क्रमु पादविक्षेपे" इति धातोः "उपपराभ्याम्" इति सर्गे ( उत्साहे ) आत्मनेपदम् । अत एव "स्नुक्रमोरनात्मनेपदनिमित्ते" इति सिच इट् न । लुङि उत्तमपुरुषैकवचने रूपम् ।

❀भाषाऽर्थः❀ हे देवि ! रावणके आनेके पहले ही मैं अप्रज्ञात होकर इस वनमें घुसा और रावणके जानेपर आपका दर्शन करनेके लिए उत्साह किया हुआ हूँ ॥११२॥

यद्यादौ प्रविष्टोऽसि तर्हि स्वविक्रमः कथं न दर्शित इत्याह—

**तस्मिन् वदति रुष्टोऽपि नाऽकार्षं देवि ! विक्रमम् ।**
**अविनाशाय कार्यस्य विचिन्वानः पराऽपरम् ॥ ११३ ॥**

**अन्वयः**—हे देवि ! तस्मिन् वदति रुष्टोऽपि कार्यस्य अविनाशाय पराऽपरं विचिन्वानः ( सन् ) विक्रमं न अकार्षम् ।

**व्याख्या**—हे देवि = हे आर्ये, तस्मिन् = रावणे, वदति = प्रलपति सति, रुष्टोऽपि = कुपितोऽपि, कार्यस्य = आगमनप्रयोजनस्य, अविनाशाय = अविघाताय, पराऽपरं = पूर्वाऽपरं, विचिन्वानः = विचारयन् सन्, विक्रमं = पराक्रमं, न अकार्षं = न कृतवान् ।

※व्युत्पत्तिः※ तस्मिन् वदति—"षष्ठी चाऽनादरे" इत्यनादरे सप्तमी । अविनाशाय—"क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी, अविनाशं कर्तुमित्यर्थः । पराऽपरं—परं च अपरं च पराऽपरं, तत् "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इति न्यायेन समाहारद्वन्द्वः । विचिन्वानः—विचिनुते इति, विपूर्वात् "चिञ् चयने" इति धातोर्लटः शानच् । कर्त्रभिप्राये "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यात्मनेपदम् । अकार्षम्—कृधातोर्लुङि मिपि "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धिः । मिपश्चाऽमादेशः ।

※भाषाऽर्थः※ रावणके प्रलाप करनेपर कुपित होकर भी कार्यके अविनाशके लिए पूर्वाऽपर विचारकर मैंने पराक्रम नहीं किया ॥ ११३ ॥

**वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा ।**
**जातो रामस्य सुग्रीवस्ततो दूतोऽहमागतः ॥ ११४ ॥**

**अन्वयः**—वानरेषु स्वामी कपिः सुग्रीवः नरेषु अधिपते रामस्य सखा जातः, ततः अहं दूत आगतः ।

**व्याख्या**—वानरेषु = कपिषु, स्वामी=ईश्वरः, कपिः=वानरः, सुग्रीवः=सुग्रीवनामधेयः, नरेषु=मनुष्येषु, अधिपतेः=स्वामिनः, रामस्य=रामचन्द्रस्य, सखा=मित्रं, जातः=संवृत्तः । ततः=तस्य, अहं = हनूमान्, दूतः = सन्देशहरः, आगतः=आयातः, अस्मीति शेषः ।

※व्युत्पत्तिः※ वानरेषु—"स्वामी"ति पदेन योगे "स्वामीश्वराऽधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च" इति सप्तमी, पक्षे षष्ठी च । स्वामी—स्वमस्याऽस्तीति, "स्वामिन्नैश्वर्ये" इत्यामिनच्प्रत्ययाऽन्तो निपातः । नरेषु—"अधिपतेः" इति पदेन योगे "स्वा-

मी"त्यादिना सप्तमी । ततः—तयोरिति "आद्यादिभ्य उपसंख्यानम्" इति सार्वविभक्तिकस्तसिः ।

ॐभाषाऽर्थःॐ वानरोंके स्वामी वानर सुग्रीव मनुष्योंके अधिपति रामके मित्र हो गये हैं, मैं उन दोनोंका दूत होकर आया हूँ ॥ ११४ ॥

युग्मम् ११५-११६ ।

**ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीम् ।**
**कुशलोऽन्वेषणस्याऽहमायुक्तो दूतकर्मणि ॥ ११५ ॥**

**अन्वयः**—अन्वेषणस्य कुशलो दूतकर्मणि आयुक्तः अहं निशाटानाम् ईश्वरस्य निखिलां पुरीं विलोक्य (प्राप्तः) ।

**व्याख्या**—अन्वेषणस्य = गवेषणस्य, कुशलः = निपुणः, दूतकर्मणि=सन्देशहरक्रियायाम्, आयुक्तः=व्यापारितः, अहं = हनूमान्, निशाटानां = निशाचराणां, राक्षसानामित्यर्थः । ईश्वरस्य=अधिपतेः, रावणस्येत्यर्थः । निखिलां=निःशेषां, पुरीं= नगरीं, लङ्कामिति भावः । विलोक्य=दृष्ट्वा, "प्राप्त" इति उत्तरश्लोकस्थपदस्य अध्याहारः ।

ॐव्युत्पत्तिःॐ अन्वेषणस्य—"कुशल" इति पदेन योगे "आयुक्तकुशलाभ्यां चाऽऽसेवायाम्" इति वैकल्पिकी षष्ठी । कुशलः—"प्रवीणे निपुणाऽभिज्ञविज्ञनिष्णातशिक्षिताः । वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि" इत्यमरः । दूतकर्मणि—"आयुक्त" इति पदेन योगे पूर्वसूत्रेणैव वैकल्पिकी सप्तमी । निशाटानां—निशासु अटन्तीति निशाटास्तेषां, पचाद्यच् । "स्वामीश्वराऽधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च" इति षष्ठी पक्षे सप्तमी च । ईश्वरस्य—"ईश्वरः पतिरीशिता" इत्यमरः ।

ॐभाषाऽर्थःॐ अन्वेषणमें कुशल मैं दूतकर्ममें प्रवर्तित होकर राक्षसेश्वर रावणकी संपूर्ण नगरीको देखकर आया हूँ ॥ ११५ ॥

**दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः ।**
**प्राप्तो व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान् ॥ ११६ ॥**

**अन्वयः**—दिव्यासु अपि स्त्रीषु दर्शनीयतमाः स्त्रियः पश्यन् भुजङ्गेभ्योऽपि व्यालतमान् राक्षसान् व्यस्यन् प्राप्तः ।

**व्याख्या**—दिव्यासु अपि = स्वर्गीयासु अपि, स्त्रीषु = नारीषु, देवाङ्गनास्वपीति भावः । दर्शनीयतमाः = अतिरमणीयाः, स्त्रियः=नारीः, पश्यन्=विलोकयन्, भुजङ्गेभ्योऽपि=सर्पेभ्योऽपि, व्यालतमान्=अतिहिंस्रान्, राक्षसान्=यातुधानान्, व्यस्यन्= अपक्षिपन्, प्राप्तः=आसादितः, भवत्याः पादमूलमिति शेषः ।

ॐव्युत्पत्तिःॐ दिव्यासु = दिवि भवा दिव्यास्तासु, "द्युप्रागपागुदक्प्रतीचो यत्"

इति यत्। स्त्रीषु—"यतश्च निर्धारणम्" इति दर्शनीयतमत्वेन गुणेन पृथक्करणात् सप्तमी, पक्षे षष्ठी च। दर्शनीयतमाः—द्रष्टुमर्हा दर्शनीयाः, "तव्यत्तव्यानीयर" इति दृशधातोरनीयर्। अतिशयेन दर्शनीया दर्शनीयतमास्ताः, "अतिशायने तमबिष्ठनौ" इति तमप्प्रत्ययः। भुजङ्गेभ्यः—"पञ्चमी विभक्ते" इति निर्धारणाऽवधिविभागाश्रयात् पञ्चमी। व्यालतमान्—अतिशयेन व्याला व्यालतमास्तान्, पूर्ववत्तमप्। व्यस्यन्—व्यस्यतीति, विपूर्वकात् "असु क्षेपणे" इति दैवादिकाद्धातोर्लटः शत्रादेशः।

※भाषाऽर्थः※ देवललनाओंमें भी अतिरमणीय स्त्रियोंको देखता हुआ सर्पोंसे भी अतिशय हिंस्र राक्षसोंको हटाता हुआ यहां आया हूँ ॥ ११६ ॥

**भवत्यामुत्सुको रामः प्रसितः संगमेन ते ।**
**मघासु कृतनिर्वापः पितृभ्यो मां व्यसर्जयत् ॥ ११७ ॥**

**अन्वयः**—( हे देवि! ) भवत्याम् उत्सुकः ते सङ्गमेन प्रसितो रामो मघासु पितृभ्यः कृतनिर्वापः ( सन् ) मां व्यसर्जयत्।

**व्याख्या**—( हे देवि! ) भवत्यां = त्वयि, उत्सुकः = उत्कण्ठितः, अत एव-ते = तव, सङ्गमेन प्रसितः=सङ्गतौ आसक्तः, रामः=रामचन्द्रः, मघासु = मघानक्षत्र-युक्तकाले, पितृभ्यः = स्वपित्रादिभ्यः, कृतनिर्वापः=दत्तपिण्डोदकः सन्, मां=दूतं, व्यसर्जयत्=विसृष्टवान्, इहेति शेषः।

※व्युत्पत्तिः※ भवत्याम्—"उत्सुक" इति पदेन योगे "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तमी, पक्षे तृतीया च। सङ्गमेन—"प्रसित" इति पदेन योगे पूर्वसूत्रेण तृतीया, पक्षे सप्तमी च। प्रसितः—"तत्परे प्रसिताऽऽसक्तौ" इत्यमरः। मघासु—नक्षत्रेण युक्तः कालः" इत्यणि तस्य "लुबविशेषे" इति लुपि "लुपि युक्तवद्व्यक्तिवचने" इति प्रकृतिलिङ्गवचनत्वात् स्त्रीलिङ्गबहुत्वे "नक्षत्रे च लुपि" इति लुबन्तान्नक्षत्रवाचकशब्दात् सप्तमी, पक्षे तृतीया च। कृतनिर्वापः—कृतो निर्वापो येन सः, "पितृदानं निवापः स्यात्" इत्यमरः। "कृतनीवाप" इति पाठान्तरपक्षे "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्युपसर्गस्य दीर्घत्वम्।

※भाषार्थः※ हे देवि! आपमें उत्कण्ठित और आपकी सङ्गतिमें आसक्त रामचन्द्र-जीने मघानक्षत्रसे युक्त समयमें पितरोंको पिण्डजल देकर मुझे यहां पर भेजा ॥११७॥

**अयं मैथिल्यभिज्ञानं काकुत्स्थस्याऽङ्गुलीयकः ।**
**भवत्याः स्मरताऽत्यर्थमर्पितः सादरं मम ॥ ११८ ॥**

**अन्वयः**—हे मैथिलि! काकुत्स्थस्य अभिज्ञानम् अयम् अङ्गुलीयकः भवत्याः अत्यर्थं स्मरता ( तेन ) मम सादरम् अर्पितः।

**व्याख्या**—हे मैथिलि=हे जानकि! काकुत्स्थस्य = रामस्य, अभिज्ञानं =

चिह्नम्, अयं=सन्निकृष्टस्थः, अङ्गुलीयकः=ऊर्मिका, भवत्याः = तव, त्वामित्यर्थः, स्मरता=ध्यायता, तेनेति शेषः। मम = हनूमतः, सादरम् = आदरपूर्वकम्, अर्पितः= मद्धस्ते न्यस्त इत्यर्थः।

॥व्युत्पत्तिः॥ हे मैथिलि—"सम्बोधने च" इति प्रथमा। काकुत्स्थस्य—"षष्ठी शेषे" इति सम्बन्धे षष्ठी। अभिज्ञानम्—अभिज्ञायते अनेनेति, "कारणाऽधिकरणयोश्च" इति करणे ल्युट्। अङ्गुलीयकः—अङ्गुलौ भवः, "जिह्वामूलाऽङ्गुलेश्छ" इति छप्रत्ययः। अङ्गुलीय एवाऽङ्गुलीयकः, "न सामिवचने" इति ज्ञापितः स्वार्थे कन्। "अङ्गुलीयकमूर्मिका" इत्यमरः। मल्लिनाथसम्मते पाठेऽपि क्लीबलिङ्गतैव। "प्रातिपदिकाऽर्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इति प्रातिपदिकाऽर्थमात्रे प्रथमा। भवत्याः —अधीगर्थेन "स्मरता" इति पदेन योगे "अधीगर्थदयेशां कर्मणि" इति कर्मणि शेषे षष्ठी। सादरम् = आदरेण सहितं यथा तथा।

॥भावाऽर्थः॥ हे मैथिलि! रामचन्द्रजीकी चिह्नभूत यह अंगूठी आपको अतिशय स्मरण करनेवाले उन्होंने आदरके साथ मेरे हाथमें सौंप दी है (१) ॥ ११८ ॥

**रामस्य दयमानोऽसावध्येति तव लक्ष्मणः।**
**उपास्कृषातां राजेन्द्रावागमस्येह मा त्रसीः ॥ ११९ ॥**

**अन्वयः**—रामस्य दयमानः असौ लक्ष्मणः तव अध्येति, राजेन्द्रौ इह आगमस्य उपास्कृषातां, मा त्रसीः।

**व्याख्या**—( हे देवि! ) रामस्य दयमानः = रामे दयां कुर्वन्, असौ = विप्रकृष्टस्थितः, लक्ष्मणः = भवत्या देवरः, तव अध्येति = त्वां स्मरति, राजेन्द्रौ = रामलक्ष्मणौ, इह = लङ्कायाम्, आगमस्य = आगमनस्य, उपास्कृषातां = प्रतियत्नं कृतवन्तौ, मा त्रसीः = मा भैषीः।

॥व्युत्पत्तिः॥ रामस्य—दयधातोः प्रयोगे "अधीगर्थदयेशां कर्मणि" इति षष्ठी। दयमानः—दयत इति, "दय दानगतिरक्षणहिंसादानेषु" इति धातोर्लटः शानच्। तव—अधीगर्थेन "अध्येति" इति पदेन योगे पूर्वसूत्रेणैव कर्मणि षष्ठी। आगमस्य—आगमनमागमस्तस्य "ग्रहवृदृनिश्चिगमश्च" इति भावेऽप्। आगमस्य निश्चितत्वात्तस्यैव सुग्रीवसख्येन गुणाऽऽधानात्, ततः "कृञः प्रतियत्ने" इति कर्मणि षष्ठी। सतो दार्ढ्यं गुणाः, गुणान्तराऽऽधानं प्रतियत्न इति मल्लिनाथः। उपास्कृषाताम्—उपपूर्वकात् कृधातोः "गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" इत्यात्मनेपदम्। लुङि च्लेः सिच्।

(१) अतः परं—"जानीष्व प्रत्यभिज्ञानस्यातस्त्वमपि देवि! ते।
आस्ते भर्तेति मां दृष्ट्वा भर्तुर्दूतं प्रियं कपिम्" ॥
श्लोकोऽयं मल्लिनाथेन व्याख्यातः, अस्माभिस्तु जयमङ्गलभरताभ्यामस्पृष्टत्वादुपेक्षितः।

"उपात्प्रतियत्नवैकृतवाक्याऽध्याहारेषु च" इति सुट् ककारात्पूर्वः । मा त्र उद्वेगे" इति धातोः "माङि लुङ्" इति लुङि "न माङ्योगे" इत्यटोऽभावे सिचि "नेटि" इति वृद्धिप्रतिषेधः । "इट ईटि" इति सलोपः ।

ॐभाषाऽर्थःॐ हे देवि ! रामचन्द्रजीमें दया करते हुए वे लक्ष्मण आपका स्मरण करते हैं, राजेन्द्र राम और लक्ष्मणने यहां आनेके लिए गुणका आधान किया है, आप मत डरें ॥ ११९॥

**रावणस्येह रोदयन्ति कपयो भीमविक्रमाः ।**
**धृत्या नाथस्व वैदेहि ! मन्योरुज्जासयाऽऽत्मनः ॥ १२०॥**

**अन्वयः**--इह भीमविक्रमाः कपयो रावणस्य रोदयन्ति । हे वैदेहि ! धृत्याः नाथस्व, आत्मनो मन्योः उज्जासय ।

**व्याख्या**--इह = अत्र, लङ्कायामित्यर्थः । भीमविक्रमाः=दारुणपराक्रमाः, कपयः = वानराः, रावणस्य रोदयन्ति=रावणं भङ्क्ष्यन्तीत्यर्थः । हे वैदेहि = हे मैथिलि ! धृत्याः नाथस्व = धैर्यमवलम्बस्व, आत्मनः = स्वस्य, मन्योः उज्जासय = शोकं नाशय ।

ॐव्युत्पत्तिःॐ रावणस्य—"रोदयन्ति" इति पदेन योगे "रुजार्थानां भाववचनानामज्वरेः" इति भावकर्तृकरुजाऽर्थयोगात् कर्मणि षष्ठी । रोदयन्ति—"रुजो भङ्गे" इति धातोर्लट् । धृत्याः—"नाथस्व" इति पदेन योगे "आशिषि नाथ" इति कर्मणि षष्ठी । नाथस्व—"नाथृ (नाधृ) याच्ञोपतापैश्वर्याशीःषु" इति धातोः "आशिषि नाथ इति वाच्यम्" इत्यात्मनेपदम् । लोटि रूपम् । मन्योः—"उज्जासये"ति पदेन योगे "जासिनिप्रहणनाटक्राथपिषां हिंसायाम्" इति कर्मणि शेषे षष्ठी । उज्जासय—उत्पूर्वात् "जसु हिंसायाम्" इति धातोर्लोट् ।

ॐभाषाऽर्थःॐ यहां भीषण पराक्रमवाले वानर रावणको भङ्ग (नष्ट) करेंगे । हे मैथिलि ! धैर्यका अवलम्बन कीजिए, अपने शोकको नष्ट कीजिए ॥ १२० ॥

**राक्षसानां मयि गते रामः प्रणिहनिष्यति ।**
**प्राणानामपणिष्टाऽयं रावणस्त्वामिहानयत् ॥ १२१ ॥**

**अन्वयः**—( हे देवि ! ) मयि गते रामो राक्षसानां प्रणिहनिष्यति, अयं रावणः त्वाम् इह आनयन् प्राणानाम् अपणिष्ट ।

**व्याख्या**—( हे देवि ! ) मयि=हनूमति, गते=याते, इत इति शेषः । रामः= रामचन्द्रः, राक्षसानां प्रणिहनिष्यति = राक्षसान् मारयिष्यतीत्यर्थः । अयम्=एषः, रावणः = दशाननः, त्वाम्=भवतीम् , इह = लङ्कायाम् , आनयन् = प्रापयन् , प्राणा-

नाम् अपणिष्ट=प्राणान् विक्रीतवानित्यर्थः । रावणकर्तृकं प्रसह्येह त्वदानयनं प्राणविक्रयसदृशमहो रावणस्याविमृश्यकारितेति भावः ।

॥व्युत्पत्तिः॥ मयि गते—"यस्य च भावेन भावलक्षणम्" इति सप्तमी । राक्षसानां—"प्रणिहनिष्यति" इति पदेन योगे "जासिनिप्रहणनाटक्राथपिषां हिंसायाम्" इति कर्मणि षष्ठी । तत्र सूत्रे निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा इति व्याख्यानात् । प्रणिहनिष्यति—"नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च" इति णत्वम् । प्राणानाम्—"अपणिष्टे"ति पदेन योगे "व्यवहृपणोः समर्थयोः" इति कर्मणि षष्ठी । अपणिष्ट—व्यवहाराऽर्थात्पणधातोरात्मनेपदे लुङ् । अस्तुत्यर्थत्वात् "गुपूधूपविच्छिपणिपनिभ्य आय" इति न आयप्रत्ययः ।

॥भाषाऽर्थः॥ हे देवि ! मेरे जानेपर रामचन्द्रजी राक्षसोंको मारेंगे, आपको यहां लाते हुए रावणने प्राणोंको बेचा ॥ १२१ ॥

अदेवीद् बन्धुभोगानां प्रादेवीदात्मसंपदम् ।
शतकृत्वस्तवैकस्याः स्मरत्यह्नो रघूत्तमः ॥ १२२ ॥

**अन्वयः**— ( रावणः ) बन्धुभोगानाम् अदेवीत्=आत्मसंपदं ( च ) प्रादेवीत् । ( हे देवि ! ) रघूत्तमः अह्नः शतकृत्वः एकस्याः तव स्मरति ।

**व्याख्या**— ( रावणः ) बन्धुभोगानाम् अदेवीत् = बान्धवभोगानाम् विक्रीतवानित्यर्थः । किञ्च—आत्मसंपदं च=स्वलक्ष्मीं च, प्रादेवीत्=विक्रीतवान् । ( हे देवि ! ) रघूत्तमः=राघवश्रेष्ठः, राम इत्यर्थः । अह्नः = एकस्मिन्नहनि, शतकृत्वः = शतवारं, तव स्मरति = त्वां स्मरति ।

॥व्युत्पत्तिः॥ बन्धुभोगानां=क्रयविक्रयरूपव्यवहाराऽर्थस्य, दिवधातोर्योगे "दिवस्तदर्थस्य" इति कर्मणि षष्ठी । आत्मसंपदं="प्रादेवीत्" इत्यत्र उपसर्गयोगात् "विभाषोपसर्गे" इति षष्ठ्या वैकल्पिकत्वात्पक्षे द्वितीया । रघूत्तमः=रघुषु ( लक्षणया—रघुवंशोद्भवेषु राजसु ) उत्तमः, "यतश्च निर्द्धारणम्" इति निर्द्धारणे सप्तमी, ततः समासः । अह्नः—"कृत्वोर्थप्रयोगे कालेऽधिकरणे" इति अधिकरणे षष्ठी । शतकृत्वः= "संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्" इति कृत्वसुच् । तव— अधीगर्थस्य स्मृधातोर्योगे "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी ।

॥भाषाऽर्थः॥ रावणने बान्धवोंके भोगोंको और अपनी सम्पत्तिको भी बेचा । हे देवि ! रामचन्द्रजी दिनमें सौ बार एक आपका स्मरण करते हैं ॥ १२२ ॥

तवोपशायिका यावद् राक्षस्यश्चेतयन्ति न ।
प्रतिसंदिश्यतां तावद् भर्तुः शार्ङ्गस्य मैथिलि ! ॥ १२३ ॥

**अन्वयः**— हे मैथिलि ! तव उपशायिका राक्षस्यो यावत् न चेतयन्ति, तावत् शार्ङ्गस्य भर्तुः प्रतिसन्दिश्यताम् ।

**व्याख्या**— हे मैथिलि = हे जानकि !, तव=भवत्याः, उपशायिकाः=पर्यायशायिन्यः, राक्षस्यः=रक्षःस्त्रियः, यावत्=यत्कालपर्यन्तं, न चेतयन्ति=न प्रबुध्यन्ते, तावत्=तत्कालपर्यन्तं, शार्ङ्गस्य = धनुर्विशेषस्य, भर्तुः=धारकस्य, रामस्येत्यर्थः । प्रतिसन्दिश्यतां=प्रतिसन्देशः क्रियतां, त्वयेति शेषः ।

॥व्युत्पत्तिः॥ उपशायिकाः—"पर्यायाऽर्हणोत्पत्तिषु ण्वुच्" इति ण्वुच् । शार्ङ्गस्य—शृङ्गस्य विकारः शार्ङ्गं, "तस्य विकार" इत्यण् । "भर्तुः" इति कृदन्तपदेन योगे "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी । भर्तुः—शेषे षष्ठी ।

॥भाषाऽर्थः॥ हे वैदेहि ! आपके पास पारी पारीसे सोनेवाली राक्षसियां जब तक नहीं जागती हैं, तब तक शार्ङ्ग नामक धनुको लेने वाले रामचन्द्रजोके सन्देशका उत्तर दीजिए" ॥ १२३ ॥

**पुरः प्रवेशमाश्चर्यं बुद्ध्वा शाखामृगेण सा ।**
**चूडामणिमभिज्ञानं ददौ रामस्य संमतम् ॥ १२४ ॥**

**अन्वयः**—सा शाखामृगेण पुरः प्रवेशम् आश्चर्यं बुद्ध्वा रामस्य संमतं चूडामणिम् अभिज्ञानं ददौ ।

**व्याख्या**—सा = सीता, शाखामृगेण = वानरेण, पुरः = नगर्याः, लङ्काया इत्यर्थः, प्रवेशं = प्रवेशनम्, आश्चर्यम् = अद्भुतं, बुद्ध्वा = मत्वा, रामस्य=रामचन्द्रस्य, सम्मतं = सम्मन्यमानं, प्रियमित्यर्थः । चूडामणिं=शिरोरत्नम्, अभिज्ञानं = चिह्नं, ददौ = दत्तवती ।

॥व्युत्पत्तिः॥ शाखामृगेण—शाखाचारी मृगः शाखामृगस्तेन, कर्त्रा, "शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम्" इति मध्यमपदलोपी समासः । "प्रवेशम्" इति कृदन्तपदेन योगे "कर्तृकर्मणोः कृति" इति कर्तरि षष्ठ्य प्राप्तायाम् "पुर" इत्यस्य च तद्योगे कर्मणि षष्ठ्यां च प्राप्तायाम्, "उभयप्राप्तौ कर्मणि" इति कर्मण्येव षष्ठी । "कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ।" इत्यमरः । रामस्य—वर्तमानाऽर्थेन "संमतम्" इति क्तप्रत्ययान्तपदेन योगे "न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति प्रतिषेधबाधेन "क्तस्य च वर्तमाने" इति षष्ठी । संमतं—"मतिबुद्धिपूजाऽर्थेभ्यश्च" इति वर्तमाने क्तः । मतिरिहेच्छा बुद्धेः पृथगुपादानात् । चूडामणिं—"चूडामणिः शिरोरत्नम्" इत्यमरः ।

॥भाषाऽर्थः॥ सीताजीने हनूमान्के लङ्काप्रवेशको आश्चर्य जानकर रामके प्रिय शिरोमणिको चिह्नके रूपमें दिया ॥ १२४ ॥

**रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम् ।**
**प्रक्रान्तं च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् ॥ १२५ ॥**

**अन्वयः**—( सा ) रामस्य शयितं भुक्तं जल्पितं हसितं स्थितं प्रक्रान्तं च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् ।

**व्याख्या**—( सा = सीता ) रामस्य = रामचन्द्रस्य, शयितं = शयनस्थानं, भुक्तं = भोजनस्थानं, जल्पितं = जल्पनं, कस्मिन् विषये जल्पति इति भावः । हसितं= हसनं, कस्मिन्प्रसङ्गे हसतीति तात्पर्यम् । स्थितं=निवासस्थानं, कुत्र निवासं करोतीति भावः । प्रक्रान्तं च=प्रचङ्क्रमणस्थानं च, कुत्र गच्छतीति तात्पर्यम् । मुहुः = वारं वारं, पृष्ट्वा=अनुयुज्य, हनूमन्तं=वाताऽऽत्मजं, व्यसर्जयत्=प्रेषितवती ।

**॥व्युत्पत्तिः॥** रामस्य—"शयितं" "भुक्तं" "स्थितं" "प्रक्रान्तं" चेत्याद्यधिकरणाऽर्थक्तप्रत्ययाऽन्तपदैर्योगे "अधिकरणवाचिनश्च" इति षष्ठी । "जल्पितम्" "हसितम्" इति पदाभ्यां योगे तु सम्बन्धसामान्ये षष्ठी । शयितं—शेतेऽस्मिन्निति, "क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानाऽर्थेभ्य" इति ध्रौव्यार्थाद्धातोः अधिकरणे क्तः । भुक्तं—भुङ्क्तेऽस्मिन्निति, प्रत्यवसानाऽर्थात् ( भक्षणाऽर्थात् ) धातोः तत्रैव पूर्वेण क्तः । जल्पितं—जल्पनं, "नपुंसके भावे क्त" इति भावे क्तः । हसितं—हसनं, पूर्वसूत्रादेव भावे क्तः । स्थितं—तिष्ठत्यस्मिन्निति, ध्रौव्याऽर्थात् ( स्थैर्यार्थात् ) धातोः "क्तोऽधिकरणे चे"त्यादिनाऽधिकरणे क्तः, प्रक्रान्तं—प्रकामति ( गच्छति ) अस्मिन्निति, गत्यर्थाद्धातोः पूर्वसूत्रेणैवाऽधिकरणे क्तः, "अनुनासिकस्य क्विझलोः क्ङिति" इति उपधाया दीर्घत्वम् ।

**॥भाषाऽर्थः॥** सीताने रामका शयनस्थान, भोजनस्थान, बोलना, हंसना, निवासस्थान और घूमनेके स्थानको भी वारंवार पूछकर हनूमान् को भेजा ॥ १२५ ॥

**असौ दधदभिज्ञानं चिकीर्षुः कर्म दारुणम् ।**
**गामुकोऽप्यन्तिकं भर्तुर्मनसाऽचिन्तयत् क्षणम् ॥ १२६ ॥**

**अन्वयः**—असौ अभिज्ञानं दधत् दारुणं कर्म चिकीर्षुः ( सन् ) भर्तुः अन्तिकं गामुकः अपि मनसा क्षणम् अचिन्तयत् ।

**व्याख्या**—असौ = हनूमान्, अभिज्ञानं=चिह्नं, चूडामणिरूपमित्यर्थः । दधत्= धारयन्, दारुणं = भीषणं, कर्म = कार्यं, वनभङ्गादिरूपमिति भावः । चिकीर्षुः = कर्तुमिच्छुः सन् , भर्तुः=स्वामिनः, रामस्येत्यर्थः । अन्तिकं=समीपं, गामुकोऽपि=गमनशीलोऽपि, मनसा = चित्तेन, क्षणं=कञ्चित्कालम्, अचिन्तयत् = आलोचितवान् ।

**॥व्युत्पत्तिः॥** अभिज्ञानं—"दधत्" इति कृदन्तपदेन योगे "कर्तृकर्मणोः कृति" इति प्राप्तायाः कर्मणि षष्ठ्याः "न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति लादेशप्रयोगे निषेधः । कर्म—"चिकीर्षुः" इति कृदन्तपदेन योगे प्राप्तायाः कर्मणि षष्ठ्याः उकार-

प्रश्लेषात् पूर्ववत्प्रतिषेधः। चिकीर्षुः—"सन्नन्तात्कृधातोरुः। अन्तिकं—"गामुक" इति उकञ्प्रत्ययान्तेन पदेन योगे प्राप्तायाः कर्मणि षष्ठयाः पूर्ववत्प्रतिषेधः। गामुकः= गच्छतीति तच्छीलः, "लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्" इत्युकञ्। क्षणं— "कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया।

ॐभाषाऽर्थःॐ चिह्नभूत अंगूठी को धारण करते हुए और भीषण कर्म करने की इच्छा रखते हुए हनूमान्‌जीने स्वामी रामके समीप गमनशील होकर भी मनसे कुछ समय तक विचार किया ॥ १२६ ॥

अथ त्रिभिश्चिन्ताप्रकारमेवाऽऽह—

'कृत्वा कर्म यथाऽऽदिष्टं पूर्वकार्याऽविरोधि यः।
करोत्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमम्॥ १२७॥

अन्वयः—"यो यथाऽऽदिष्टं कर्म कृत्वा पूर्वकार्याऽविरोधि अभ्यधिकं कृत्यं करोति, तम् उत्तमं दूतम् आहुः।

व्याख्या—यः=दूतः, यथाऽऽदिष्टं=स्वामिन आदिष्टाऽनुसारं, कर्म = क्रियां, कृत्वा=विधाय, पूर्वकार्याऽविरोधि=प्राक्कर्मवैफल्याऽनापादकम्, अभ्यधिकं=स्वाम्यादिष्टात् अतिरिक्तं, कृत्यं=कार्यं, करोति=विदधाति, तं=तादृक्कर्मनिर्वाहकम्, उत्तमं= श्रेष्ठं, दूतं = सन्देशहरम् , आहुः=कथयन्ति, नीतिवेत्तार इति शेषः।

ॐव्युत्पत्तिःॐ यथाऽऽदिष्टम्—आदिष्टमनतिक्रम्य, पदाऽर्थाऽनतिवृत्तिरूपे यथाऽर्थे अव्ययीभावः। कर्म—"कृत्वे"ति कृदन्तपदेन योगे "कर्तृकर्मणोः कृति" इति प्राप्तायां कर्मणि षष्ठयाम् अव्यययोगात् "न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति प्रतिषेधः। पूर्वकार्याऽविरोधि—पूर्वकृतं कार्यं पूर्वकार्यं, तस्य अविरोधि पूर्वकार्याऽविरोधि, तत्।

ॐभाषार्थःॐ "जो स्वामीकी आज्ञाके अनुसार कर्म करके पूर्वकर्मसे विरोध न रखनेवाला अधिक कर्म करता है, उसे उत्तम दूत कहते हैं ॥ १२७ ॥

वैदेहीं दृष्टवान् कर्म कृत्वाऽन्यैरपि दुष्करम्।
यशो यास्याम्युपादाता वार्तामाख्यायकः प्रभोः॥ १२८॥

अन्वयः—( अहम् ) वैदेहीं दृष्टवान्, अन्यैः अपि दुष्करं कर्म कृत्वा यश उपादाता ( सन् ) प्रभोः वार्ताम् आख्यायको यास्यामि।

व्याख्या—( अहम् ) वैदेहीं = जानकीं, दृष्टवान् = अद्राक्षम् , अन्यैः अपि = अपरैः अपि, क्वचित् "अन्यदपि" इति पाठः। तत्र स्वाम्यादिष्टादधिकमपि इत्यर्थः। दुष्करं = दुःखेन क्रियमाणं, कर्म = क्रियां, कृत्वा = विधाय, यशः = कीर्तिम्, उपा-

दाता = साधु सम्पादयिता सन्, प्रभोः = स्वामिनः, रामस्येत्यर्थः । वार्ता = सीतावृत्तान्तम्, आख्यायकः = आख्यास्यन्, यास्यामि = गमिष्यामि ।

❀व्युत्पत्तिः❀ वैदेहीं—"दृष्टवान्" इति कृदन्तपदेन योगे प्राप्तायाः कर्मणि षष्ठ्याः, तस्य पदस्य निष्ठाप्रत्ययान्तत्वात् "न लोकाऽव्ययनिष्ठे"त्यादिना प्रतिषेधः । अन्यैः—"दुष्करम्" इति कृदन्तपदेन योगे प्राप्तायाः कर्तरि षष्ठयास्तस्य पदस्य खल्प्रत्ययान्तत्वात् "न लोकाऽव्यये"त्यादिना निषेधः । दुष्करं = दुःखेन क्रियत इति दुष्करं, तत्, "ईषद्दुःसुषु कृच्छ्राऽकृच्छ्राऽर्थेषु खल्" इति खल् । यशः—"उपादाते"ति कृदन्तपदेन योगे प्राप्तायाः कर्मणि षष्ठ्यास्तस्य तृन्नन्तत्वात् "न लोकाऽव्यये"त्यादिना प्रतिषेधः । उपादाता—साधु उपादत्ते इति "तृन्" इति तृन् । वार्ताम्—"आख्यायक" इति कृदन्तपदेन योगे प्राप्तायाः कर्मणि षष्ठ्याः "अकेनोर्भविष्यदाधमर्ण्ययोः" इति प्रतिषेधः । आख्यायकः—आख्यास्यतीति "तुमुण्ण्वुलौ क्रियायां क्रियाऽर्थायाम्" इति भविष्यदर्थे ण्वुल्प्रत्ययः ।

❀भाषाऽर्थः❀ मैंने सीताजीको देखा, ( अब मैं ) औरोंसे भी दुष्कर कर्म कर यशको अच्छी तरहसे उपार्जन करता हुआ प्रभु रामको सीताका वृत्तान्त कहने के लिए जाऊंगा ॥ १२८ ॥

**राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनम् ।'**
**इति संचिन्त्य सदृशं नन्दनस्याऽभनक् कपिः ॥ १२९ ॥**

**अन्वयः**—राक्षसेन्द्रस्य संरक्ष्यं नन्दनस्य सदृशम् इदं वनं मया लव्यम्, इति संचिन्त्य कपिः अभनक् ।

**व्याख्या**—राक्षसेन्द्रस्य = राक्षसेश्वरस्य, रावणस्येत्यर्थः । संरक्ष्यं = संरक्षणीयं, नन्दनस्य = स्वर्गोपवनस्य, सदृशं = तुल्यम्, इदम् = एतत्, वनम् = रावणोपवनं, मया = हनूमता, लव्यं = छेद्यम्, इति = एवं, संचिन्त्य = आलोच्य, कपिः = हनूमान्, अभनक् = भग्नवान्, तद्वनमिति शेषः ।

❀व्युत्पत्तिः❀ राक्षसेन्द्रस्य—"संरक्ष्यम्" इति कृत्यप्रत्ययाऽन्तेन योगे "कृत्यानां कर्तरि वा" इति कर्तरि वैकल्पिकी षष्ठी, पक्षे तृतीया च । संरक्ष्यं—संरक्षितुं योग्यम्, "अर्हे कृत्यतृचश्च" इति नियमः । "ऋहलोर्ण्यत्" इति ण्यत् । नन्दनस्य—तुल्यार्थस्य सदृशपदस्य योगे "तुल्याऽर्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इति षष्ठी, पक्षे तृतीया च । मया—"लव्यम्" इति कृत्यप्रत्ययाऽन्तेन योगे "कृत्यानां कर्तरि वा" इति षष्ठ्या वैकल्पिकत्वात् पक्षे तृतीया । लव्यं—लवितुं योग्यम्, "लूञ् छेदने" इति धातोः "अचो यत्" इति यत् । अभनक्—"भञ्जो आमर्दने" इति धातोर्लङ् । "श्नान्नलोपः" इति नलोपे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति हलो लोपः । "चोः कुः" इति कुत्वं च ।

❀भाषाऽर्थः❀ रावणसे संरक्षणीय नन्दन कानन के सदृश इस वनको मुझे छेदन करना चाहिए।" ऐसा विचारकर हनुमानजीने वनको भङ्ग किया ॥ १२९ ॥

**राघवाभ्यां शिवं, दूतस्तयोरहमिति ब्रुवन्।**
**हितो भनज्मि रामस्य, कः किं ब्रूतेऽत्र राक्षसः ॥ १३० ॥**

**अन्वयः**—"राघवाभ्यां शिवम् ( अस्तु ) अहं तयोः दूतः रामस्य हितः इति ब्रुवन् भनज्मि, अत्र को राक्षसः किं ब्रूते" ( इति पवनात्मजो रिपुवनं बभञ्ज )।

**व्याख्या**—राघवाभ्यां = रामलक्ष्मणाभ्यां, शिवं = भद्रम्, अस्त्विति शेषः। अहं = हनूमान्, तयोः = रामलक्ष्मणयोः, दूतः = संदेशहरः, रामस्य = रामचन्द्रस्य, हितः = आप्तः, इति = एवं, ब्रुवन् = कथयन्, भनज्मि = भङ्क्ष्यामि, वनमिति शेषः। अत्र = अस्मिन्कर्मणि, कः = कतमः, राक्षसः = यातुधानः, किं ब्रूते = किं कथयति, रामकार्यप्रवृत्तस्य मम कोऽपि प्रतिबन्धको न भविष्यतीति भावः। इति ( इत्थं विचार्य ) पवनात्मजो रिपुवनं बभञ्जेति उत्तरश्लोकस्थपदैः सम्बन्धः।

❀व्युत्पत्तिः❀ राघवाभ्यां—भद्राऽर्थकेन "शिवम्" इति पदेन योगे "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखाऽर्थहितैः" इति वैकल्पिकी चतुर्थी आशिषि, पक्षे षष्ठी। रामस्य—"हित" इति पदेन योगे पूर्वसूत्रेणैव षष्ठी। भनज्मि—भञ्जेर्लट्।

❀भाषाऽर्थः❀ "राम और लक्ष्मणका कल्याण हो, मैं उन दोनोंका दूत और रामका आप्त हूँ" ऐसा कहता हुआ वनको भङ्ग करता हूँ, इस काममें कौन राक्षस क्या कहता है" ऐसा सोचकर हनूमानूजीने शत्रुके वनको भङ्ग किया ॥ १३० ॥

अथ सर्गाऽन्तत्वाद्भिन्नवृत्तं श्लोकमाह—विलुलितेति।

**विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं**
**कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम्।**
**शकुननिनादनादिककुब् विलोलविपलायमानहरिणं**
**हरिणविलोचनाऽधिवसतिं बभञ्ज पवनाऽऽत्मजो रिपुवनम् ॥१३१॥**

**अन्वयः**—पवनाऽऽत्मजो विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनं शकुननिनादनादितककुप् विलोलविपलायमानहरिणं हरिणविलोचनाऽधिवसतिं रिपुवनं बभञ्ज।

**व्याख्या**—पवनाऽऽत्मजः = हनूमान्, विलुलितपुष्परेणुकपिशं = विक्षिप्तपरागपिशङ्गं, प्रशान्तकलिकापलाशकुसुमं = प्रसन्नकोरकपर्णपुष्पं, कुसुमनिपातविचित्रवसुधं = पुष्पनिपतनकर्बुरवसुन्धरं, सशब्दनिपतद्द्रुमोत्कशकुनं = सध्वनिप्रवरद्वृक्षो-

त्सुकविहङ्गं, शकुननिनादनादितककुप् = पक्ष्यारावप्रतिध्वानितदिशं, विलोलविपलायमानहरिणं = चपलनश्यन्मृगं, हरिणविलोचनाऽधिवसतिं = सीतावासस्थानं, रिपुवनं = रावणोद्यानं, बभञ्ज=भग्नवान् ।

❀व्युत्पत्तिः❀ विलुलितपुष्परेणुकपिशं—विलुलिता ये पुष्परेणवस्तैः कपिशम् । प्रशान्तकलिकापलाशकुसुमं—प्रशान्तानि कलिकापलाशकुसुमानि यस्मिंस्तत् । कुसुमनिपातविचित्रवसुधं—कुसुमानां निपातेन विचित्रा वसुधा यस्मिंस्तत् । सशब्दनिपतद्द्रुमोत्कशकुनं-सशब्दा निपतन्तो द्रुमोत्काः शकुना यस्मिंस्तत् । शकुननिनादनादितककुप्—शकुनानां निनादैः नादिताः ककुभो यस्मिंस्तत् । क्वचित् "ककुब्" इत्यस्य स्थाने "दिशम्" इति पाठस्तत्र "आपं चैव हलन्तानां यथा वाचा निशा दिशा" इति वचनात् टाबन्तस्य उपसर्जनह्रस्वत्वम् । "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।" इत्यमरः । विलोलविपलायमानहरिणं—विलोला विपलायमानाः हरिणा यस्मिंस्तत् । "विपलायमाना" इत्यत्र "उपसर्गस्याऽयतौ" इति रेफस्य लत्वम् । हरिणविलोचनाऽधिवसतिं—हरिणस्येव विलोचने यस्याः सा हरिणविलोचना, तस्या अधिवसतिम् । वैकृतम् ( त्रयोविंशत्यक्षरात्मकम् ) अश्वललितं वृत्तम् । तल्लक्षणं यथा—

"यदिह नजौ भजौ भजभलगास्तदाऽश्वललितं शिवाऽर्कयति तद् ।" इति ।

❀भाषाऽर्थः❀ हनुमान्जीने बिखरे हुए फूलोंके परागोंसे पीतवर्ण, सुन्दर कली, पत्ते और फूलोंसे युक्त, फूलोंके गिरनेसे विचित्र भूमिवाली, जहांपर निवास-वृक्षमें उत्कण्ठित पक्षी शब्दपूर्वक घूम रहे हैं, पक्षियोंके शब्दसे प्रतिध्वनिवाली दिशाओंसे युक्त और जहांपर चञ्चल मृग भाग रहे हैं, सीताके वासस्थान; ऐसे शत्रुके उद्यान को भङ्ग किया ॥ १३१ ॥

इत्यनभिहिताऽधिकारः ।

इति चन्द्रकलाऽख्यया नव्यव्याख्यया मण्डिते श्रीभट्टिकाव्ये द्वितीयेऽधिकारकाण्डे लक्षणरूपे तृतीयः परिच्छेदः (वर्गः), तथा लक्ष्यरूपे कथानकेऽशोकवनिकाभङ्गो नामाऽष्टमः सर्गः ।

# अथ नवमः सर्गः ।

अथ प्रकीर्णकाः ।

द्रुभङ्गध्वनिसंविग्नाः कुवत्पक्षिकुलाऽऽकुलाः ।
अकार्षुः क्षणदाचर्यो रावणस्य निवेदनम् ॥ १ ॥

**अन्वयः**—द्रुभङ्गध्वनिसंविग्नाः कुवत्पक्षिकुलाऽऽकुलाः क्षणदाचर्यो रावणस्य निवेदनं चक्रुः ।

**व्याख्या**—द्रुभङ्गध्वनिसंविग्नाः = वृक्षभङ्गशब्दसंभीताः, कुवत्पक्षिकुलाऽऽकुलाः = कूजद्विहङ्गसमूहव्याकुलचित्ताः, क्षणदाचर्यः = राक्षस्यः, रावणस्य=दशाऽऽननस्य, निवेदनं = विज्ञापनं, वक्ष्यमाणप्रकारेणेति शेषः । चक्रुः=कृतवत्यः ।

**व्युत्पत्तिः** द्रुभङ्गध्वनिसंविग्नाः—द्रूणां भङ्गो द्रुभङ्गः, "पलाशी द्रुद्रुमाऽगमाः" इत्यमरः । तेन ध्वनिस्तेन संविग्नाः, "ओविजी भयचलनयोः" इति धातोः क्तप्रत्ययः । "ओदितश्च" इति निष्ठानत्वम् । कुवत्पक्षिकुलाऽऽकुलाः—कुवन्तीति कुवन्तः, "कु शब्दे" इत्यदादिगणस्थाद्धातोर्लटः शत्रादेशः । "कूजत्" इति मल्लिनाथसंमतः पाठः । कुवन्तो ये पक्षिणस्तेषां कुलं, तेन आकुलाः । क्षणदाचर्यः—क्षणदासु चरन्तीति "चरेष्ट" इति टः, टित्वात्स्त्रीत्वविवक्षायां "टिड्ढाणञि"त्यादिना ङीप् । रावणस्य—शेषे षष्ठी ।

**भाषाऽर्थः** पेड़ोंके टूटनेके शब्दसे डरी हुई, शब्द करनेवाले पक्षियोंके समूहसे आकुल राक्षसियोंने रावणके पास जाकर निवेदन किया ॥ १ ॥

यदताप्सीच्छनैर्भानुर्यत्राऽवासीन्मितं मरुत् ।
यदाप्यानं हिमोस्रेण भनक्त्युपवनं कपिः ॥ २ ॥

**अन्वयः**—यत् भानुः शनैः अताप्सीत्, यत्र मरुत् मितम् अवासीत्, यत् हिमोस्रेण आप्यानं, (तत्) उपवनं कपिः भनक्ति ।

**व्याख्या**—यत् = उपवनं, भानुः = सूर्यः, शनैः = मन्दम्, अताप्सीत् = तपति स्म, त्वदाज्ञयेति भावः । यत्र = उपवने, मरुत् = वायुः, मितं = मन्दम्, अवासीत् = वाति स्म, यत् = उपवनं, हिमोस्रेण = शिशिरकिरणेन, चन्द्रमसेत्यर्थः । आप्यानं = वर्द्धितम्, (तत् = तादृशम्) उपवनम् = उद्यानं, कपिः = कोऽपि अनिर्दिष्टः वानरः, भनक्ति = चूर्णयति, इति निवेदनमकार्षुरिति पूर्वेण सम्बन्धः ।

**व्युत्पत्तिः** अताप्सीत्—"तप सन्तापे" इति धातोर्लुङ् । "वदव्रजहलन्तस्या-

ञ्चः" इति वृद्धिः । अवासीत्—"वा गतिगन्धनयोः" इति धातोर्लुङ् । "यम-रमनमातां सक् च" इति सगिटौ । हिमोस्रेण—हिमा उस्रा यस्य सः हिमोस्रस्तेन, "किरणोस्रमयूखांऽशुगभस्तिघृणिघृष्णयः ।" इत्यमरः । आप्यानम्, आङ्पूर्वकात् "ओप्यायी वृद्धौ" इति धातोः कर्मणि क्तः, "ओदितश्च" इति निष्ठानत्वे "लोपो व्योर्व-लि" इति यलोपः ।

ॐभाषाऽर्थःॐ जिस उपवनको सूर्य धीरे धीरे ताप करते थे, जहां वायु धीरे धीरे बहता था, जो ( उपवन ) चन्द्रसे बढ़ा है; उस उपवनको कोई वानर भङ्ग कर रहा है ॥ २ ॥

**ततोऽशीतिसहस्राणि किङ्कराणां समादिशत् ।**
**इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः ॥ ३ ॥**

**अन्वयः**—तत इन्द्रजित्सूः क्रोधमूर्च्छितः ( सन् ) मारुतेः विनाशाय किङ्कराणाम् अशीतिसहस्राणि समादिशत् ।

**व्याख्या**—ततः = निवेदनाऽनन्तरम्, इन्द्रजित्सूः = मेघनादजनकः, रावण इत्यर्थः । क्रोधमूर्च्छितः = कोपऽन्धः सन्, मारुतेः = हनूमतः, विनाशाय = वधाय, किङ्कराणां = भृत्यानाम्, अशीतिसहस्राणि = अशीतिसहस्रसंख्यानि सैन्यानि, समादिशत् = समादिष्टवान् ।

ॐव्युत्पत्तिःॐ इन्द्रजित्सूः—इन्द्रजितं सूते इति, "सत्सूद्विषे"त्यादिना क्विप् । किङ्कराणां—किं कुर्वन्तीति किङ्करास्तेषां, "दिवाविभानिशाप्रभाभास्कराऽन्तानन्तादिकि"मित्यादिना टः । अशीतिसहस्राणि—दशानां वर्गो दशत् "पञ्चद्दशतौ वर्गे वा" इति निपातः । अष्टौ दशतः परिमाणमस्य सङ्घस्य, अशीतिः "पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्" इति तिप्रत्ययः प्रकृतेरशीत्यादेशः । अशीतिपरिमाणानि सहस्राणि अशीतिसहस्राणि, तानि, मध्यमपदलोपी समासः ॥३॥

ॐभाषाऽर्थःॐ तब रावणने क्रोधसे मूर्च्छित होकर हनूमान्जीको मारनेके लिए अस्सी हजार भृत्योंको आज्ञा दी ॥ ३ ॥

**शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः ।**
**व्यश्नुवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः ॥ ४ ॥**

**अन्वयः**—शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः दृष्टिविषोपमाः ( ते ) दिशो व्यश्नुवानाः ( सन्तः ) वनं प्रापुः ।

**व्याख्या**—शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः = कासूखड्गपरिघातककुन्त-गदाद्रुघणकराः, दृष्टिविषोपमाः = सर्पसदृशाः, दृष्टयैव परप्राणहारिण इति भावः ।

( ते = रावणकिङ्कराः ) दिशः = आशाः, व्यश्नुवानाः = व्याप्नुवन्तः सन्तः, वनं= रावणोपवनं, प्रापुः = प्राप्तवन्तः ।

ॐव्युत्पत्तिःॐ शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः—शक्तिश्च ऋष्टिश्च परिघश्च प्रासश्च गदा च मुद्गरश्च शक्त्यृष्टिपरिघप्रासगदामुद्गराः, ते (प्रहरणविशेषाः) पाणौ येषां ते, व्यधिकरणबहुव्रीहिः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति सप्तम्यन्तस्य पाणिपदस्य परनिपातः । दृष्टिविषोपमाः—दृष्ट्योर्विषं येषां ते दृष्टिविषाः, "सप्तमीविशेषणे बहुव्रीहौ" इति सप्तम्यन्तविशेषणस्य दृष्टिपदस्य पूर्वप्रयोगः । दृष्टिविषा उपमा येषां ते । व्यश्नुवानाः—व्यश्नुवत इति व्यश्नुवानाः, विपूर्वकात् "अशूङ् व्याप्तौ" इति सौवादिकधातोर्लटः शानच् ।

ॐभाषाऽर्थःॐ शक्ति, खड्ग, परिघ, कुन्त, गदा और मुद्गर हाथमें लेनेवाले, सर्पके सदृश ( दृष्टिसे ही दूसरोंके प्राण लेनेवाले ) रावणके भृत्य दिशाओंको व्याप्त करते हुए रावणके बगीचेमें पहुँचे ॥ ४ ॥

**दध्वान मेघवद् भीममादाय परिघं कपिः ।**
**नेदुर्दीप्तायुधास्तेऽपि तडित्वन्त इवाऽऽम्बुदाः ॥ ५ ॥**

अन्वयः—कपिः भीमं परिघम् आदाय मेघवत् दध्वान, दीप्ताऽऽयुधाः ते अपि तडित्वन्तः अम्बुदा इव नेदुः ।

व्याख्या—कपिः = हनूमान् , भीमं=भयङ्करं, परिघम् = अर्गलम् , आदाय= गृहीत्वा, मेघवत् = अभ्रतुल्यं, दध्वान् = जगर्ज । दीप्ताऽऽयुधाः = द्योतिताऽस्त्राः, ते अपि = रावणभृत्या अपि, तडित्वन्तः = विद्युत्सहिताः, अम्बुदा इव = मेघा इव, नेदुः = जगर्जुः, किङ्कराणां कृष्णत्वान्मेघैः आयुधानां च विद्योतमानत्वात्तडिता सादृश्यादुपमाऽलङ्कारः, "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ।" इति तल्लक्षणम् ।

ॐव्युत्पत्तिःॐ परिघं—"परिघोऽर्गलदण्डयोः" इति विश्वः । मेघवत्—मेघेन तुल्यं "तेन तुल्यं क्रिया चेद्वतिः" इति वतिः । दध्वान—"ध्वन शब्दे" इति धातोर्लिट् । तडित्वन्तः—तडितः सन्ति एषु ते, मतुप्प्रत्ययः । "झयः" इति मस्य वत्वम् । अत्राऽस्य पदस्य यौगिकत्वम् । अम्बुदाः—अम्बूनि ददतीति कप्रत्ययः । नेदुः—"णद अव्यक्ते शब्दे" इति धातोर्लिट् ।

ॐभाषाऽर्थःॐ हनूमान्जीने भयङ्कर अर्गल लेकर मेघके सदृश गर्जन किया, प्रदीप्त अस्त्रवाले रावणके भृत्योंने भी बिजलीसे युक्त मेघकी तरह गर्जन किया ॥ ५ ॥

**कपिनाऽम्भोधिधीरेण समगंसत राक्षसाः ।**
**वर्षास्वुद्धततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥**

**अन्वयः**—राक्षसा अम्भोधिधीरेण कपिना वर्षासु उद्धततोयौघाः सिन्धवः समुद्रेण इव समगंसत ।

**व्याख्या**—राक्षसाः = यातुधानाः, अम्भोधिधीरेण = समुद्रगम्भीरेण, अक्षोभ्यत्वादिति भावः । कपिना = हनूमता, वर्षासु = प्रावृषि, उद्धततोयौघाः = उद्रिक्तजलप्रवाहाः, सिन्धवः = नद्यः, समुद्रेण इव = सागरेण इव, समगंसत = संगताः, उपमाऽलङ्कारः ।

**ॐव्युत्पत्तिःॐ** अम्भोधिधीरेण—अम्भांसि धीयन्ते अस्मिन्निति अम्भोधिः, "कर्मण्यधिकरणे च" इति किप्रत्ययः । अम्भोधिरिव धीरस्तेन, "उपमानानि सामान्यवचनैः" इति समासः । वर्षासु—"स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः" इत्यमरः । उद्धततोयौघाः—उद्धताः तोयौघा यासां ताः । सिन्धवः—"देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः । समगंसत—संपूर्वाद्गमेर्लुङि "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदे, च्लेः सिच् ।

**ॐभाषाऽर्थःॐ** जैसे वर्षा ऋतुमें बढ़े हुए जलप्रवाहोंसे युक्त नदियाँ समुद्रसे संगत होती हैं, उसी तरह राक्षस भी मेघ के सदृश गम्भीर हनूमान्‌जीसे संगत हुए ॥६॥

**लाङ्गूलमुद्धतं धुन्वन्नुद्वहन् परिघं गुरुम् ।**
**तस्थौ तोरणमारुह्य पूर्वं न प्रजहार सः ॥ ७ ॥**

**अन्वयः**—स उद्धतं लाङ्गूलं धुन्वन् गुरुं परिघम् उद्वहन् तोरणम् आरुह्य तस्थौ, पूर्वं न प्रजहार ।

**व्याख्या**—सः = हनूमान्, उद्धतम् = उत्क्षिप्तं, लाङ्गूलं = पुच्छं, धुन्वन् = कम्पयन्, गुरुं = महान्तं, परिघम् = अर्गलम्, उद्वहन् = धारयन्, "उद्धृत्ये"ति मल्लिनाथसंमतः पाठस्तस्य उद्यम्येत्यर्थः । तोरणं = बहिर्द्वारम्, आरुह्य = अधिष्ठाय, तस्थौ = स्थितः । पूर्वं = प्रथमं, न प्रजहार = न प्रहृतवान्, शूराणां पश्चात्प्रहारित्वात् "नाऽयुध्यमानम्" इति निषेधाच्चेति भावः ।

**ॐव्युत्पत्तिःॐ** धुन्वन्—धुनोतीति, "धुञ् कम्पने" इति स्वादिगणस्थाद्धातोर्लटः शत्रादेशः । तोरणं—"तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः ।

**ॐभाषाऽर्थःॐ** हनूमान्‌जी उठाई हुई पूंछ को कम्पितकर बड़े अर्गलको धारणकर बहिर्द्वार पर चढ़कर स्थित हुए, उन्होंने पहले प्रहार नहीं किया ॥ ७ ॥

अथ सिचिवृद्ध्यधिकारः ।

**अक्षारिषुः शराम्भांसि तस्मिन् रक्षःपयोधराः ।**
**न चाऽह्वालीन्न चाभ्राजीत् त्रासं कपिमहीधरः ॥ ८ ॥**

अन्वयः—रक्षःपयोधराः तस्मिन् शराऽम्भांसि अक्षारिषुः । कपिमहीधरश्च न अह्वालीत्, त्रासं च न अव्राजीत् ।

व्याख्या—रक्षःपयोधराः = राक्षसमेघाः, तस्मिन् = हनूमति, शराऽम्भांसि = बाणजलानि, अक्षारिषुः = ववृषुरित्यर्थः । कपिमहीधरश्च=वानरपर्वतश्च, न अह्वालीत्= न चचाल, त्रासं च = भयं च, न अव्राजीत् = न अगमत् । अत्र रक्षःसु पयोधराणां, शरेषु अम्भसां, कपौ महीधरस्य च आरोपाद्रूपकाऽलङ्कारः । तल्लक्षणं यथा—

"रूपकं रूपिताऽऽरोपाद्विषये निरपह्नवे ।" इति ॥

व्युत्पत्तिः रक्षःपयोधरा—रक्षांसि एव पयोधराः, "मयूरव्यंसकादयश्च" इति रूपकसमासः। शराऽम्भांसि—शरा एव अम्भांसि शराऽम्भांसि, तानि । पूर्ववत्समासः । अक्षारिषुः—"क्षर संचलने" इति धातोर्लुङ् । "अतो हलादेर्लघोः" इति विकल्पे प्राप्ते "अतो ल्राऽन्तस्य" इति नित्यं सिचि वृद्धिः । क्षर धातुः क्वचित्सकर्मकोऽपि "तेषु क्षरत्सु बहुधामदवारिधाराः" इति शिष्टप्रयोगदर्शनात् । कपिमहीधरः—कपिरेव महीधरः । अह्वालीत्—"ह्वल चलने" इति धातोर्लुङ् । पूर्ववद्वृद्धिप्रक्रिया । अव्राजीत्—"व्रज गतौ" इति धातोर्लुङ् । "वदव्रजहलन्तस्याऽचः" इति नित्यं वृद्धिः ।

भाषाऽर्थः राक्षसरूप मेघोंने हनूमान्‌जी पर बाणरूप जलकी वृष्टि की । वानररूप पर्वत ( हनूमान्‌जी ) विचलित नहीं हुए और त्रासको भी प्राप्त नहीं हुए ॥ ८ ॥

**अवादीत् तिष्ठतेत्युच्चैः प्रादेवीत् परिघं कपिः ।**
**तथा, यथा रणे प्राणान् बहूनामग्रहीद् द्विषाम् ॥ ९ ॥**

अन्वयः—कपिः "तिष्ठत" इति उच्चैः अवादीत्, परिघं तथा प्रादेवीत्, यथा रणे बहूनां द्विषां प्राणान् अग्रहीत् ।

व्याख्या—कपिः = हनूमान्, तिष्ठत = स्थितिं कुरुत मा पलायध्वमिति भावः । इति=एवम्, उच्चैः = तारस्वरेण, अवादीत् = अकथयत् । परिघं = परिघेणेति भावः । तथा = तेन प्रकारेण, प्रादेवीत् = विजिगीषितवान्, प्रहृतवानित्यर्थः । यथा = येन प्रकारेण, रणे = संग्रामे, बहूनां = प्रभूतानां, द्विषां = शत्रूणां, प्राणान् = असून्, अग्रहीत् = गृहीतवान्, परिघेणैव बहून् राक्षसान् जघानेति भावः ।

व्युत्पत्तिः अवादीत्—"वदव्रजहलन्तस्याच" इति नित्यं वृद्धिः । परिघं—"दिवः कर्म च" इति वैकल्पिकी साधकतमस्य कर्मसंज्ञा । प्रादेवीत्—दीव्यतेर्लुङि "नेटी"ति हलन्तलक्षणवृद्धिप्रतिषेधः । अग्रहीत्—"ग्रह उपादाने" इति धातोर्लुङ् । "अतो हलादेर्लघोः" इति वैकल्पिकवृद्धौ प्राप्तायां "ह्मन्तक्षणश्वसजागृणिश्व्येदिताम्" इति निषेधः ।

भाषाऽर्थः हनूमान्‌जीने "खड़े रहो" ऐसा ऊंचे स्वरसे कहा और परिघसे उस तरहसे प्रहार किया, जिससे संग्राममें बहुत-से शत्रुओंका प्राण ले लिया ॥ ९ ॥

**व्रणैरवमिषू रक्तं देहैः प्रौर्णाविषुर्भुवम् ।**
**दिशः प्रौर्णविषुश्चाऽन्ये यातुधाना भवद्भियः ॥ १० ॥**

**अन्वयः**—यातुधानाः व्रणैः रक्तम् अवमिषुः, देहैः भुवं प्रौर्णाविषुः । अन्ये भवद्भियः ( सन्तः ) दिशः प्रौर्णविषुः ।

**व्याख्या**—यातुधानाः = केचिद्राक्षसाः, व्रणैः = प्रहारमार्गैः, रक्तं = रुधिरम्, अवमिषुः = वमन्ति स्म, देहैः = शरीरैः, भुवं = पृथिवीं, प्रौर्णाविषुः = आच्छादयन्, मम्रुरित्यर्थः । अन्ये = अपरे राक्षसाः, भवद्भियः = जायमानभयाः सन्तः, दिशः = आशाः, प्रौर्णविषुः = आच्छादयन्, पलायिता इत्यर्थः ।

***व्युत्पत्तिः*** अवमिषुः—"टुवम् उद्गिरणे" इति धातोर्लुङ् । "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इति वृद्धिप्रतिषेधः । प्रौर्णाविषुः—प्रपूर्वकात् "ऊर्णुञ् आच्छादने" इति धातोर्लुङ् । "ऊर्णोतेर्विभाषा" इति वैकल्पिकी वृद्धिः । भवद्भियः—भवन्ती भीर्येषां ते । प्रौर्णविषुः—"विभाषोर्णोः" इतीडादेरङित्त्वपक्षे गुणः ।

***भाषाऽर्थः*** कुछ राक्षसोंने घावोंसे रक्तका वमन किया और शरीरोंसे पृथ्वीका आच्छादन किया ( प्राणत्याग किया )। और राक्षसोंने भययुक्त होकर दिशाओंको आच्छादन किया ( पलायन किया ) ॥ १० ॥

**अरासिषुश्च्युतोत्साहा भिन्नदेहाः प्रियाऽसवः ।**
**कपेरत्रासिषुर्नादान् मृगाः सिंहध्वनेरिव ॥ ११ ॥**

**अन्वयः**—प्रियाऽसवः ( केचित् ) भिन्नदेहाः च्युतोत्साहाः अरासिषुः, कपेः नादात् सिंहध्वनेः मृगा इव अत्रासिषुः ।

**व्याख्या**—प्रियाऽसवः=प्रियप्राणाः, ( केचित्=राक्षसाः ), भिन्नदेहाः = विदीर्णशरीराः, अत एव—च्युतोत्साहाः = निरुत्साहाः सन्तः, अरासिषुः="हा ! मृताः स्मे"ति शब्दितवन्तः । क्वचित् "अराणिषुः" इति पाठस्तस्याऽपि अयमेवाऽर्थः । "रण शब्दे" इति धातुः । क्वचिच्च "अक्वाणिषुः" इति पाठास्तत्राऽप्ययमेवाऽर्थः । कपेः=हनूमतः, नादात् = सिंहनादात्, सिंहध्वनेः = सिंहनानात्, मृगा इव = पशव इव, क्वचित् "गजा" इति पाठस्तस्य हस्तिन इत्यर्थः । अत्रासिषुः = त्रस्ताः ।

***व्युत्पत्तिः*** प्रियासवः—प्रिया असवो येषां ते । अरासिषुः—"रस शब्दे" इति धातोर्लुङ् । "वदव्रजहलन्तस्याऽचः" इति वृद्धौ प्राप्तायां "नेटी"ति प्रतिषेधः । पुनः "अतो हलादेर्लघोः" इति वैकल्पिकी वृद्धिः । अत्रासिषुः—"त्रसी उद्वेगे" इति धातोर्लुङ् । पूर्ववद् वृद्धिप्रक्रिया ।

***भाषार्थः*** प्राणोंको प्रिय माननेवाले कुछ राक्षस विदीर्ण शरीरवाले बनकर

अत एव निरुत्साह होकर "हा ! हम मर गये" ऐसा कहने लगे और हनूमान्‌जीके सिंहनादसे, सिंहध्वनिसे मृगोंके सदृश त्रस्त हो गये ॥ ११ ॥

अथ इट्प्रतिषेधाऽधिकारः ।

**मायानामीश्वरास्तेऽपि शस्त्रहस्ता रथैः कपिम् ।**
**प्रत्याववृतिरे हन्तुं हन्तव्या मारुतेः पुनः ॥ १२ ॥**

**अन्वयः**—अथ मायानाम् ईश्वराः शस्त्रहस्ताः मारुतेः हन्तव्याः ते अपि कपिं हन्तुं रथैः पुनः प्रत्याववृतिरे ।

**व्याख्या**—अथ = अनन्तरं, मायानां = कपटानाम्, ईश्वराः=प्रभवः, शस्त्रहस्ताः=आयुधपाणयः, मारुतेः = हनूमतः, हन्तव्याः=वध्याः, ते अपि=पूर्वोक्ता राक्षसा अपि, कपिं=मारुतिं, हन्तुं = मारयितुं, रथैः = स्यन्दनैः, पुनः = भूयः, प्रत्याववृतिरे = प्रतिनिवृत्ताः ।

***व्युत्पत्तिः*** ईश्वराः—ईशत इति ईश्वराः, "ईश ऐश्वर्ये" इति धातोः "स्थेशभासपिसकसो वरच्" इति वरच् । "नेड्वशि कृति" इति इट्प्रतिषेधः । शस्त्रहस्ताः—शस्यते (हन्यते) अनेनेति शस्त्रम्, "शसु हिंसायाम्" इति धातोः "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" इति ष्ट्रन् । हसतीति हस्तः । "हसे हसने" इति धातोः "हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्" इति तन्प्रत्ययः । "तितुत्रतथसिसुसरकसेषु च" इति इट्प्रतिषेधः । शस्त्राणि हस्तेषु येषां ते, "प्रहरणाऽर्थेभ्यः परे निष्ठासप्तम्यौ" इति शस्त्रपदस्य पूर्वनिपातः । मारुतेः—"कृत्यानां कर्तरि वा" इति कर्तरि वैकल्पिकी षष्ठी । रथैः—रम्यते एषु ते रथास्तैः, "रमु क्रीडायाम्" इति धातोः "हनिकुषिणीरमिकाशिभ्यः क्थन्" इति क्थन् । "साधकतमं करणम्" इति करणत्वे तृतीया । "याने चक्रिणि युद्धाऽर्थे शताङ्गः स्यन्दनो रथः ।" इत्यमरः ।

***भाषाऽर्थः**—तदनन्तर मायाओंके ईश्वर, हाथोंमें शस्त्र लिए हुए तथा हनूमान्‌जीके वध्य वे राक्षस भी उन हनूमान्‌जीको मारनेके लिए रथोंपर चढ़कर फिर लौट आये ॥ १२ ॥

**तांश्चेतव्यान् क्षितौ श्रित्वा वानरस्तोरणं युतान् ।**
**जघानाऽऽधूय परिघं विजिघृक्षून् समागतान् ॥ १३ ॥**

**अन्वयः**—वानरः क्षितौ चेतव्यान् युतान् विजिघृक्षून् समागतान् तान् तोरणं श्रित्वा परिघम् आधूय जघान ।

**व्याख्या**—वानरः=हनूमान्, क्षितौ = पृथिव्यां, चेतव्यान्=चेतुमर्हान् हत्वा राशीकर्तव्यानित्यर्थः । युतान्=एकप्रयोजनतया मिथः संगतान्, विजिघृक्षून् = विग्र-

हीतुमिच्छून्, समागतान्=संप्राप्तान्, युद्धेच्छयेति शेषः। तान्=राक्षसान्, तोरणं=बहिर्द्वारं, श्रित्वा=आश्रित्य, परिघम्=अर्गलम्, आधूय=परिभ्राम्य, जघान=हतवान्।

ॐव्युत्पत्तिःॐ क्षितौ—क्षयन्ति (निवसन्ति) अस्यामिति क्षितिः, तस्याम्। "क्षि निवासगत्योः" इति तौदादिकधातोः "क्तिच्क्तौ च संज्ञायाम्" इति क्तिच्, "तितुत्र"-त्यादिना इट् प्रतिषेधः। "क्षोणिर्ज्या काश्यपी क्षितिः" इत्यमरः। चेतव्यान्—"चिञ् चयने" इति धातोः "तव्यत्तव्याऽनीयरः" इति तव्यः। "एकाच उपदेशेऽनुदात्तात्" इति इट्प्रतिषेधः। युतान्—"यु मिश्रणाऽमिश्रणयोः" इति धातोः कर्तरि क्तः, "श्र्युकः किति" इति इट्प्रतिषेधः। विजिघृक्षून्—सन्नन्तात् "ग्रह उपादाने" इति धातोः उप्रत्ययः। "रुदविदमुषग्रहिस्वपिप्रच्छः संश्च" इति सनः कित्त्वं "ग्रहिज्यावयी"-त्यादिना संप्रसारणं ढत्वकत्वषत्वानि च। "सनि ग्रहगुहोश्च" इतीट्प्रतिषेधः। श्रित्वा—"श्र्युकः किती"ति इटः प्रतिषेधः।

ॐभाषाऽर्थःॐ हनूमान्जीने पृथिवीमें इकट्ठे करनेके योग्य, एक प्रयोजनसे परस्परमें संगत, युद्ध करनेके लिए इच्छा करनेवाले तथा आये हुए उन राक्षसोंको, बहिर्द्वारको आश्रयकर अर्गलको घुमाकर मारा ॥ १३ ॥

संजुगुक्षव आयूंषि ततः प्रतिरुरूषवः।
रावणाऽन्तिकमाजग्मुर्हतशेषा निशाचराः ॥ १४ ॥

अन्वयः—ततो हतशेषा निशाचराः आयूंषि संजुगुक्षवः प्रतिरुरूषवो रावणाऽ-ऽन्तिकम् आजग्मुः।

व्याख्या—ततः = राक्षसहननानन्तरं, हतशेषाः = मारिताऽवशिष्टाः, निशाचराः = राक्षसाः, आयूंषि = जीवितानि, संजुगुक्षवः=संगोप्तुमिच्छव इत्यर्थः। एवं च—प्रतिरुरूषवः=कथयितुमिच्छवः सन्तः, वक्ष्यमाणमर्थमिति शेषः, रावणाऽन्तिकं = दशाऽऽननिकटम्, आजग्मुः = आगताः।

ॐव्युत्पत्तिःॐ हतशेषाः—हतेषु शेषाः, संजुगुक्षवः—संगोहितुमिच्छवः, संपूर्वकात् "गुहू संवरणे" इति सन्नन्तादुप्रत्ययः। "सनि ग्रहगुहोश्च" इतीट्प्रतिषेधः। प्रतिरुरूषवः—प्रतिरवितुमिच्छवः, प्रतिपूर्वकात् सन्नन्तात् "रु शब्दे" इति धातोरुः। "सनि ग्रहगुहोश्चे"ति चकारादुगन्तसमुच्चयनादिट्प्रतिषेधः।

ॐभाषाऽर्थःॐ तब हताऽवशिष्ट (बचे-खुचे) राक्षस जीवन बचानेकी इच्छाकर रावणको निवेदन करनेकी इच्छा रखते हुए रावणके समीप आये ॥ १४ ॥

'एकेन बहवः शूराः साऽऽविष्काराः प्रमत्तवत्।
वैमुख्यं चक्रमे'त्युच्चैरूचुर्दशमुखाऽन्तिके ॥ १५ ॥

**अन्वयः**—"एकेन बहवः शूराः साऽऽविष्काराः (वयम्) प्रमत्तवत् वैमुख्यं चक्रम" इति दशमुखाऽन्तिके उच्चैः ऊचुः ।

**व्याख्या**—एकेन = एकाकिना, कपिनेति शेषः । बहवः=अधिकसंख्यकाः, शूराः = वीराः, साऽऽविष्काराः = अहङ्कारोपेताः, वयमिति शेषः । प्रमत्तवत्=मद्यपानमत्ता इव, वैमुख्यं=पराङ्मुखत्वं, चक्रम=अकार्ष्म, इति=एवं, दशमुखाऽन्तिके=रावणसमीपे, उच्चैः = तारस्वरेण, ऊचुः = उक्तवन्तः, ते इति शेषः ।

॥व्युत्पत्तिः॥ एकेन—"एकाकी त्वेक एककः" इत्यमरः । साऽऽविष्काराः—आविष्कारेण सहिताः । प्रमत्तवत्—प्रमत्तैस्तुल्यं, "तेन तुल्यं क्रिया चेद्वतिः" इति वतिः । वैमुख्यं—विपरीतं मुखं येषां ते विमुखाः, तेषां भावः कर्म वा वैमुख्यं "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ् । चक्रम—"डुकृञ् करणे" इति धातोः "परोक्षे लिट्" इति लिट् । मसो मादेशः । "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" इति इट्प्रतिषेधः । अत्र राक्षसानां चित्तविक्षेपात् लिटि उत्तमपुरुषप्रयोगः, अत एव "प्रमत्तवत्" इत्युक्तम् । दशमुखाऽन्तिके—दश मुखानि यस्य स दशमुखस्तस्य अन्तिके ।

॥भाषाऽर्थः॥ "अकेले एक वानरके कारण अधिकसंख्यक शूर और अहङ्कारयुक्त हमलोग मत्त पुरुषोंके सदृश युद्धसे पराङ्मुख हो गये" ऐसा वचन राक्षसोंने रावणके समीप ऊँचे स्वरसे कहा ॥ १५ ॥

**मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः ।**
**उद्वृत्तनयनो मिन्नान् मन्त्रिणः स्वान् व्यसर्जयत् ॥ १६ ॥**

**अन्वयः**—स तान् उद्विग्नान् अवेत्य उद्वृत्तनयनः ( सन् ) मांसोपभोगसंशूनान् मिन्नान् स्वान् मन्त्रिणः व्यसर्जयत् ।

**व्याख्या**—सः = रावणः, तान् = पलायितान् राक्षसान् , उद्विग्नान् = भीतान् , अवेत्य = ज्ञात्वा, उद्वृत्तनयनः = प्रलुठिताऽक्षितारकः सन् , मांसोपभोगसंशूनान्= मांसभक्षणस्थूलान् , मिन्नान्=स्निग्धान् , मांसाऽऽहारमसृणादेहानित्यर्थः , स्वान् = आत्मीयान् , मन्त्रिणः=सचिवान् , व्यसर्जयत्=प्राहिणोत् ।

॥व्युत्पत्तिः॥ उद्विग्नान्—उत्पूर्वकात् "ओविजी भयसंचलनयोः" इति धातोः क्तः । "श्वीदितो निष्ठायाम्" इति इडागमनिषेधः । उद्वृत्तनयनः—उद्वृत्ते नयने यस्य सः । उत्पूर्वकात् "वृतु वर्त्तने" इति धातोः क्तप्रत्यय उद्वृत्तम् । उदित्त्वादस्य "उदितो वा" इति क्त्वायां वेट्त्वादिह "यस्य विभाषा" इतीट्प्रतिषेधः । मांसोपभोगसंशूनान्—मांसोपभोगेन संशूनान् । "टुओश्वि गतिवृद्ध्योः" इति धातोः कर्तरि क्तप्रत्यये "ओदितश्च" इति निष्ठानत्वे संशून इति पदं सिद्ध्यति । यजादित्वात्संप्रसारणे "संप्रसारणाच्च" इति पूर्वरूपत्वम् । "हल" इति दीर्घत्वम् । "श्वीदितो निष्ठायाम्" इतीडभावः । मिन्नान्-

"ञिमिदा स्नेहने" इति धातोः कर्तरि क्तः । "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति निष्ठानत्वम् । "आदितश्च" इतीट्प्रतिषेधः ।

❀भाषाऽर्थः❀ रावणने उन राक्षसोंको डरे हुए जानकर क्रोधसे आंखोंकी पुतलियों-को घुमाकर मांस खानेसे पुष्ट और चिकने शरीरवाले अपने मन्त्रियोंको भेजा ॥ १६ ॥

**प्रमेदिताः सपुत्रास्ते सुस्वान्ता बाढविक्रमाः ।**
**अम्लिष्टनादा निरगुः फाण्टचित्राऽस्त्रपाणयः ॥ १७ ॥**

**अन्वयः**—प्रमेदिताः सुस्वान्ता बाढविक्रमाः अम्लिष्टनादाः फाण्टचित्राऽस्त्र-पाणयः ते सपुत्रा निरगुः ।

**व्याख्या**—प्रमेदिताः = प्रकर्षेण स्निग्धीभवितुमारब्धाः, सुस्वान्ताः = शोभन-चित्ताः, समरोत्साहेनेति शेषः । बाढविक्रमाः = अत्यर्थपराक्रमाः, अम्लिष्टनादाः = विस्पष्टवाचः, फाण्टचित्राऽस्त्रपाणयः = कषायभेदशबलशस्त्रहस्ताः, ते = मन्त्रिणः, सपुत्राः = सतनयाः सन्तः, निरगुः = निर्गताः, युद्धाऽर्थमिति शेषः ।

❀व्युत्पत्तिः❀ प्रमेदिताः—प्रपूर्वकात् "ञिमिदा स्नेहने" इति धातोः "आदिक-र्मणि क्तः कर्तरि च" इति आदिकर्मणि कर्तरि क्तः । दीर्घकालव्यासक्तायाः कटाद्युत्पा-दनक्रियाया आरम्भकालविशिष्टोऽश आदिकर्म । प्रशब्द आदिकर्मद्योतनाऽर्थः । "विभा-षा भावादिकर्मणोः" इति वैकल्पिक इडागमः "निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" इति निष्ठायाः कित्त्वनिषेधाद्गुणः । सुस्वान्ताः—स्वनधातोः "क्षुब्धस्वान्तध्वान्तल-ग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताऽविस्पष्टस्वराऽनायासभृशेषु" इति सूत्रेण स्वान्तपदनिपातो मनस्यर्थे । तत एव क्तप्रत्ययोऽनिट्त्वादिकार्यं च सिध्यति । शोभनं स्वान्तं येषां ते । बाढविक्रमाः—"बाहृ प्रयत्ने" इति धातोः पूर्वसूत्रेण क्तः, इडभावो ढत्वधत्वष्टुत्वढलोपाश्च निपात्यन्ते, ततो भृशार्थे बाढपदं सिद्ध्यति । बाढं ( यथा तथा ) विक्रमो येषां ते । अम्लिष्टनादाः—"म्लेच्छ अव्यक्ते शब्दे" इति धातोः पूर्वसूत्रेणैव अविस्पष्टाऽर्थे म्लिष्टपदं निपात्यते । "अथ म्लिष्टमविस्पष्टम्" इत्यमरः । अम्लिष्टो नादो येषां ते । फाण्टचित्राऽस्त्रपाणयः—पूर्वसूत्रेणैव फणधातोः फाण्टपदं सिद्ध्यति, तत्र क्त इडभावो निष्ठातस्य टत्वं दीर्घश्च निपात्यते । अनायासकृतो रञ्जक-द्रव्यविशेषः फाण्टम् । "अनायासकृतं फाण्टम्" इत्यमरः । फाण्टेन चित्राणि अस्त्राणि पाणिषु येषां ते । सपुत्राः—पुत्रैः सहिताः । निरगुः—निरुपसर्गपूर्वकात् "इण् गतौ" इति धातोर्लुङि "इणो गा लुङि" इति गाऽऽदेशः । "गातिस्थाघुपाभूभ्यः सिचः पर-स्मैपदेषु" इति सिचो लुक् ।

❀भाषाऽर्थः❀ अतिशय स्निग्ध होनेके लिए आरम्भ किए हुए, युद्धके उत्साहसे शोभन चित्तवाले, अतिशय पराक्रम करनेवाले, स्पष्ट वाणीसे युक्त, और फाण्ट

( कषाय ) द्रव्यसे विचित्र शस्त्रोंको हाथोंमें लिए हुए मन्त्रिगण पुत्रोंके साथ ( लड़ने के लिए ) निकले ॥ १७ ॥

युग्मम् १८-१९ ।

**तान् दृष्ट्वाऽतिदृढान् धृष्टान् प्राप्तान् परिवृढाऽऽज्ञया ।**
**कष्टं विनर्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः ॥ १८ ॥**

**अन्वयः**—कपिः अतिदृढान् धृष्टान् परिवृढाऽऽज्ञया प्राप्तान् कष्टं विनर्दतः क्रूरान् शस्त्रघुष्टकरान् तान् दृष्ट्वा ( आर्दिदत् ) ।

**व्याख्या**—कपिः हनूमान्, अतिदृढान्=बलवतः, धृष्टान् = वियातान्, परिवृढाज्ञया=अधिपाऽऽदेशेन, प्राप्तान्=आसादितान्, कष्टं=कृच्छ्रं ( यथा तथा ), विनर्दतः=गर्जतः, क्रूरान्=हिंस्रान्, शस्त्रघुष्टकरान्=आयुधशब्दायमानपाणीन्, तान्=रावणमन्त्रिणः, दृष्ट्वा=विलोक्य, "आर्दिदत्" इत्युत्तरश्लोकस्थेन पदेन सम्बन्धः, अवधीदित्यर्थः ।

**ॐव्युत्पत्तिःॐ** अतिदृढान्—"दृह वृद्धौ" इति धातोः "दृढः स्थूलबलयोः" इति दृढपदं स्थूले बलवति चाऽर्थे सिध्यति इडभावश्च निपात्यते। अत्यर्थं दृढा अतिदृढास्तान्। धृष्टान्—धृष्णुवन्तीति धृष्टास्तान् "ञिधृषा प्रागल्भ्ये" इति धातोः निष्ठायामविनये "धृषिशसी वैयात्ये" इति इट्प्रतिषेधः। "धृष्टे धृष्णग्वियातश्च" इत्यमरः। मल्लिनाथेन तु धृष्टपदं प्रथमान्तं प्रयुक्तम्। तत्र तद् हनूमतो विशेषणम्। परिवृढाज्ञया—परिवर्हति परिवृंहति वा परिवृढः, परिपूर्वकात् "वृह वृहि वृद्धौ" इति धातोः "प्रभौ परिवृढः" इति क्तप्रत्यय इडभावश्च निपात्यते। "प्रभुः परिवृढोऽधिपः" इत्यमरः। परिवृढस्याज्ञया। कष्टं—"कष हिंसायाम्" इति धातोर्निष्ठायां "कृच्छ्रगहनयोः कषः" इतीट्प्रतिषेधः। विनर्दतः—विनर्दन्तीति विनर्दन्तस्तान्, "नर्द शब्दे" इति धातोर्लटः शत्रादेशः। शस्त्रघुष्टकरान्—"घुषिर विशब्दने" इति धातोः निष्ठायां क्तः। "घुषिर विशब्दने" विशब्दनात् ( स्वाऽभिप्रायाऽऽविष्करणात् ) अन्यत्र शब्दनमात्रे इट्प्रतिषेधः। ततो घुष्टपदं सिध्यति। शस्त्रेण घुष्टः करो येषां ते शस्त्रघुष्टकरास्तान्।

**ॐभावार्थःॐ** हनूमान्‌जीने अतिशय बलवान्, ढीठ, प्रभुकी आज्ञासे आये हुए, कष्टपूर्वक शब्द करते हुए, हिंस्र, शस्त्रसे शब्दायमान हाथवाले उन राक्षसोंको देख कर मार डाला॥ १८ ॥

**अभ्यर्णो गिरिकूटाभानभ्यर्णानार्दिदद् द्रुतम् ।**
**वृत्तशस्त्रान् महाऽरम्भानदान्तांस्त्रिदशैरपि ॥ १९ ॥**

**अन्वयः**—अभ्यर्णः गिरिकूटाभान् अभ्यर्णान् वृत्तशस्त्रान् महारम्भान् त्रिदशैः अपि अदान्तान् तान् द्रुतम् आर्दिदत् ।

**व्याख्या**—अभ्यर्णः=अपीडितः, "अन्यर्ण" इति मल्लिनाथसम्मतः पाठस्तस्य परैरहिंसित इत्यर्थः । हनूमानिति भावः । गिरिकूटाऽऽभान् = शैलशिखरसदृशान्, अभ्यर्णान्=अविदूरान्, वृत्तशस्त्रान्=अधीतशस्त्रविद्यान्, "वृत्तशस्त्र" इति प्रथमाऽन्त-पाठपक्षे हनूमद्विशेषणम् । महाऽऽरम्भान्=महोद्योगान्, किं बहुना—त्रिदशैरपि= देवैरपि, अदान्तान् = अदमितान् , तान् = राक्षसान् , द्रुतं = शीघ्रम्, आर्दिदत् = अवधीत् । उपमाऽलङ्कारः ।

॥व्युत्पत्तिः॥ अभ्यर्णः—विशेषेण अर्दितो व्यर्णः, विपूर्वात् "अर्द हिंसायाम्" इति चौरादिकधातोः क्तः, "अर्देः सन्निविभ्य" इतीडागमप्रतिषेधः । "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति निष्ठानत्वे णत्वम् । गिरिकूटाभान्—गिरीणां कूटानि गिरिकूटानि, "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः । गिरिकूटैः सदृशाः गिरिकूटाभास्तान् । अभ्यर्णान्—अभ्यर्द्यन्ते अभ्यर्दन्ति स्मेति वा अभ्यर्णास्तान्, अभिपूर्वात् "अर्द गतौ याचने च" इति धातोः कर्मणि कर्तरि वा क्तः । "अभेश्चाविदूर्ये" इतीट्प्रतिषेधः आविदूर्यार्थे । "उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम् ।" इत्यमरः । वृत्तशस्त्रान्—"वृतु वर्तने" इति धातोः ण्यन्तात् क्तप्रत्यये "णेरध्ययने वृत्तम्" इति इडभावे णिलुकि च अधीयमानेऽर्थे वृत्तमिति पदं निपात्य । वृत्तं शस्त्रं ( लक्षणया शस्त्रविद्या ) यैस्ते वृत्तशस्त्रास्तान् । महाऽऽरम्भान्—महानारम्भो येषां ते महारम्भास्तान् । अदान्तान्—दम्यन्ते स्मेति दान्ताः, णिजन्तात् "दमु उपशमे" इति धातोः क्तप्रत्यये "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" इति इडभावो णिलुक् च निपात्यते । "दान्तस्तु दमिते" इत्यमरः । न दान्ता अदान्तास्तान् । आर्दिदत्—अर्देर्लुङि चङ् ।

॥भाषाऽर्थः॥ अपीडित हनूमान्‌जीने पर्वतकी चोटियोंके सदृश, निकटस्थित, शस्त्रविद्याका अध्ययन किये हुए, महान् उद्योगसे युक्त, देवताओंसे भी दमन नहीं किये गये, उन राक्षसोंको शीघ्र मार डाला ॥ १९ ॥

दमिताऽरिः प्रशान्तौजा नादाऽऽपूरितदिङ्मुखः ।
जघान रुषितो रुष्टांस्त्वरितस्तूर्णमागतान् ॥ २० ॥

**अन्वयः**—दमिताऽरिः प्रशान्तौजाः नादाऽऽपूरितदिङ्मुखः रुषितः ( सः ) रुष्टान् तूर्णम् आगतान् ( तान् ) त्वरितः ( सन् ) जघान ।

**व्याख्या**—दमिताऽरिः=उपशमितशत्रुः, प्रशान्तौजाः=प्रशमितशत्रुबलः, नादाऽऽपूरितदिङ्मुखः= सिंहध्वन्यापूरिताशामुखः, रुषितः = क्रुद्धः, ( सः=हनूमान् ) रुष्टान् = क्रुद्धान् , तूर्णं = सत्वरम्, आगतान्=आयातान्, ( तान्=मन्त्रिणः ) त्वरितः ससंभ्रमः सन्, जघान = हतवान् ।

व्युत्पत्तिः॥ दमिताऽरिः—"वा दान्ते"त्यादिना विकल्पेनेट्प्रतिषेधात्पक्षे इडागमे दमितपदसिद्धिः। दमिता अरयो येन सः। प्रशान्तौजाः—शम्यते स्मेति शान्तं, "शमु उपशमे" इति णिजन्ताद्धातोः क्तः "वा दान्तशान्ते"त्यादिना वैकल्पिक इडभावो णिलुक् च निपात्यते। "शान्तः शमिते" इत्यमरः। प्रकर्षेण शान्तं प्रशान्तं, तत् ओजः ( शत्रुबलम् ) येन सः। नादापूरितदिङ्मुखः—पूर्यते स्मेति पूरितानि, "पूरी आप्यायने" इति णिजन्ताद्धातोः क्तप्रत्यये "वा दान्तशान्ते"त्यादिना णिलोपस्य इडभावस्य च वैकल्पिकत्वेन पक्षे तदभावः। नादेन आपूरितानि दिङ्मुखानि येन सः। रुषितः—"रुष रोषे" इति दैवादिकधातोः क्तः, "रुष्यमत्वरसंघुषास्वनाम्" इति इड्विकल्पः। रुष्टान्—इटो वैकल्पिकत्वात्तदभावपक्षे रूपम्। तूर्णं—"ञित्वरा संभ्रमे" इति धातोः क्तप्रत्यये "रुष्यमत्वरे"त्यादिना इडभावपक्षे "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इत्यूठ्। "सत्वरं चपलं तूर्णमविलम्बितमाशु च।" इत्यमरः। त्वरितः—"रुष्यमत्वरे"त्यादिना वैकल्पिक इट्।

भाषाऽर्थः॥ शत्रुको नष्ट करनेवाले, शत्रुबलको शान्त करनेवाले, सिंहनादसे दिङ्मण्डलको पूर्ण करनेवाले कोपयुक्त हनूमान्‌जीने क्रुद्ध और शीघ्र आये हुए उन राक्षसोंको शीघ्रताके साथ मार डाला ॥ २० ॥

तेषां निहन्यमानानां संघुष्टैः कर्णभेदिभिः।
अभूदभ्यमितत्रासमास्वान्ताऽशेषदिग् जगत् ॥ २१ ॥

अन्वयः—निहन्यमानानां तेषां कर्णभेदिभिः संघुष्टैः जगत् अभ्यमितत्रासम् अस्वान्ताऽशेषदिक् अभूत्।

व्याख्या—निहन्यमानानां = मार्यमाणानां, तेषां = राक्षसानां, कर्णभेदिभिः = श्रोत्रविदारकैः, संघुष्टैः = संघुषितैः, शब्दैरित्यर्थः। जगत् = लोकः, अभ्यमितत्रासं= प्राप्तभयम्, अस्वान्ताऽशेषदिक् = प्रतिध्वानितसमस्तककुप्, अभूत् = अभवत्।

॥व्युत्पत्तिः॥ कर्णभेदिभिः—कर्णौ भिन्दन्तीति तच्छीलानि कर्णभेदीनि, तैः। ताच्छील्ये णिनिः। संघुष्टैः—संघोषणानि संघुष्टानि, तैः। संपूर्वकात् "घुषिर विशब्दने" इति धातोः क्तप्रत्यये "रुष्यमत्वरसंघुषास्वनाम्" इति वैकल्पिक इडभावपक्षे रूपम्। अभ्यमितत्रासम्—अभिपूर्वात् "अम गतौ" इति धातोः क्तप्रत्यये "रुष्यमत्वरसंघुषास्वनाम्" इति इड्विकल्पे अभ्यमितपदसिद्धिः। अभ्यमितः त्रासो यस्मिंस्तत्। आस्वान्ताऽशेषदिक्—आङ्पूर्वकात् "स्वन शब्दे" इति धातोः क्तप्रत्यये पूर्वसूत्रेण वैकल्पिकेडभावपक्षे आस्वान्तपदसिद्धिः। आस्वान्ताः ( आस्वानिताः ) अशेषा दिशो यस्मिंस्तत्। "आस्वान्तककुभम्" इति पाठे "अच्प्रत्यन्ववपूर्वात्सामलोम्नः" इत्यत्र "अच्" इति योगविभागात् पद्मनाभादिवत्समासाऽन्तोऽच्।

ॐभाषाऽर्थःॐ मारे जानेवाले राक्षसोंके कर्णविदारक शब्दोंसे लोक भयभीत और प्रतिध्वनिवाली दिशाओंसे युक्त हुआ ॥ २१ ॥

**भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः ।**
**क्षणेन क्षीणविक्रान्ताः कपिनाऽनेषत क्षयम् ॥ २२ ॥**

**अन्वयः**—ततो भयसंहृष्टरोमाणः अपचितद्विषः क्षीणविक्रान्ताः ते कपिना क्षणेन क्षयम् अनेषत ।

**व्याख्या**—ततः = त्रासानन्तरं, भयसंहृष्टरोमाणः = भीत्युत्पन्नरोमाञ्चाः, अपचितद्विषः = पूजित( ऋषि )शत्रवः, क्षीणविक्रान्ताः = नष्टपराक्रमाः, ते = सपुत्रा रावणमन्त्रिणः, कपिना = हनूमता, क्षणेन = अल्पकालेन, क्षयं = नाशम्, अनेषत = नीताः ।

ॐव्युत्पत्तिःॐ भयसंहृष्टरोमाणः—"हृषु अलीके" इति भ्वादिस्थधातोः "हृष तुष्टौ" इति दैवादिकधातोर्वा "गत्यऽर्थाऽकर्मके"त्यादिना कर्तरि क्तः । "हृषेर्लोमसु" इति इटो वैकल्पिकत्वादभावपक्षे संहृष्टपदं सिध्यति । अथात् संहृष्टानि रोमाणि येषां ते । अपचितद्विषः—अपपूर्वस्य ण्यन्तस्य "चिञ् चयने" इति धातोर्निष्ठायाम् "अपचितश्च" इति चिभाव इडभावश्च निपात्यते ततोऽपचितपदं सिध्यति । अपचितानां ( पूजितानाम् , ऋषीणामिति शेषः ) द्विषः । मल्लिनाथमते "अपचितत्विष" इति पाठस्तत्र अपचिता ( अपचायिताः ) त्विड् येषां ते नष्टतेजस इत्यर्थः । क्षीणविक्रान्ताः—विक्रमणं विक्रान्तं, "नपुंसके भावे क्त" इति क्तः । "क्षि क्षये" इति धातोः क्तप्रत्यये "निष्ठायामण्यदर्थे" इति क्षियो दीर्घत्वं "क्षियो दीर्घात्" इति निष्ठातस्य नत्वम् । 'इत्थं' क्षीणपदसिद्धिः । क्षीणं विक्रान्तं येषां ते । ते—नीधातोः प्रधानकर्मत्वात् "प्रधाने नीहृकृष्वहाम्" इति नियमेन प्रथमा । कपिना—अनुक्ते कर्तरि, "कर्तृकरणयोस्तृतीया" इति तृतीया । क्षणेन—"अपवर्गे तृतीया" इति तृतीया । क्षयं—गौणकर्मत्वाद् द्वितीया । अनेषत—नयतेः कर्मणि लुङि चिण्वदिडभावपक्षे च्लेः सिचि गुणो ह्रस्याऽदादेशः ।

ॐभाषाऽर्थःॐ तब भयसे पुलकित शरीरवाले पूजित ऋषियोंके शत्रु क्षीण पराक्रमवाले उन राक्षसोंको हनूमान्‌जीने अल्प समयमें ही संहार किया ॥ २२ ॥

इडधिकारः ।

**हत्वा रक्षांसि लवितुमक्रमीन्मारुतिः पुनः ।**
**अशोकवनिकामेव निगृहीताऽरिशासनः ॥ २३ ॥**

**अन्वयः**—मारुतिः रक्षांसि हत्वा निगृहीताऽरिशासनः ( सन् ) पुनः अशोकवनिकाम् एव लवितुम् अक्रमीत् ।

**व्याख्या**—मारुतिः = हनूमान्, रक्षांसि = राक्षसान्, हत्वा = व्यापाद्य, निगृहीता-

ऽरिशासनः=निरस्तरावणाऽऽज्ञः सन्, पुनः = भूयः, अशोकवनिकाम् एव तदाख्यं रावणोद्यानम् एव, लवितुं=छेत्तुम्, अक्रमीत् = गतः ।

ॐव्युत्पत्तिःॐ निगृहीताऽरिशासनः—निपूर्वात् "ग्रह उपादाने" इति धातोः क्तप्रत्यये इडागमे च "ग्रहोऽलिटि दीर्घः" इति दीर्घत्वे संप्रसारणे च सति निगृहीत-पदसिद्धिः । निगृहीतम् अरिशासनं येन सः । लवितुं—"लूञ् छेदने" इति धातोस्तुमुन्, तस्य "आर्धधातुकं शेष" इत्यार्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इतीडागमश्च । अक्रमीत्—"क्रमु पादविक्षेपे" इति धातोर्लुङ् । "स्नुक्रमोरनात्मनेपदनिमित्ते" इतीट् । "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इति सिचि वृद्धिप्रतिषेधः ।

ॐभाषाऽर्थःॐ हनूमान्जी राक्षसोंको मारकर रावणकी आज्ञाका उल्लङ्घन करते हुए फिर अशोक वनिकाको ही छेदन करनेके लिए चले गये ॥ २३ ॥

**आवरीतुमिवाऽऽकाशं वरितुं वीनिवोत्थितम् ।**
**वनं प्रभञ्जनसुतो नाऽदयिष्ट विनाशयन् ॥ २४ ॥**

**अन्वयः**—प्रभञ्जनसुतः आकाशम् आवरीतुम् इव वीन् वरितुम् इव उत्थितं वनं विनाशयन् न अदयिष्ट ।

**व्याख्या**—प्रभञ्जनसुतः = वायुपुत्रः, हनूमानित्यर्थः । आकाशं = व्योम, आवरीतुम् इव = आच्छादयितुम् इव, वीन् = पक्षिणः, वरितुम् इव = प्रार्थयितुम् इव, "आगच्छत, नाऽन्यत्र याते"त्यादिरूपां प्रार्थनां कर्तुमिवेति भावः । उत्थितम् = उच्छ्रितं, वनं = काननं, विनाशयन्=निर्मूलयन्, न अदयिष्ट = दयां न कृतवान्, निर्दयं बभञ्जेत्यर्थः ।

ॐव्युत्पत्तिःॐ आवरीतुम्—आङ्पूर्वकात् "वृञ् वरणे" इति धातोस्तुमुन्, इडागमे "वृतो वा" इतीटो दीर्घविकल्पः । वीन्—"विविष्किरपतत्रिणः" इत्यमरः । वरितुम्—दीर्घस्य वैकल्पिकत्वात्पक्षे तदभावः । अदयिष्ट—"दय दानगतिरक्षणहिंसाऽऽदानेषु" इति धातोर्लुङ् । सिचि इट् । अत्रोत्प्रेक्षाऽलङ्कारः । तल्लक्षणं यथा—

"भवेत्संभावनोत्प्रेक्षा प्रकृतस्य परात्मना ।
वाच्या प्रतीयमानाख्या प्रथमं द्विविधा मता ॥ इति ।

ॐभाषाऽर्थःॐ वायुपुत्र हनूमान्जीने आकाश को आच्छादन करते हुएके सदृश और पक्षियोंको प्रार्थना करते हुएके तुल्य उन्नत वनको विनष्ट करते हुए दया नहीं की ॥ २४ ॥

**वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः ।**
**प्रावारिषुरिव क्षोणीं क्षिप्ता वृक्षाः समन्ततः ॥ २५ ॥**

**अन्वयः**—कल्पशाखिनः क्षिप्यन् मैथिल्याः शिवं वरिषीष्ट । समन्ततः क्षिप्ता वृक्षाः क्षोणीं प्रावारिषुः इव ।

**व्याख्या**—( सः = हनूमान् ) कल्पशाखिनः = कल्पवृक्षान्, क्षिप्यन् = प्रेरयन्, उत्पाट्य स्वर्गं प्रतीति शेषः । मैथिल्याः = सीतायाः, शिवं = कल्याणं, वरिषीष्ट= प्रार्थितवान्, समन्ततः = परितः, क्षिप्ताः = निरस्ताः, वृक्षाः=तरवः, क्षोणीं = पृथिवीं, प्रावारिषुरिव = आच्छादितवन्त इव, उत्तरासङ्गवतीमिव चक्रुः । अत्रोत्प्रेक्षाऽलङ्कारः ।

**ॐव्युत्पत्तिःॐ** कल्पशाखिनः—कल्पः संकल्पितार्थः । कल्पपूरकाः शाखिनः, मध्यमपदलोपी समासः । तान् । वरिषीष्ट—अत्र भूताऽर्थे लुङादिप्रयोगस्य कर्तव्यत्वेऽपि भविष्यत्त्वोपचारादाशीःप्रयोगः । "वृञ् वरणे" इति स्वादिगणधातोः "आशिषि लिङ्लोटौ" इत्याशीर्लिङि ञित्वादात्मनेपदे सीयुट् । "लिङ्सिचोरात्मनेपदेषु" इति विकल्पादिट् "न लिङि" इति दीर्घप्रतिषेधः "सुट् तिथोः" इति सुट्, षत्वष्टुत्वे च । प्रावारिषुः—वृञ् धातोर्लुङि सिचि "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धिः । "सिचि च परस्मैपदेषु" इति इटो दीर्घत्वप्रतिषेधः । "द्वौ प्रावारोत्तरासङ्गौ" इत्यमरः ।

**ॐभाषाऽर्थःॐ** कल्पवृक्षोंको उखाड़कर स्वर्गमें भेजते हुए हनूमान्जीने सीताजीके कल्याणकी प्रार्थना की । हनूमान्जीसे चारों तरफ फेंके गये वृक्ष पृथ्वीको दुपट्टा ओढ़ाते हुए के सदृश प्रतीत होते थे ॥ २५ ॥

**संवुवूर्षुः स्वमाकूतमाज्ञां विवरिषुर्द्रुतम् ।**
**अवरिष्टाक्षमक्षम्यं कपिं हन्तुं दशाननः ॥ २६ ॥**

**अन्वयः**—दशाननः स्वम् आकूतं संवुवूर्षुः आज्ञां विवरिषुः (सन्) कपिं हन्तुम् अक्षम्यम् अक्षं द्रुतम् अवरिष्ट ।

**व्याख्या**—दशाऽऽननः = रावणः, स्वम् = आत्मीयम्, आकूतं = विषादगर्भमभिप्रायं, संवुवूर्षुः = संवरीतुम् ( आच्छादयितुम् ), इच्छुः, आज्ञां = शासकत्वं, विवरिषुः = प्रकाशयितुमिच्छुः सन्, कपिं = हनूमन्तं, हन्तुं = व्यापादयितुम्, अक्षम्यं = क्षन्तुमशक्यम्, असह्यपराक्रममिति भावः । अक्षम् = अक्षकुमारं, द्रुतं = शीघ्रम्, अवरिष्ट = वृतवान्, नियुक्तवानित्यर्थः ।

**ॐव्युत्पत्तिःॐ** संवुवूर्षुः—संपूर्वकाद् वृणोतेः सन्नन्तादुप्रत्ययः । "उदोष्ठ्यपूर्वस्य" इति उकारो रपरः । "इको झल्" इति सनः कित्त्वान्न गुणः । विवरिषुः—पूर्वधातोः पूर्ववत्प्रत्ययः । "इट् सनि वा" इति विभाषयेडागमः । गुणत्वं रपरत्वं च । अक्षम्यं—क्षन्तुमशक्योऽक्षम्यस्तम् । "क्षमूष् सहने" इति धातोः "पोरदुपधात्" इति यत् । अवरिष्ट—वृञो लुङि कर्तृगामिनि क्रियाफले आत्मनेपदे "लिङ्सिचोरात्मनेपदेषु" इतीट् ।

ॐभावार्थःॐ अपने अभिप्रायको छिपानेकी इच्छा करते हुए, एवम् आज्ञाको प्रकाशित करनेकी इच्छा रखते हुए रावणने हनूमानूजीको मारनेके लिए असह्य पराक्रमवाले अक्षकुमारको शीघ्र नियुक्त किया ॥ २६ ॥

**ऊचे-संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमम् ।**
**ध्वृषीष्ठा युधि मायाभिः स्वरिता शत्रुसम्मुखम् ॥ २७ ॥**

**अन्वयः**—ऊचे—( हे वत्स ! ) त्वं गच्छ, शत्रोः पराक्रमं संवरिषीष्ठाः, शत्रुसम्मुखं स्वरिता ( सन् ) युधि मायाभिः ध्वृषीष्ठाः ।

**व्याख्या**—ऊचे = जगाद, ( हे वत्स = हे अक्षकुमार ! ) त्वं, गच्छ = व्रज । शत्रोः = रिपोः, पराक्रमं = विक्रमं, संवरिषीष्ठाः = संवृणुष्व, संछादयेत्यर्थः । शत्रुसम्मुखं = रिपुसमक्षं, स्वरिता = उपतापयिता सन् , युधि = संग्रामे, मायाभिः = शाम्बरीभिः कर्त्रीभिः, ध्वृषीष्ठाः = कुटिलचारी भवतात् ।

ॐव्युत्पत्तिःॐ संवरिषीष्ठाः—संपूर्वाद्वृञः आशीर्लिङि थासि "लिङ्सिचोरात्मनेपदेषु" इति विकल्पादिट् । स्वरिता—स्वरतीति, "स्वृ शब्दोपतापयोः" इति । धातोः "ण्वुल्तृचौ" इति तृच् । "स्वरतिसूतिसूयतिधूञूदितो वा" इति विकल्पाद्वलादीट् । ध्वृषीष्ठाः—"ध्वृ हूर्च्छने ( कौटिल्ये )" इत्युदात्ताद्धातोः आशिषि कर्मणि लिङ् । "ऋतश्च संयोगादेः" इतीटो वैकल्पिकत्वात्तदभावपक्षे ( अनिट्पक्षे ) "उश्च" इति कित्त्वम्, अतो न गुणः । "ह्वृषीष्ठाः" इति पाठपक्षे "ह्वृ कौटिल्ये" इति धातुः, प्रक्रियाऽन्तराणि पूर्ववज्ज्ञेयानि ।

ॐभावार्थःॐ रावणने कहा—"हे वत्स ! तुम जाओ, शत्रुके पराक्रमको ( अपने पराक्रमसे ) आच्छादित कर दो, शत्रुके सामने उपताप करनेवाले होते हुए युद्धमें मायाओंसे कुटिल आचरण करनेवाले बनो ॥ २७ ॥

**द्रुतं संस्वरिषीष्ठास्त्वं निर्भयः प्रधनोत्तमे ।**
**स मायानामगात् सोता कपेर्विधवितुं द्युतिम् ॥ २८ ॥**

**अन्वयः**—( हे वत्स ! ) त्वं प्रधनोत्तमे निर्भयः ( सन् ) द्रुतं संस्वरिषीष्ठाः" । मायानां सोता स कपेः द्युतिं विधवितुम् अगात् ।

**व्याख्या**—( हे वत्स ! ) त्वं, प्रधनोत्तमे = महारणे, निर्भयः = निर्भीकः सन् , द्रुतं = शीघ्रं, संस्वरिषीष्ठाः = सम्यक् शब्दायस्व, उपतापय वा । ( अथ = तदनन्तरम् ) मायानां = शाम्बरीणां, सोता = जनकः, सः = अक्षकुमारः, कपेः = हनूमतः, द्युतिं = तेजः, विधवितुम् = अपनेतुम् , अगात् = गतः ।

ॐव्युत्पत्तिःॐ संस्वरिषीष्ठाः—स्वृधातोराशिर्लिङ् । "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदम् । "स्वरतिसूतिसूयती"त्यादिना विकल्पादिट् । मायानां—"सोते"ति

कृदन्तपदेन योगे कर्मणि षष्ठी । सोता—सूते इति, तृच् । "स्वरती"त्यस्य विकल्पत्वादिड्भावः । विधवितुं—विकल्पेनेट् ।

❀भाषाऽर्थः❀ हे वत्स ! तुम महायुद्धमें निर्भय होकर शीघ्र अच्छी तरहसे शब्द करो वा शत्रुको पीडित करो । ( रावणकी ऐसी आज्ञा पाकर ) मायाओंको उत्पन्न करनेवाला वह अक्षकुमार हनूमानूजीके तेजको हटानेके लिए चला ॥ २८ ॥

**विगाढाऽरं वनस्याऽसौ शत्रूणां गाहिता कपिः ।**
**अक्षं रधितुमारेभे रद्धा लङ्काऽनिवासिनाम् ॥ २९ ॥**

**अन्वयः**—वनस्य विगाढा शत्रूणाम् अरं गाहिता लङ्कानिवासिनां रद्धा असौ कपिः अक्षं रधितुम् आरेभे ।

**व्याख्या**—वनस्य = काननस्य, विगाढा = विलोडयिता, शत्रूणां = रिपूणाम् , अरं = शीघ्रम् , "अलम्" इति पाठे पर्याप्तमित्यर्थः । गाहिता = नाशयिता, लङ्कानिवासिनां = राक्षसानां, रद्धा = हिंसिता, असौ = पूर्वोक्तः, कपिः = हनूमान् , अक्षं = रावणकुमारं, रधितुं = हिंसितुम् , आरेभे = प्रारब्धवान् ।

❀व्युत्पत्तिः❀ वनस्य—कर्मणि षष्ठी । विगाढा—विगाहते इति, विपूर्वात् "गाहू विलोडने" इति धातोस्तृच् , ढत्वादिकार्यं च । शत्रूणां—कर्मणि षष्ठी । अरम्—"अथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ।" इत्यमरः । गाहिता—गाहूधातोस्तृच् , ऊदित्त्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इतीड्विकल्पः । लङ्कानिवासिनां—कर्मणि षष्ठी । रद्धा—रध्यतीति, "रध हिंसासंराद्ध्योः" इति धातोस्तृच् । "झषस्तथोर्धोऽधः" इति तस्य धः । रधितुम्—रधधातोस्तुमुन् , "रधादिभ्यश्च" इति विकल्पेन इडागमः ।

❀भाषाऽर्थः❀ वनका विलोडन करनेवाले, शत्रुओंको शीघ्र नष्ट करनेवाले और राक्षसोंके हिंसक हनूमानूजीने अक्षकुमारको मारनेके लिए आरम्भ किया ॥ २९ ॥

**निष्कोषितव्यान् निष्कोष्टुं प्राणान् दशमुखाऽऽत्मजात् ।**
**आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥**

**अन्वयः**—वनात् निष्कुषितद्रुमः ( सः ) दशमुखाऽऽत्मजात् निष्कोषितव्यान् प्राणान् निष्कोष्टुं परिघम् आदाय तस्थौ ।

**व्याख्या**—वनात् = काननात् , निष्कुषितद्रुमः = आकृष्टवृक्षः, ( सः=हनूमान् ) दशमुखाऽऽत्मजात् = रावणपुत्रात् , अक्षकुमारादिति भावः । निष्कोषितव्यान्=आकर्षणयोग्यान् , प्राणान् = असून् , निष्कोष्टुं = निष्कष्टुं, परिघम् = अर्गलम् , आदाय= गृहीत्वा, तस्थौ = स्थितः ।

❀व्युत्पत्तिः❀ निष्कुषितद्रुमः—निरुपसर्गपूर्वकात् "कुष निष्कर्षे" इति धातोः

क्तप्रत्यये "इण् निष्ठायाम्" इति इटि निष्कुषितपदसिद्धिः। निष्कुषिता द्रुमा येन सः। निष्कोषितव्यान्—निष्कोषितुमर्हान्, तव्यप्रत्ययः। "निरः कुष" इतीड्विकल्पः। निष्कोष्टुं—तुमुन् प्रत्ययः। इटो वैकल्पिकत्वात्पक्षे तदभावः।

ॐभाषाऽर्थःॐ वनसे पेड़ोंको निकाल ( उखाड़ ) कर हनूमान्जी अक्षकुमारसे निकालनेके योग्य प्राणोंको निकालनेके लिए परिघको लेकर खड़े हुए ॥ ३० ॥

एष्टारमेषिता संख्ये सोढारं सहिता भृशम्।
रेष्टारं रेषितं व्यास्यद् रोष्टाऽक्षः शस्त्रसंहतीः ॥ ३१ ॥

**अन्वयः**—एषिता संख्ये भृशं सहिता रोष्टा अक्षः एष्टारं सोढारं रेष्टारं रेषितुं शस्त्रसंहतीः व्यास्यत्।

**व्याख्या**—एषिता = प्रतिभटाऽन्वेषणशीलः, संख्ये = युद्धे, भृशम् = अत्यर्थं, सहिता = सहनशीलः, रोष्टा = रोषणशीलः, अक्षः = अक्षकुमारः, एष्टारं = प्रतिभटाऽन्वेषणशीलं, सोढारम् = अत्यर्थं सहनशीलं, रेष्टारं = हिंसकं, रेषितुं = हिंसितुं, शस्त्रसंहतीः = आयुधसमूहान्, व्यास्यत् = क्षिप्तवान्।

ॐव्युत्पत्तिःॐ एषिता—इच्छतीति तच्छीलः, "इषु इच्छायाम्" इति धातोस्ताच्छील्ये "तृन्" इति तृन्। "तीषसहलुभरुषरिषः" इति इड्विकल्पः। सहिता—सहत इति तच्छीलः, "षह मर्षणे" इति धातोस्तृन्। इड्विकल्पः। रोष्टा—रुष्यतीति तच्छीलः, तृच्प्रत्ययः। पक्षे इडभावः। एष्टारं—वैकल्पिकेडभावपक्षे रूपम्। सोढारं—वैकल्पिकेडभावपक्षे रूपम्। रेष्टारं—रेषतीति तच्छीलो रेष्टा तम्। "रिष हिंसायाम्" इति धातोस्तृन्। वैकल्पिकेडभावपक्षे रूपम्। रेषितुं—"तीषसहे"त्यादिना वैकल्पिक इडागमः। व्यास्यत्—विपूर्वात् "असु क्षेपणे" इति धातोर्लङि आडागमो वृद्धिश्च।

ॐभाषाऽर्थःॐ प्रतिभटको अन्वेषण करनेके शीलवाले, संग्राममें अतिशय सहनशील अक्षकुमारने प्रतिभटको अन्वेषण करनेके शीलवाले, सहनशील और हिंसक हनुमान्जीको मारनेके लिए शस्त्रसमूहोंको छोड़ा ॥ ३१ ॥

शस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः।
अर्दिधिषुर्यशः कीर्तिमीर्त्सुं वृक्षैरताडयत् ॥ ३२ ॥

**अन्वयः**—संख्ये शस्त्रैः दिदेविषुं कीर्तिम् ईर्त्सुम् ( अक्षम् ) कपिः परिघं दुद्यूषुः यशः अर्दिधिषुः ( सन् ) वृक्षैः अताडयत्।

**व्याख्या**—संख्ये = संग्रामे, शस्त्रैः = आयुधैः, दिदेविषुं = क्रीडितुमिच्छुम्, कीर्तिं = यशः, ईर्त्सुं = वर्धयितुमिच्छुम्, ( अक्षम् = अक्षकुमारम् ), कपिः = हनूमान्, परिघम् = परिघेण, अर्गलेनेत्यर्थः, दुद्यूषुः=दिदेविषुः, क्रीडितुमिच्छुः सन्नित्यर्थः।

यशः=कीर्तिम् , अर्दिधिषुः=वर्द्धयितुमिच्छुः सन् । वृक्षैः=तरुभिः करणैः, अताडयत्=प्राहरत् , स्थितेऽपि परिघे कञ्चित्कालं यावद्वृक्षताडनैश्चिक्रीडेति भावः ।

ॐव्युत्पत्तिःॐ दिदेविषुं—देवितुमिच्छुर्दिदेविषुस्तं, दीव्यतेः इवन्तस्य सन्नन्तादुप्रत्यये "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णभरज्ञपिसनाम्" इतीड्विकल्पः । ईर्त्सुम्—अर्धितुम् ( अर्धयितुम् ) इच्छुः ईर्त्सुस्तम् । अन्तर्भावितणिजर्थोऽयं निर्देशः । "ऋधु वृद्धौ" इति सन्नन्ताद्धातोः उप्रत्ययः । इडभावपक्षे "आपूज्ञप्यृधामीत्" इत्यकारस्य रपर ईकारः । ततो द्विर्वचने "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपे ईर्त्सुः । परिघं—दिवुधातोर्योगे "दिवः कर्म च" इति करणस्य कर्मत्वम् । दुद्यूषुः—सन्नन्ताद्दिवु धातोरुः । इडभावपक्षे "हलन्ताच्च" इति सनः कित्वे "च्छ्वोः शूडनुनासिके च" इति वस्य ऊठादेशो यणादेशश्च । अर्दिधिषुः—अर्धितुम् ( अर्धयितुम् ) इच्छुः, ऋधुधातोः सन्नन्तादुः । "सनीवन्तर्धे"त्यादिना इड्विकल्पः । लघूपधगुणे रपरे च "नन्द्राः संयोगादयः" इति निषेधाद्रेफवर्जितस्य धिशब्दस्य द्विर्वचने अभ्यासस्य जश्त्वं च । अताडयत्—"तड आघाते" इति चौरादिकधातोर्लङ् ।

ॐभाषाऽर्थःॐ संग्राममें शस्त्रोंसे क्रीडा करनेकी इच्छा करनेवाले तथा कीर्तिको बढ़ानेकी इच्छा रखनेवाले अक्षकुमारको हनूमान्‌जीने परिघसे खेलनेकी इच्छा करते हुए तथा यशको बढ़ानेकी इच्छा रखते हुए, वृक्षोंसे आघात किया ॥३२॥

भूयस्तं धिप्सुमाहूय राजपुत्रं दिदम्भिषुः ।
अहंस्ततः स मूर्च्छावान् संशिश्रीषुरभूद् ध्वजम् ॥ ३३ ॥

अन्वयः—धिप्सुं तं राजपुत्रं भूयो दिदम्भिषुः ( हनूमान् ) आहूय अहन् । ततः स मूर्च्छावान् ध्वजं संशिश्रीषुः अभूत् ।

**व्याख्या**—धिप्सुं = दम्भितुम् ( वञ्चयितुम् ) इच्छुः, तं = पूर्वोक्तं, राजपुत्रं= राजकुमारम् , अक्षकुमारमित्यर्थः । भूयः = पुनः, दिदम्भिषुः = दम्भितुम् ( वञ्चयितुम् ) इच्छुः, हनूमानिति शेषः । आहूय="आगच्छे"त्याकार्य, अहन् = हतवान् । ततः = घाताऽनन्तरं, सः=अक्षकुमारः, मूर्च्छावान् = मूर्च्छितः सन् , ध्वजं = ध्वजस्तम्भं, संशिश्रीषुः = संश्रयितुमिच्छुः, अभूत् = अभवत् ।

ॐव्युत्पत्तिःॐ धिप्सुं—"दम्भु दम्भने" इति धातोः सन्नन्तात् उप्रत्ययः । "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णभरज्ञपिसनाम्" इति विकल्पादनिट्पक्षे "दम्भ इच्च" दम्भेरच इकारः । पूर्ववदभ्यासलोपः । "हलन्ताच्चे"त्यत्र हल्ग्रहणस्य जातिपरत्वात् सनः कित्वे "अनिदितां हल उपधायाः क्ङिति" इत्युपधानकारलोपः । दकारस्य भष्भावे धकारः, "खरि चे"ति चर्त्वे भकारस्य पकारः । दिदम्भिषुः—पूर्ववत्प्रत्ययः । पूर्वसूत्रेण इट्पक्षे रूपम् । अहन्—"हन् हिंसागत्योः" इति धातोर्लङि हल्ङ्यादि-

लोपः। संशिश्रीषुः—संपूर्वकात् "श्रिञ् सेवायाम्" इति सन्नन्ताद्धातोरुः। "सनीवन्तर्ध"त्यादिना विकल्पादनिट्पक्षे "अज्झनगमां सनि" इति दीर्घत्वम्।

ॐभाषाऽर्थःॐ वञ्चना करनेकी इच्छा करनेवाले उस राजपुत्र ( अक्षकुमार ) को फिर वञ्चना करनेकी इच्छा करनेवाले हनूमान्जीने बुला (ललकार) कर प्रहार किया। तब वह मूर्च्छित होता हुआ ध्वजस्तम्भको आश्रय करनेवाला हो गया ॥ ३३ ॥

**आश्वास्याऽक्षः क्षणाल्लोकान् बिभ्रक्षुरिव तेजसा।**
**रुषा बिभ्रज्जिषुप्रख्यं कपिं बाणैरवाकिरत् ॥ ३४ ॥**

**अन्वयः**—अक्षः क्षणात् आश्वस्य तेजसा लोकान् बिभ्रक्षुः इव रुषा बिभ्रज्जिषुप्रख्यं कपिं बाणैः अवाकिरत्।

**व्याख्या**—अक्षः = अक्षकुमारः, क्षणात् = क्षणमात्रेण, आश्वस्य = चेतनां लब्ध्वा, तेजसा=स्वप्रतापेन, लोकान् = भुवनानि, बिभ्रक्षुरिव=भ्रष्टुमिच्छुरिव, दिधक्षुरिवेति यावत्। उत्प्रेक्षाऽलङ्कारः। रुषा=कोपेन, बिभ्रज्जिषुप्रख्यं=वह्निसदृशं, कपिं = हनूमन्तं, बाणैः = शरैः, अवाकिरत्=आच्छादितवान्।

ॐव्युत्पत्तिःॐ बिभ्रक्षुः—"भ्रस्ज पाके" इति सन्नन्ताद्धातोरुः। अनिट्पक्षे "स्कोः संयोगाद्योरन्ते च" इति सलोपः, "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति षः, "षढोः कः सि" इति कत्वम्, "इण्कोः" इति षत्वं च। बिभ्रज्जिषुप्रख्यं—भ्रष्टुमिच्छुर्बिभ्रज्जिषुः, पूर्ववदुप्रत्ययः। "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इति इट्पक्षे "भ्रस्जोरोपधयोरमन्यतरस्याम्" इति रमागमाऽभावपक्षे सकारस्य श्चुत्वे जश्त्वे च। बिभ्रज्जिषुणा सदृशो बिभ्रज्जिषुप्रख्यस्तम्। अवाकिरत्=अवपूर्वकात् "कॄ विक्षेपे" इति धातोर्लङि रूपम्।

ॐभाषाऽर्थःॐ कुछ क्षणके अनन्तर होशमें आकर तेजसे लोकोंको जलाते हुएके सदृश अक्षकुमारने क्रोधसे अग्नितुल्य हनूमान्जीको बाणोंसे आच्छादित किया ॥३४॥

**संयुयूषुं दिशो बाणैरक्षं यियविषुर्द्रुमैः।**
**कपिर्मायामिवाऽकार्षीद्दर्शयन् विक्रमं रणे ॥ ३५ ॥**

**अन्वयः**—बाणैः दिशः संयुयूषुम् अक्षं द्रुमैः यियविषुः कपिः रणे विक्रमं दर्शयन् मायाम् इव अकार्षीत्।

**व्याख्या**—बाणैः = शरैः, दिशः = आशाः, संयुयूषुं=संयवितुम् ( मिश्रयितुम् ) इच्छुम्, अक्षम्=अक्षकुमारं, द्रुमैः=वृक्षैः, यियविषुः=यवितुम् ( मिश्रयितुम् ) इच्छुः, कपिः=हनूमान्, रणे=संग्रामे, विक्रमं = पराक्रमं, दर्शयन् = विलोकयन्, मायाम् इव = इन्द्रजालम् इव, अकार्षीत्=कृतवान्, असंख्यातान्द्रुमान्ववर्षेति भावः।

ॐव्युत्पत्तिःॐ संयुयूर्षु—"यु मिश्रणाऽमिश्रणयोः" इति धातोः सन्नन्तादुः । "सनीवन्ते"त्यादिना अनिट्पक्षे "अज्झनगमां सनि" इति दीर्घः । यियविषुः—पूर्ववद्विग्रहाऽर्थौ । "सनीवन्ते"त्यादिना इट्पक्षे गुणाऽवादेशौ "ओः पुयण्ज्यपरे" इतीत्वम् । उत्प्रेक्षाऽलङ्कारः ।

ॐभाषाऽर्थःॐ बाणोंसे दिशाओंको मिश्रित करनेको इच्छुक अक्षकुमारको वृक्षोंसे मिश्रित करनेको इच्छुक हनूमान्‌जीने युद्धमें पराक्रम दिखाते हुए जैसे इन्द्रजाल कर दिया ॥ ३५ ॥

वानरं प्रोर्णुनविषुः शस्त्रैरक्षो विदिद्युते ।
तं प्रोर्णुनुषुरुपलैः सवृक्षैराबभौ कपिः ॥ ३६ ॥

**अन्वयः**—अक्षः वानरं शस्त्रैः प्रोर्णुनविषुः ( सन् ) विदिद्युते । कपिः सवृक्षैः उपलैः तं प्रोर्णुनूषुः ( सन् ) आबभौ ।

**व्याख्या**—अक्षः = अक्षकुमारः वानरं = हनूमन्तं, शस्त्रैः = आयुधैः, प्रोर्णुनविषुः = आच्छादयितुमिच्छुः सन्, विदिद्युते = विदिदीपे । कपिः=हनूमान्, सवृक्षैः= तरुसहितैः, पुस्तकान्तरे "स वृक्षैः" इति असमस्तः पाठः । उपलैः = पाषाणैः, तम् = अक्षकुमारं, प्रोर्णुनूषुः=आच्छादयितुमिच्छुः सन्, आबभौ = भाति स्म ।

ॐव्युत्पत्तिःॐ प्रोर्णुनविषुः—प्रोर्णुवितुमिच्छुः, प्रपूर्वकात् "ऊर्णुञ् आच्छादने" इति सन्नन्ताद्धातोरुप्रत्ययः । "सनीवन्तर्धे"त्यादिना विभाषेट् । इट्पक्षे गुणश्च । "न न्द्राः संयोगादयः" इति रेफस्य द्वित्वाऽभावः । विदिद्युते—"द्युत दीप्तौ" इति धातोर्लिट् । "द्युतिस्वाप्योः सम्प्रसारणम्" इत्यभ्यासस्य संप्रसारणम् । प्रोर्णुनूषुः—प्रपूर्वकात् ऊर्णुञ्-धातोः पूर्ववद्विग्रहाऽर्थौ । इडभावपक्षे "अज्झनगमां सनि" इति दीर्घत्वम् । रेफस्य द्वित्वाऽभावः पूर्ववज्ज्ञेयः ।

ॐभाषाऽर्थःॐ अक्षकुमार हनूमान्‌जीको शस्त्रोंसे आच्छादित करनेकी इच्छा करता हुआ दीप्यमान हुआ । हनूमान्‌जी भी वृक्षोंके साथ पत्थरोंसे उसको आच्छादित करनेकी इच्छा करते हुए शोभित हुए ॥ ३६ ॥

"स्वां जिज्ञापयिषू शक्तिं बुभूर्षू नु जगन्ति किम् ।"
शस्त्रैरित्यकृषातां तौ पश्यतां बुद्धिमाहवे ॥ ३७ ॥

**अन्वयः**—"तौ स्वां शक्तिं जिज्ञापयिषू नु, जगन्ति शस्त्रैः बुभूर्षू किम् ?" आहवे पश्यताम् इति बुद्धिम् आकृषाताम् ।

**व्याख्या**—तौ=कपिराक्षसौ, स्वाम् = आत्मीयां, शक्तिं = सामर्थ्यं, जिज्ञापयिषू नु = ज्ञापयितुमिच्छू किम् ? जगन्ति = लोकान्, शस्त्रैः = आयुधैः, बुभूर्षू किं =

भर्तुम् ( पूरयितुम् ) इच्छू नु ? आहवे=संग्रामे, पश्यतां = विलोकयतां जनानाम्, इति=एवंविधां, बुद्धिं=मतिं, वितर्करूपामित्यर्थः। अकृषातां = कृतवन्तौ।

॥व्युत्पत्तिः॥ जिज्ञापयिषू = सन्नन्ताज्ज्ञापि धातोः "सनाशंसभिक्ष उः" इत्युः। "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इतीड्विकल्पः। नु = वितर्कद्योतकमव्ययमेतत्। बुभूर्षू=सन्नन्तात् "भृञ् भरणे" इति धातोरुः। पूर्वसूत्रेणैव इड्विकल्पः। अकृषातां="डुकृञ् करणे" इति धातोरात्मनेपदे लुङ्। "ह्रस्वादङ्गात्" इति सिचो लोपः।

॥भाषाऽर्थः॥ "वे दोनों (हनमानूजी और अक्षकुमार) अपनी शक्तिको जतानेकी इच्छा करते हैं क्या? अथवा लोकोंको शस्त्रोंसे पूर्ण करनेकी इच्छा करते हैं क्या?" उन दोनोंने संग्राममें देखने वालोंको ऐसा वितर्क उत्पन्न कर दिया॥ ३७॥

**मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियम्।**
**सम्प्राप्य वानरं भूमौ पपात परिघाऽऽहतः॥ ३८॥**

**अन्वयः**—राक्षसो मायाभिः सुचिरं क्लिष्ट्वा अक्लिशितक्रियं वानरं संप्राप्य परिघाऽऽहतः ( सन् ) भूमौ पपात।

**व्याख्या**—राक्षसः=अक्षकुमारः, मायाभिः = शाम्बरीभिः, सुचिरं=बहुकालं यावत्, क्लिष्ट्वा = क्लिशित्वा, क्लेशं कृत्वेत्यर्थः, चिरं युद्ध्वेति भावः। अक्लिशितक्रियम् = अक्लिष्टकर्माणम्, अखण्डितपौरुषमित्यर्थः। वानरं = हनूमन्तं, संप्राप्य= समासाद्य, परिघाऽऽहतः = परिघताडितः सन्, भूमौ = पृथिव्यां, पपात = पतितः, ममारेति भावः।

॥व्युत्पत्तिः॥ क्लिष्ट्वा—"क्लिश उपतापे" इति दैवादिकाद्धातोः "समानकर्तृकयोः पूर्वकाले" इति क्त्वा। "क्लिशः क्त्वानिष्ठयोः" इतीड्विकल्पात्पक्षे तदभावः। अक्लिशितक्रियम् = अक्लिशिता क्रिया यस्य तम्। अक्लिशितेत्यत्र क्लिशधातोर्निष्ठायां पूर्वसूत्रेण इड्विकल्पः।

॥भाषाऽर्थः॥ राक्षस (अक्ष) मायाओंसे बहुत समय तक क्लेश (युद्ध) कर अखण्डित पुरुषाऽर्थवाले हनूमान्जीको पाकर परिघसे ताडित होकर भूमिमें गिर पड़ा।३८।

युग्मम् ३९-४०।

**पवितोऽनुगुणैर्वातैः शीतैः पूत्वा पयोनिधौ।**
**बभञ्जाऽध्युषितं भूयः क्षुधित्वा पत्रिभिर्वनम्॥ ३९॥**

**अन्वयः**—( कपिः ) पयोनिधौ पूत्वा अनुगुणैः शीतैः वातैः पवितः ( सन् ) पत्रिभिः क्षुधित्वा अध्युषितं वनं भूयो बभञ्ज।

व्याख्या—( कपिः = हनूमान् ) पयोनिधौ = समुद्रे, पूत्वा=पवित्वा, स्नात्वेत्यर्थः । अनुगुणैः = अनुकूलैः, शीतैः = शीतलैः, वातैः = वायुभिः, पवितः = पूतः सन्, पत्त्रिभिः = पक्षिभिः, क्षुधित्वा = बुभुक्षित्वा, अध्युषितम्=अधिष्ठितं, वनं = काननं, भूयः = पुनः, बभञ्ज=भग्नवान् ।

॥व्युत्पत्तिः॥ पूत्वा—"पूङ् पवने" इति धातोः क्त्वाप्रत्ययः । "पूङश्चे"ति क्त्वानिष्ठयोरिड्विकल्पात्पक्षे तदभावः । पवितः—क्तप्रत्यये पूर्वसूत्रेण इड्विकल्पः । क्षुधित्वा—"क्षुध बुभुक्षायाम्" इति धातोः क्त्वा । "वसतिक्षुधोरिट्" इति क्त्वानिष्ठयोर्नित्यमिट् । अध्युषितम्—अधिपूर्वकात् "वस निवासे" इति धातोः क्तप्रत्यये पूर्वसूत्रेण इडागमः, सम्प्रसारणं "शासिवसिघसीनां च" इति षत्वं च ।

॥भाषाऽर्थः॥ समुद्रमें स्नानकर अनुकूल ठण्डे वायुसे पवित्र होते हुए तथा पक्षियोंसे क्षुधित होकर निवास किये गये वनको हनूमान्‌जीने फिर भङ्ग किया ॥३९॥

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवहन् ।
दधद् विलुभितं वातैः केशरं वह्निपिङ्गलम् ॥ ४० ॥

अन्वयः—उच्चैः अञ्चितलाङ्गूलः शिरः अञ्चित्वा इव संवहन् वातैः विलुभितं वह्निपिङ्गलं केशरं दधत् ( कपिः बभञ्ज ) ।

व्याख्या—उच्चैः=उन्नतं यथा तथा, अञ्चितलाङ्गूलः=उदञ्चितपुच्छः, शिरः= मूर्द्धानम्, अञ्चित्वा इव=पूजयित्वा इव, अनम्रत्वादिति शेषः । संवहन्=धारयन्, विजयोत्साहादूर्ध्वीकृतशिरःपुच्छ इत्यर्थः । वातैः=वायुभिः, विलुभितं=चञ्चलीकृतं, वह्निपिङ्गलम्=अग्निपीतं, केशरं=सटां, दधत्=धारयन्, कपिर्बभञ्जेति पूर्वेण सम्बन्धः ।

॥व्युत्पत्तिः॥ अञ्चितलाङ्गूलः—अञ्चितं लाङ्गूलं यस्य सः । "अञ्चु गतिपूजनयोः" इति धातोः "अञ्चेः पूजायाम्" इति पूजार्थे क्तप्रत्यये इडागमः । अञ्चित्वा—पूजार्थे क्त्वाप्रत्ययः । लाङ्गूलशिरसोरुन्नमनमेव पूजा । विलुभितं—विपूर्वकात् "लुभ विमोहने" इति धातोः विमोहने ( व्याकुलीकरणे ) क्त्वानिष्ठयोः "लुभो विमोहने" इति नित्यमिट् ।

॥भाषाऽर्थः॥ पूंछ और शिरको बहुत ऊँचाकर धारण करते हुए, वायुसे चञ्चल किये गये, तथा अग्निके तुल्य पीतवर्ण केशको धारण करते हुए हनूमान्‌जीने वनको फिर भङ्ग किया ॥ ४० ॥

जरित्वेव जवेनाऽन्ये निपेतुस्तस्य शाखिनः ।
व्रश्चित्वा विवशानन्यान् बलेनाऽपातयत् तरून् ॥ ४१ ॥

अन्वयः—अन्ये शाखिनः जरित्वा इव तस्य जवेन निपेतुः । ( कपिः ) अन्यान् तरून् व्रश्चित्वा विवशान् अपातयत् ।

**व्याख्या**--अन्ये = अपरे, शाखिनः = वृक्षाः, जरित्वा इव = जीर्णा भूत्वा इव, तस्य=हनूमतः, जवेन = वेगेन, निपेतुः = निपतिताः। (कपिः = हनूमान्) अन्यान् = अपरान्, तरून् = वृक्षान्, व्रश्चित्वा = छित्वा, पाणितलेनेति शेषः। विवशान् = निरालम्बान्, कृत्वेति शेषः। अपातयत् = पातितवान्।

ॐव्युत्पत्तिःॐ जरित्वा—"जॄष् वयोहानौ" इति धातोः क्त्वा। "जॄव्रश्च्योः क्त्वि" इति नित्यमिट्। व्रश्चित्वा—"ओव्रश्चू छेदने" इति धातोः क्त्वा इडागमश्च पूर्ववत्।

ॐभाषाऽर्थःॐ अन्य वृक्ष जीर्णके सदृश होकर हनूमानूजीके वेगसे गिर पड़े। हनूमानूजीने और वृक्षोंको छेदनकर निरालम्ब बनाकर गिराया ॥ ४१ ॥

**दमित्वाऽप्यरिसंघातानश्रान्त्वा कपिकेशरी।**
**वनं चचार कर्तिष्यन् नर्त्स्यन्निव निरङ्कुशः॥ ४२ ॥**

**अन्वयः**—कपिकेशरी अरिसङ्घातान् दमित्वा अपि अश्रान्त्वा कर्तिष्यन् नर्त्स्यन् इव निरङ्कुशः (सन्) वनं चचार।

**व्याख्या**—कपिकेशरी = वानरसिंहः, हनूमानित्यर्थः। अरिसङ्घातान् = शत्रुसमूहान्, दमित्वा अपि = दान्त्वा अपि, हत्वाऽपीत्यर्थः। अश्रान्त्वा = अश्रमित्वा, अश्रान्तो भूत्वेत्यर्थः। कर्तिष्यन् = पुनश्छेत्स्यन्, नर्त्स्यन् इव = नर्तिष्यन् इव, निरङ्कुशः = दुर्वारः सन्, वनं = विपिनं, चचार = बभ्रामेत्यर्थः।

ॐव्युत्पत्तिःॐ कपिकेशरी—कपिः केशरीव, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति समासः। दमित्वा—"दमु उपशमे" इति धातोः क्त्वाप्रत्ययः। तत्र "उदितो वा" इति विकल्पेन इट्। अश्रान्त्वा—"श्रमु तपसि खेदे च" इति धातोः क्त्वाप्रत्ययः। "उदितो वे"त्यस्य वैकल्पिकत्वात्पक्षे इडभावः। कर्तिष्यन्—"कृती छेदने" इति धातोः लृटः शत्रादेशः। "सेऽसिचि कृतचृतच्छृदतृदनृतः" इति सकाराद्यार्धधातुके विभाषयेट्। नर्त्स्यन्—"नृती गात्रविक्षेपे" इति धातोर्लृटः शत्रादेशः। वैकल्पिकत्वात्पक्षे इडभावः।

ॐभाषाऽर्थःॐ कपिश्रेष्ठ हनूमानूजी शत्रु-समूहोंको दमन करके भी श्रान्त न होकर वनको फिर छेदन करते हुए नाचनेवालेके सदृश निरङ्कुश होते हुए वनमें घूमने लगे ॥ ४२ ॥

**पारं जिगमिषन् सोऽथ पुनराघत्स्यतां द्विषाम्।**
**मत्तद्विरदवद् रेमे वने लङ्कानिवासिनाम्॥ ४३ ॥**

**अन्वयः**—अथ सः पुनः आघत्स्यतां द्विषां पारं जिगमिषन् लङ्कानिवासिनां वने मत्तद्विरदवत् रेमे।

**व्याख्या**—अथ = वनचरणाऽनन्तरं, सः = हनूमान्, पुनः = भूयः, आवर्त्स्यताम् = आवर्तिष्यमाणानाम्, आगमिष्यतामित्यर्थः । द्विषां = शत्रूणां, पारम् = अन्तं, जिगमिषन् = गन्तुमिच्छन्, लङ्कानिवासिनां = राक्षसानां, वने = उपवने, मत्तद्विरदवत् = मत्तगज इव, रेमे = चिक्रीड ।

॥व्युत्पत्तिः॥ आवर्त्स्यताम्—आवर्त्स्यन्तीति आवर्त्स्यन्तस्तेषाम्, आङ्पूर्वकात् "वृतु वर्तने" इति धातोर्लृटः "लृटः सद्वा" इति शत्रादेशः । "वृद्भ्यः स्यसनोः" इति परस्मैपदं "न वृद्भ्यश्चतुर्भ्यः" इति परस्मैपदे इट्प्रतिषेधः । जिगमिषन्—सन्नन्ताद्गमधातोर्लटः शत्रादेशः । "गमेरिट् परस्मैपदेषु" इतीडागमः । रेमे—"रमु क्रीडायाम्" इति धातोर्लिट् ।

॥भाषाऽर्थः॥ तदनन्तर हनूमान्जी फिर आनेवाले शत्रुओंके अन्तको जानकी इच्छा करते हुए राक्षसोंके वनमें मत्त हाथीकी तरह क्रीडा करने लगे ॥ ४३ ॥

'यद्यकल्प्स्यदभिप्रायो योद्धुं रक्षःपतेः स्वयम् ।
तमप्यकर्त्स्यमद्याऽहं' वदन्नित्यचरत् कपिः ॥ ४४ ॥

**अन्वयः**—"रक्षःपतेः स्वयं योद्धुम् अभिप्रायः अकल्प्स्यत् यदि, ( तदा ) अद्य अहं तम् अपि अकर्त्स्यम्" इति वदन् कपिः अचरत् ।

**व्याख्या**—रक्षःपतेः = रावणस्य, स्वयं = स्वत एव, योद्धुं = युद्धं कर्तुम्, अभिप्रायः = आशयः, अकल्प्स्यत् यदि = अकल्पिष्यत चेत्, समपत्स्यच्चेदित्यर्थः । ( तदा ) अद्य = अस्मिन्दिने, अहं = हनूमान्, तम् अपि = तादृशमभिप्रायम् अपि, युयुत्सामपीति भावः । अकर्त्स्यम् = अकर्तिष्यम्, अच्छेत्स्यमित्यर्थः । इति = एवं, वदन् = कथयन्, कपिः = हनूमान्, अचरत् = अभ्रमत् इत्यर्थः ।

॥व्युत्पत्तिः॥ अकल्प्स्यत्—"कृपू सामर्थ्ये" इति धातोः क्रियाऽतिपत्तौ "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इति लृङ् । "लुटि च क्लृपः" इति चकारात्परस्मैपदम् । "तासि च क्लृपः" इति चकारात् सकाराद्यार्धधातुकेऽपि परस्मैपदेष्विट्प्रतिषेधः । अकर्त्स्यम्—"कृती छेदने" इति धातोः पूर्ववल्लृङि "सेऽसिचि कृते"त्यादिना सकाराद्यार्धधातुकस्य नेट् ।

॥भाषाऽर्थः॥ "राक्षसेश्वर रावणका स्वयम् लड़नेका आशय हो तो भी आज मैं उस (आशय) को भी छिन्न करूंगा" ऐसा कहते हुए हनूमानजी विचरण करनेलगे ४४

हते तस्मिन् प्रियं श्रुत्वा कल्प्ता प्रीतिं परां प्रभुः ।
तोषोऽद्यैव च सीतायाः परश्चेतसि कल्प्स्यति ॥ ४५ ॥

**अन्वयः**—तस्मिन् हते प्रियं श्रुत्वा प्रभुः परां प्रीतिं कल्प्ता, अद्य एव सीतायाः चेतसि परः तोषः कल्प्स्यति ।

व्याख्या—तस्मिन् = रावणे, हते = व्यापादिते, मयेति शेषः । प्रियम् = अभीष्टम् , उदन्तमिति शेषः, श्रुत्वा = आकर्ण्य, प्रभुः = स्वामी, राम इत्यर्थः, पराम् = उत्कृष्टां, प्रीतिं = प्रेम, कल्प्ता = जनयिता । किञ्च—अद्य एव = अस्मिन्दिन एव, सीतायाः = मैथिल्याः, चेतसि = चित्ते, परः = निरतिशयः, तोषः = हर्षः, कल्प्स्यति = कल्पिष्यते, भविष्यतीत्यर्थः ।

ॐव्युत्पत्तिःॐ कल्प्ता—"कृपू सामर्थ्ये" इति धातोर्लुट् । अन्तर्भावितणिजर्थोऽयं, क्लृपेरकर्मकत्वात् । "तासि च क्लृपः" इतीट्प्रतिषेधः, "लुटि च क्लृपः" इति परस्मैपदम् । कल्प्स्यति—"तासि च क्लृप" इतीट्प्रतिषेधः । "लुटि च क्लृप" इति वैकल्पिकं परस्मैपदम् ।

ॐभाषाऽर्थःॐ रावणके मारे जानेपर अभीष्ट वृत्तान्त सुनकर स्वामी रामचन्द्र अतिशय प्रेम करेंगे । आज ही सीताजीके चित्तमें अतिशय हर्ष होगा ॥ ४५ ॥

युग्मम् ४६–४७ ।

**आहूय रावणोऽवोचदथेन्द्रजितमन्तिकात् ।**
**'वने मत्त इव क्रुद्धो गजेन्द्रः प्रधनेष्वटन् ॥ ४६ ॥**

अन्वयः—अथ रावण इन्द्रजितम् अन्तिकात् आहूय अवोचत्–"वने मत्तो गजेन्द्र इव क्रुद्धः प्रधनेषु अटन् ( द्विषाम् अन्तं ययाथ० ) ।

व्याख्या—अथ = अक्षवधश्रवणाऽनन्तरं, रावणः = दशाऽऽननः, इन्द्रजितं= मेघनादम् , अन्तिकात् = अन्तिकम्, आहूय = आकार्य, अवोचत् = अभाषत । वने= विपिने, मत्तः = क्षीबः, गजेन्द्र इव = श्रेष्ठहस्ती इव, क्रुद्धः = कुपितः, प्रधनेषु = संग्रामेषु, अटन् = संचरन्, "त्वम् असकृत् द्विषाम् अन्तं ययाथ, भूयो यातासि च" इत्युत्तरश्लोकस्थवाक्ययोरध्याहारः ।

ॐव्युत्पत्तिःॐ अन्तिकात्—"दूराऽन्तिकाऽर्थेभ्यो द्वितीया च" इति चकारात्पञ्चमी । अवोचत्—"वच परिभाषणे" इति धातोर्लुङ् । "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यङ् । "वच उम्" इत्युमागमः ।

ॐभाषाऽर्थःॐ अक्षकुमारके वधको सुननेके अनन्तर रावणने इन्द्रजित्को निकट बुलाकर कहा—"वनमें मत्त श्रेष्ठ हाथीके सदृश क्रुद्ध होकर संग्रामोंमें घूमते हुए तुम बारम्बार शत्रुओंके पारको गये थे और फिर जाओगे भी ॥ ४६ ॥

**ययाथ त्वं द्विषामन्तं भूयो यातासि चाऽसकृत् ।**
**शशकथ जेतुं त्वं देवान् मायाः सस्मर्थ सयति ॥ ४७ ॥**

अन्वयः—( त्वम् ) असकृत् द्विषाम् अन्तं ययाथ, भूयो यातासि च । त्वं देवान् जेतुं शशक्थ, सयति मायाः सस्मर्थ ।

**व्याख्या**—( त्वम् ) असकृत् = वारं वारं, द्विषां = शत्रूणाम्, अन्तं = पारं, ययाथ = अयासीः । भूयः = पुनरपि, यातासि च = यास्यसि च । त्वम् = इन्द्रजित्, देवान् = सुरान्, जेतुम् = अभिभवितुं, शशक्थ = अशकः । संयति=युद्धे, मायाः = शाम्बरीः, सस्मर्थ = अस्मार्षीः ।

※व्युत्पत्तिः※ ययाथ—"या प्रापणे" इति धातोर्लिटि मध्यमपुरुषैकवचने रूपम् । यातेस्तासौ नित्यमनिट्त्वात् क्रादिनियमात्प्राप्तस्येटः "अचस्तास्वत्थल्यनिटो नित्यम्" इतीट्प्रतिषेधः । यातासि—याधातोर्लुट् । तासौ नित्यमनिट् । शशक्थ—शकेर्लिटि थासि "उपदेशेऽत्वतः" इति थलीट्प्रतिषेधः । शकेस्तासौ नित्याऽनिट्त्वम् । सस्मर्थ—"स्मृ आध्याने" इति धातोर्लिट् । "ऋतो भारद्वाजस्य" इतीट्प्रतिषेधः ।

※भाषाऽर्थः※ तुम बारम्बार शत्रुओंके पारको गये थे और फिर जाओगे भी । तुम देवताओंको जीतनेको समर्थ हुए थे, तुमने संग्राममें मायाओंका स्मरण किया था ॥४७॥

त्वं ससर्जिथ शस्त्राणि दद्रष्ठाऽरींश्च दुःसहान् ।
शस्त्रैरादिथ शस्त्राणि त्वमेव महतामपि ॥ ४८ ॥

**अन्वयः**—त्वं शस्त्राणि ससर्जिथ, दुःसहान् अरींश्च दद्रष्ठ । त्वम् एव महताम् अपि शस्त्राणि शस्त्रैः आदिथ ।

**व्याख्या**—त्वं, शस्त्राणि = आयुधानि, ससर्जिथ=ससष्ठ, क्षिप्तवानसीति भावः । दुःसहान् = दुर्धर्षान्, अरींश्च = शत्रूंश्च, दद्रष्ठ = ददर्शिथ, दृष्टवानसीत्यर्थः, न पलायितोऽसीति भावः । त्वम् एव, महताम् अपि = इन्द्रादीनाम् अपि, शस्त्राणि = आयुधानि, शस्त्रैः = स्वकीयैरायुधैः, आदिथ = भक्षितवानसि, त्वमेव इन्द्रादीनामपि देवानामायुधानि नाशितवानसीति भावः ।

※व्युत्पत्तिः※ ससर्जिथ—"सृज विसर्गे" इति धातोर्लिट्, "विभाषा सृजिदृशोः" इति थलि इड्विकल्पः । दद्रष्ठ—"दृशिर् प्रेक्षणे" इति धातोर्लिट् । पूर्वसूत्रेण इटो वैकल्पिकत्वात्पक्षे तदभावः, "सृजिदृशोर्झल्यमकिति" इत्यमागमः षत्वष्टुत्वे च । आदिथ—"अद भक्षणे" इति धातोर्लिट् । "इडत्त्यर्तिव्ययतीनाम्" इति थलो नित्यमिट् ।

※भाषाऽर्थः※ तुमने शस्त्रोंका प्रहार किया है, दुःसह शत्रुओंको भी देखे हो । तुम्हीं इन्द्र आदि महान् देवोंके भी शस्त्रोंको अपने शस्त्रोंसे ग्रास किये हो ॥ ४८ ॥

स त्वं हनिष्यन् दुर्बुद्धिं कपिं व्रज ममाऽऽज्ञया ।
मा नाऽञ्जीः राक्षसीर्मायाः प्रस्तावीर्मा न विक्रमम् ॥ ४९ ॥

**अन्वयः**—स त्वं दुर्बुद्धिं कपिं हनिष्यन् मम आज्ञया व्रज, राक्षसीः माया मा न अञ्जीः, विक्रमं मा न प्रस्तावीः ।

**व्याख्या**—सः = पूर्वोक्तगुणविशिष्टः, त्वम् = इन्द्रजित्, दुर्बुद्धिं=दुष्टमतिम्, अनुचितकर्मारम्भित्वादिति भावः। कपिं = वानरं, हनिष्यन् = व्यापादयिष्यन्, मम = रावणस्य, आज्ञया = आदेशेन, व्रज = गच्छ। राक्षसीः = रक्षःसम्बन्धिनीः, मायाः = शाम्बरीः, मा न अञ्जीः = मा न व्यक्तीकुरु, किंतु व्यक्तीकुरु इत्यर्थः। एवं च—विक्रमं = पराक्रमं, मा न प्रस्तावीः = मा न प्रस्तुहि, किंतु प्रस्तुहीत्यर्थः।

❀व्युत्पत्तिः❀ हनिष्यन्="हन हिंसागत्योः" इति धातोर्लृटः शतृप्रत्ययः। "ऋद्धनोः स्ये" इतीट्। मा न अञ्जीः="अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" इति धातोः माङि उपपदे "माङि लुङ्" इति लुङ्। "न माङ्योगे" इत्याडागमप्रतिषेधः। "अञ्जेः सिचि" इति नित्यमिट्। "द्वौ नञौ एकं प्रकृतार्थं द्योतयत" इति नयेन विध्यर्थता। मा न प्रस्तावीः—प्रपूर्वकात् "ष्टुञ् स्तुतौ" इति धातोः पूर्ववल्लुङ्। "स्तुसुधूञ्भ्यः परस्मैपदेषु" इति सिच इट्। "इट ईटि" इत्युभयत्र सलोपः। पूर्ववद्विध्यर्थता।

❀भाषाऽर्थः❀ ऐसे ( पराक्रमशाली ) तुम दुर्बुद्धि बन्दरको मारनेके लिए मेरी आज्ञासे जाओ, राक्षसी मायाको व्यक्त करो और पराक्रमको प्रारम्भ करो ॥ ४९ ॥

**मा न सावीर्महाऽस्त्राणि मा न धावीररिं रणे।**
**वानरं मा न संयंसीर्व्रज तूर्णमशङ्कितः ॥ ५० ॥**

**अन्वयः**—महाऽस्त्राणि मा न सावीः, रणे अरिं मा न धावीः, वानरं मा न संयंसीः। अशङ्कितः ( सन् ) तूर्णं व्रज।

**व्याख्या**—( हे वत्स ! ) महाऽस्त्राणि=ब्रह्मास्त्राऽऽदीनि, मा न सावीः = मा न प्रसुहि, किंतु प्रसुहि, प्रयुङ्क्ष्वेत्यर्थः। रणे = युद्धे, अरिं = शत्रुं, मा न धावीः= मा न कम्पय, किन्तु भीषयस्वेत्यर्थः। वानरं=कपिं, मा न संयंसीः=मा न संयच्छ, किन्तु संयच्छ, बधानेत्यर्थः। अशङ्कितः=शङ्कारहितः सन्, तूर्णं=क्षिप्रं, व्रज=गच्छ।

❀व्युत्पत्तिः❀ मा न सावीः—"षु प्रसवैश्वर्ययोः" इत्यादादिकाद्धातोः माङि उपपदे पूर्ववल्लुङ्। "स्तुसुधूञ्भ्यः परस्मैपदेषु" इति सिच इट्। मा न धावीः—"धूञ् कम्पने" इति धातोः पूर्ववल्लुङ्। इडागमादिप्रक्रिया च पूर्ववत्। मा न संयंसीः—"यम उपरमे" इति धातोर्लुङ्। "यमरमनमातां सक् च" इति सगिटौ। तूर्णम्—"ञित्वरा संभ्रमे" इति धातोः क्तप्रत्यये "रुष्यमत्वरसंघुषास्वनाम्" इति वैकल्पिकस्येटोऽभावपक्षे "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इत्यूठ्।

❀भाषाऽर्थः❀ बड़े बड़े अस्त्रोंका प्रयोग करो, संग्राममें शत्रुको कम्पित करो और बन्दरको बांधो। शङ्कित न होकर शीघ्र जाओ ॥ ५० ॥

**अनंसीच्चरणौ तस्य मन्दिरादिन्द्रजिद्व्रजन्।**
**अवाप्य चाऽऽशिषस्तस्मादयासीत्प्रीतिमुत्तमाम् ॥ ५१ ॥**

**अन्वयः**--इन्द्रजित् मन्दिरात् व्रजन् तस्य चरणौ अनंसीत्, तस्मात् आशिषः अवाप्य उत्तमां प्रीतिम् अयासीत् ।

**व्याख्या**--इन्द्रजित् = मेघनादः, मन्दिरात् = भवनात्, व्रजन् = गमिष्यन्, तस्य=रावणस्य, चरणौ=पादौ, अनंसीत्=नतवान् । तस्मात्=रावणात्, आशिषः=हिताशंसाः, अवाप्य = प्राप्य, उत्तमां = महतीं, प्रीतिं = प्रेमाणम्, अयासीत्=प्राप्तवान् ।

॥व्युत्पत्तिः॥ व्रजन्—"वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमानसमीपे भविष्यति लट् । अनंसीत्—"णम प्रह्वत्वे शब्दे" इति धातोर्लुङ् । "यमरमनमातां सक् च" इति सगिडागमौ । अयासीत्—"या प्रापणे" इति धातोर्लुङ् । पूर्वसूत्रेण सगिडागमौ ।

॥भाषाऽर्थः॥ राजभवनसे जाते हुए इन्द्रजित्‌ने रावणके चरणोंमें प्रणाम किया और उससे आशीर्वाद पाकर उत्तम प्रीतिको पा लिया ॥ ५१ ॥

**गते तस्मिन्नुपारंसीत् संरम्भाद् रक्षसां पतिः ।**
**इन्द्रजिद्विक्रमाऽभिज्ञो मन्वानो वानरं जितम् ॥ ५२ ॥**

**अन्वयः**—तस्मिन् गते रक्षसां पतिः संरम्भात् उपारंसीत् । विक्रमाऽभिज्ञः इन्द्रजित् वानरं जितं मन्वानः ( अगात् ) ।

**व्याख्या**—तस्मिन्=इन्द्रजिति, गते=याते, अशोकवनिकामिति शेषः । रक्षसां=राक्षसानां, पतिः = स्वामी, रावण इत्यर्थः । संरम्भात्=कोपात्, उपारंसीत्=उपरतः । विक्रमाऽभिज्ञः=स्वपराक्रमज्ञाता, इन्द्रजित्=मेघनादः, वानरं=हनूमन्तं, जितम्=अभिभूतं, मन्वानः=अवगच्छन्, "अगात्" इति वक्ष्यमाणेन पदेन सम्बन्धः ।

मल्लिनाथमते तु—इन्द्रजिद्विक्रमाऽभिज्ञो रक्षसां पतिः वानरं जितं मन्वानः तस्मिन् गते संरम्भात् उपारंसीदित्यन्वयः ।

॥व्युत्पत्तिः॥ उपारंसीत्—उपपूर्वात् "रमु क्रीडायाम्" इति धातोः "उपाच्च" इति परस्मैपदम् । लुङि "यमरमनमातां सक् च" इति सगिटौ । विक्रमाऽभिज्ञः—अभिजानातीति अभिज्ञः, "आतश्चोपसर्गे" इति कः । विक्रमस्य अभिज्ञः ।

॥भाषाऽर्थः॥ इन्द्रजित्‌के जानेपर राक्षसेश्वर रावण क्रोधसे उपरत हुआ । अपने पराक्रमको जाननेवाला इन्द्रजित् बानरको जीता जानेवाला मानता हुआ चला गया ॥

युग्मम् ५२—५४ ।

**संसिस्मयिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्विषः ।**
**जगत् पिपविषुर्वायुः कल्पान्त इव दुर्धरः ॥ ५३ ॥**

**अन्वयः**—द्विषः संसिस्मयिषमाणः मायां व्यञ्जिजिषुः कल्पाऽन्ते जगत् पिपविषुः वायुः इव दुर्द्धरः ( सः ) अगात् ।

**व्याख्या**—द्विषः = शत्रून्, संसिस्मयिषमाणः = स्मेतुमिच्छन्, परिहसितुमिच्छुरित्यर्थः। मायां = शाम्बरीं, व्यञ्जिजिषुः = व्यक्तुमिच्छन्, व्यक्तीकर्तुमिच्छुरित्यर्थः। कल्पाऽन्ते = प्रलये, जगत् = लोकं, पिपविषुः = पवितुमिच्छुः, उत्क्षेप्तुमिच्छुरित्यर्थः। वायुरिव = वात इव, दुर्द्धरः = दुर्द्धर्षः, सः = इन्द्रजित्, अगात् = गतः।

**ॐव्युत्पत्तिःॐ** द्विषः—कृदन्तपदेन योगे "कर्तृकर्मणोः कृति" इति प्राप्तायाः कर्मणि षष्ठ्यास्तस्य पदस्य शानजन्तत्वात् "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति निषेधात् कर्मणि द्वितीया। संसिस्मयिषमाणः—"स्मिङ् ईषद्धसने" इति संपूर्वकात् सन्नन्ताद्धातोर्लटः शानच्। "सन्यङोः" इति द्वित्वं, "पूर्ववत्सन" इत्यात्मनेपदम्। "स्मिपूङ्रञ्ज्वशां सनि" इति सन इट्। मायां—पूर्ववत् कर्मणि द्वितीया। व्यञ्जिजिषुः—"अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" इति विपूर्वात्सन्नन्ताद्धातोरुप्रत्ययः। पूर्वसूत्रेण इट्। "नन्द्राः संयोगादयः" इति नस्य द्वित्वाऽभावः। पिपविषुः—सन्नन्तात् "पूङ् पवने" इति धातोरुः। पूर्ववदिट्। "ओः पुयण्ज्यपरे" इति अभ्यासोकारस्य इत्वम्।

**ॐभाषाऽर्थःॐ** शत्रुओंको हंसनेकी इच्छा करता हुआ, मायाको व्यक्त करनेका इच्छुक, प्रलयकालमें जगत्को उठाकर फेंकनेकी इच्छा करने वाले वायुके सदृश दुर्द्धर्ष इन्द्रजित् चला गया ॥ ५३ ॥

लोकानाशिशिषोस्तुल्यः कृतान्तस्य विपर्यये।
वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः ॥ ५४ ॥

**अन्वयः**—विपर्यये लोकान् आशिशिषोः कृतान्तस्य तुल्यः, वने वृक्षान् चिकरिषोः कपेः बलं जिगरिषुः ( इन्द्रजित् अगात् )।

**व्याख्या**—विपर्यये = प्रलयकाले, लोकान् = भुवनानि, आशिशिषोः = अशितुमिच्छोः, कृताऽन्तस्य = यमराजस्य, तुल्यः = सदृशः, एवं च—वने = उपवने, वृक्षान् = तरून्, चिकरिषोः = विक्षेप्तुमिच्छोः, कपेः = हनूमतः, बलं = सामर्थ्यं, जिगरिषुः = जिग्रसिषुः, "इन्द्रजित् अगात्" इति पदद्वयेन सम्बन्धः।

**ॐव्युत्पत्तिःॐ** आशिशिषोः—"अश भक्षणे" इति सन्नन्ताद्धातोरुः। "स्मिपूङ्रञ्ज्वशां सनि" इतीट्। कृतान्तस्य—"तुल्य" इति पदेन योगे "तुल्याऽर्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इति षष्ठी, पक्षे तृतीया च। वृक्षान्—उप्रत्ययान्तपदेन योगे "न लोकाऽव्यये"त्यादिना कर्मणि षष्ठ्याः प्रतिषेधः। चिकरिषोः—करितुमिच्छोः, "कॄ विक्षेपे" इति सन्नन्ताद्धातोरुः। "सनि ग्रहगुहोश्च" इतीटो निषेधे प्राप्ते "इट् सनि वा" इति विकल्पे प्राप्ते "किरश्च पञ्चभ्य" इतीट्। अत्रेटो दीर्घो नेष्टः। बलं—पूर्ववत् कर्मणि षष्ठ्याः प्रतिषेधः। जिगरिषुः—गरितुमिच्छुः। "गॄ निगरणे" इति सन्नन्ताद्धातोरुः। इट्प्रक्रिया पूर्ववज्ज्ञेया।

ॐभाषाऽर्थःॐ प्रलयमें लोकोंको खानेकी इच्छा करनेवाले यमराजके सदृश और वृक्षोंको फेंकनेकी इच्छा करनेवाले हनूमान्‌जीके बलको ग्रास करनेकी इच्छा करनेवाला इन्द्रजित् अशोकवनिकाको चला ॥ ५४ ॥

रोदिति स्मेव चाऽऽयाति तस्मिन् पक्षिगणः शुचा ।
मुक्तकण्ठं हतान् वृक्षान् बन्धून् बन्धोरिवाऽऽगमे ॥ ५५ ॥

अन्वयः—तस्मिन् आयाति पक्षिगणः शुचा हतान् वृक्षान् बन्धोः आगमे बन्धून् इव मुक्तकण्ठं रोदिति स्म इव ।

**व्याख्या**—तस्मिन् = इन्द्रजिति, आयाति = आगच्छति सति, पक्षिगणः = विहगसमूहः, शुचा = शोकेन, हतान् = विनाशितान्, हनूमतेति शेषः । वृक्षान् = तरून्, अनूद्येति शेषः, रुदधातोरकर्मकत्वात् । बन्धोः = बान्धवस्य, आगमे = आगमने, बन्धून् इव = बान्धवान् इव, मृतानिति शेषः । अत्रोपमा । अनूद्य, मुक्तकण्ठं = सशब्दं, रोदिति स्म इव = अश्रूणि अमुञ्चत् इव । अत्रोत्प्रेक्षा ।

ॐव्युत्पत्तिःॐ मुक्तकण्ठं—मुक्तः ( त्यक्तः ) कण्ठः ( लक्षणया कण्ठस्वरः ) यस्मिन् कर्मणि तद्यथा तथेति क्रियाविशेषणम् । रोदिति—"रुदादिभ्यः सार्वधातुके" इतीट् ।

ॐभाषाऽर्थःॐ इन्द्रजित्के आनेपर पक्षियोंका समूह शोकसे, हनूमान्‌जीसे तोड़े गये वृक्षोंको बन्धुके आगमनमें मृत बन्धुओंको उद्देश्य करते हुएके सदृश कण्ठ-स्वर फैलाकर रोते हुए की तरह प्रतीत होते थे ॥ ५५ ॥

आश्वसीदिव चाऽऽयाति तद्वेगपवनाऽऽहतम् ।
विचित्रस्तबकोद्भासि वनं लुलितपल्लवम् ॥ ५६ ॥

**अन्वयः**—( तस्मिन् ) आयाति तद्वेगपवनाऽऽहतं विचित्रस्तबकोद्भासि लुलितपल्लवं वनम् आश्वसीत् इव ।

**व्याख्या**—पूर्वश्लोकात् तस्मिन्नित्यस्य पदस्य अध्याहारः । तस्मिन्=इन्द्रजिति, आयाति = आगच्छति सति, तद्वेगपवनाऽऽहतं = हनूमज्जववायुताडितं, विचित्रस्तबकोद्भासि = नैकविधगुच्छकप्रकाशमानं, लुलितपल्लवं = विक्षिप्तकिसलयं, वनम्=उपवनम्, आश्वसीत् इव = उज्जीवितम् इव । अत्रोत्प्रेक्षाऽलङ्कारः ।

ॐव्युत्पत्तिःॐ तद्वेगपवनाऽऽहतं—तस्य वेगेन यः पवनस्तेनाऽऽहतम् । विचित्रस्तबकोद्भासि—विचित्राश्च ते स्तबकाः, तैरुद्भासते तच्छीलं, ताच्छील्ये णिनिः । "स्याद्गुच्छकस्तु स्तबकः" इत्यमरः । लुलितपल्लवं—लुलितानि पल्लवानि यस्मिंस्तत् । आश्वसीत्—आङ्पूर्वकात् "श्वस प्राणने" इति धातोर्लुङ् । "रुदश्च पञ्चभ्यः" इतीट् ।

ॐभाषाऽर्थःॐ इन्द्रजित्के आनेपर हनूमान्‌जीके वेगसे उत्पन्न वायुसे ताडित,

विचित्र गुच्छोंसे प्रकाशमान और फेंके गये पल्लवोंसे युक्त अशोकवनिका जैसे फिर उज्जीवित हो गई ॥ ५६ ॥

'न प्राणिषि दुराचार ! मायानामीशिषे न च ।
नेडिषे यदि काकुत्स्थं' तमूचे वानरो वचः ॥ ५७ ॥

**अन्वयः**—"हे दुराचार ! काकुत्स्थं न ईडिषे यदि, ( तर्हि ) न प्राणिषि, मायानां च न ईशिषे" इति वचो वानरः तम् ऊचे ।

**व्याख्या**—हे दुराचार = हे दुर्वृत्त ! काकुत्स्थं = रामचन्द्रं, न ईडिषे यदि = न स्तौषि चेत्, शरणं न गमिष्यसि चेदित्यर्थः । ( तर्हि = तदा ) न प्राणिषि = न जीवसि, मरिष्यसीत्यर्थः । मायानां च = शाम्बरीणां च, न ईशिषे = न प्रभवसि, मयि त्वदनुष्ठिता मायाश्च न प्रभवन्तीत्यर्थः । इति = उक्तप्रकारं, वचः = वचनं, वाक्यकदम्बकरूपमित्यर्थः । वानरः = हनूमान्, तम् = इन्द्रजितम्, ऊचे = जगाद ।

**॥व्युत्पत्तिः॥** दुराचार—दुष्ट आचारो यस्य स दुराचारस्तत्सम्बुद्धौ । ईडिषे—"ईड स्तुतौ" इति धातोर्लट् । "ईडजनोर्ध्वे च" इति चकारात्सेशब्दस्य इट् । प्राणिषि—"अन प्राणने" इति धातोः सार्वधातुके लटि सिपि "रुदादिभ्यः सार्वधातुके" इतीट् । "अनितेः" इति नस्य णः । मायानाम्—"ईशिषे" इति ईशधातोर्योगे "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी । ईशिषे—"ईश ऐश्वर्ये" इति धातोर्लट् । "ईशः से" इतीट् । वचः—मुख्यं कर्म । तम्—गौणं कर्म ।

**॥भाषाऽर्थः॥** "रे दुराचारिन् ! तू रामकी स्तुति नहीं करता है तो मरेगा, मायाओंको भी नहीं कर सकेगा" ऐसा वचन हनूमान्जीने उसे कहा ॥ ५७ ॥

अथ सत्वाऽधिकारः ।

ससैन्यश्छादयन् संख्ये प्रावर्तिष्ट तमिन्द्रजित् ।
शरैः क्षुरप्रैर्मायाभिः शतशः सर्वतो मुहुः ॥ ५८ ॥

**अन्वयः**—इन्द्रजित् संख्ये ससैन्यः ( सन् ) तं शरैः क्षुरप्रैः मायाभिश्च शतशः मुहुः छादयन् प्रावर्तिष्ट ।

**व्याख्या**—इन्द्रजित् = मेघनादः, संख्ये = संग्रामे, ससैन्यः = सबलः सन्, तं = हनूमन्तं, शरैः = बाणैः, क्षुरप्रैः = अर्धचन्द्रनामकैरायुधविशेषैः, मायाभिश्च = इन्द्रजालैश्च, शतशः = अनेकधा, मुहुः = वारं वारम्, छादयन् = आच्छादयन्, प्रावर्तिष्ट = प्रवृत्तः ।

**॥व्युत्पत्तिः॥** ससैन्यः + छादयन्—विसर्गस्य "विसर्जनीयस्य सः" इति सत्वे, छकारे परे "स्तोः श्चुना श्चुः" इति सकारस्य शकारः । ससैन्यः—सैन्यैः सहितः । शरैः + क्षुरप्रैः—"शर्परे विसर्जनीय" इति शर्परे खरि विसर्गस्य विसर्गः । "अर्धचन्द्रः क्षुरप्रः स्यात्" इति यादवः । मायाभिः + शतशः + सर्वतः—"वा शरि" इति विकल्पेन

विसर्गस्य विसर्गः । अन्यत्र सत्वे शपरस्य श्चुत्वम् । शतशः—"बह्वल्पाऽर्थाच्छस्कारकादन्यतरस्याम्" इति शस् ।

*भाषाऽर्थः—इन्द्रजित् संग्राममें सेनाओंके साथ होता हुआ हनूमान्‌जीको बाण, अर्धचन्द्र और मायाओंसे शतशः वारंवार अच्छादित करता हुआ प्रवृत्त हुआ ॥४८॥

वानरः ≍ कुलशैलाऽऽभ ≍ प्रसह्याऽऽयुधशीकरम् ।
रक्षस्पाशान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत् ॥ ४९ ॥

**अन्वयः**—कुलशैलाभो वानरः आयुधशीकरं प्रसह्य यशस्काम्यन् ( सन् ) तमस्कल्पान् रक्षस्पाशान् अदुद्रुवत् ।

**व्याख्या**—कुलशैलाऽऽभः = कुलपर्वतसदृशः, वानरः = हनूमान्, आयुधशीकरं = शस्त्राम्बुकणं, प्रसह्य = अभिभूय, राक्षसप्रयुक्तं शस्त्रं शीकरवदभिभूयेति भावः । यशस्काम्यन् = यश आत्मन इच्छन् सन्, तमस्कल्पान् = अन्धकारसदृशान्, रक्षस्पाशान् = कुत्सितान् राक्षसान्, अदुद्रुवत् = गतः ।

*व्युत्पत्तिः* वानरः + कुलशैलाभः—"कुप्वोः ≍ क ≍ पौ च" इति कवर्गे परे विसर्गस्य जिह्वामूलीयत्वम् । कुलशैलाभः + प्रसह्य—अत्र पवर्गे परे विसर्गस्य पूर्वं सूत्रेण उपध्मानीयत्वम् । कुलशैलाभः—कुलशैलस्येव आभा ( कान्तिः ) यस्य सः, कुलशैलवद्रणे स्थिर इति भावः । आयुधशीकरम्—आयुधं शीकर इव आयुधशीकरस्तं, "शीकरोऽम्बुकणाः स्मृताः" इत्यमरः । यशस्काम्यन्—"काम्यच्च" इति काम्यच्प्रत्यये तदन्तात् सनाद्यन्तधातोर्लटः शत्रादेशः । अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'यशस्' इत्यस्य पदत्वेन रुत्वे विसर्गे च "सोऽपदादौ" इति सत्वम् । यशस्काम्यन् + तमस्कल्पान्—"नश्छव्यप्रशान्" रुत्वम् । "अत्राऽनुनासिकः पूर्वस्य तु वा" इति पूर्वस्याऽनुनासिकत्वं, पक्षान्तरे अत्र "अनुनासिकात्परोऽनुस्वार" इत्यनुस्वारत्वम् । "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्जनीयः । "विसर्जनीयस्य स" इति तस्य सत्वं च । अनुनासिकपक्षे-यशस्काम्यँस्तमस्कल्पान् इति रूपम् । तमस्कल्पान्—ईषदसमाप्तानि तमांसि तमस्कल्पास्तान्, "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पप्प्रत्ययः, अत्र पुंल्लिङ्गता चिन्त्या* । अत्राऽपि पूर्ववद्रुत्वादि प्रक्रिया ज्ञेया । "सोऽपदादौ" इत्यत्र "पाशकल्पककाम्येष्विति वाच्यम्" इति वार्तिकम् । रक्षस्पाशान्—कुत्सितानि रक्षांसि रक्षस्पाशास्तान् । "याप्ये पाशप्" इति याप्ये (कुत्सितेऽर्थे) पाशप्प्रत्ययः । रुत्वादिप्रक्रिया पूर्ववद्बोध्या । अत्राऽपि पुंल्लिङ्गता चिन्त्या । अदुद्रुवत्—"द्रु गतौ" इति धातोर्लुङि "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति चङि द्वित्वे च उवङादेशः ।

---

* अत्र "स्वार्थिका अपि प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते" इति जयमङ्गला । इति ( सम्पादकः )

छभाषाऽर्थःछ कुलपर्वतके सदृश हनूमान्जी अस्त्रोंको जल-कणके सदृश सह-कर अपने यशकी इच्छा करते हुए अन्धकारके तुल्य कुत्सित राक्षसोंके पास गये ॥८९॥

धनुष्पाशभृतः संख्ये ज्योतिष्कल्पोरुकेशरः।
दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान् ॥ ९० ॥

**अन्वयः**—ज्योतिष्कल्पोरुकेशरः ( हनूमान् ) धनुष्पाशभृतः निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान् ( राक्षसान् ) संख्ये दुधाव ।

**व्याख्या**—ज्योतिष्कल्पोरुकेशरः = ज्वालासदृशमहासटः, ( हनूमान् ) धनुष्पाशभृतः = कुत्सितधनुर्धरान्, निर्नमस्कारान् = अभिमानात् कस्याऽप्यकृतप्रणामान्, राक्षसेन्द्रपुरस्कृतान् = इन्द्रजिदग्रतः कृतान्, ( राक्षसान् ) संख्ये = संग्रामे, दुधाव = कम्पितवान् ।

छव्युत्पत्तिःछ ज्योतिष्कल्पोरुकेशरः—ईषदसमाप्तं ज्योतिः ज्योतिष्कल्पः, "ईषदसमाप्तौ" इत्यादिना कल्पप्। "इणः ष" इति पाशादिपरे विसर्जनीयस्य षत्वम्। ज्योतिष्कल्प उरुः केशरो यस्य सः। धनुष्पाशभृतः—कुत्सितं धनुः धनुष्पाशं, "याप्ये पाशप्" इति पाशप्। पूर्वं सूत्रेण षत्वं च। धनुष्पाशं बिभ्रतीति धनुष्पाशभृतस्तान्। निर्नमस्कारान्—नमस्करणं नमस्कारः, "साक्षात्प्रभृतीनि च" इति नमःशब्दस्य साक्षात्प्रभृतिगणे पठितत्वात् कृञो योगे विभाषया गतिसंज्ञा, ततः "नमस्पुरसोर्गत्योः" इति विसर्गस्य सत्वम्। निर्गतो नमस्कारो येभ्यस्ते निर्नमस्कारास्तान्, यद्वा नमस्कारान्निर्गता निर्नमस्कारास्तान्, "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः। राक्षसेन्द्रपुरस्कृतान्—राक्षसेन्द्रेण पुरस्कृतान्। पुर इत्यस्य "पुरोऽव्ययम्" इति गतित्वम्। "नमस्पुरसोर्गत्योः" इति विसर्गस्य सत्वम्।

छभाषाऽर्थःछ ज्वालाके सदृश महान् केशरसे युक्त हनूमान्जीने कुत्सित धनुषको लेनेवाले, किसीका भी नमस्कार नहीं करनेवाले एवम् इन्द्रजित्से आगे बढ़ाये गये उन राक्षसोंको संग्राममें कम्पित किया ॥ ९० ॥

स्वामिनो निष्क्रयं गन्तुमाविष्कृतबलः कपिः।
रराज समरे शत्रून् घ्नन् दुष्कृतबहिष्कृतः॥ ९१ ॥

**अन्वयः**—स्वामिनो निष्क्रयं गन्तुम् आविष्कृतबलः दुष्कृतबहिष्कृतः कपिः समरे शत्रून् घ्नन् रराज।

**व्याख्या**—स्वामिनः = सुग्रीवस्य, रामस्य वा, निष्क्रयम् = आनृण्यं, गन्तुं = प्राप्तुम्, आविष्कृतबलः = प्रकाशितशक्तिः, दुष्कृतबहिष्कृतः=बहिष्कृतदुष्कृतः, निष्पाप इत्यर्थः। पलायनपापरहित इति यावत्। यथाह मनुः—

"यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः। भर्तुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥(७-९४)
यच्चाऽस्य सुकृतं किञ्चिदमुत्राऽर्थमुपार्जितम्। भर्ता तत्सर्वमादत्तेपरावृत्तहतस्य तु ॥"(७-९५)

इति मल्लिनाथः । कपिः = हनूमान्, समरे = युद्धे, शत्रून् = रिपून्, राक्षसानित्यर्थः । घ्नन् = विनाशयन्, रराज = दिदीपे ।

❀व्युत्पत्तिः❀ निष्क्रयं—निष्क्रयणं निष्क्रयस्तम्, "एरच्" इत्यच् । "इदुदुपधस्य चाऽप्रत्ययस्य" इति पत्ययभिन्नस्य विसर्गस्य षत्वम् । आविष्कृतबलः—आविष्कृतं बलं येन सः, पूर्ववत्षत्वम् । दुष्कृतबहिष्कृतः—दुष्कृतं ( पापम् ) बहिष्कृतं येन सः, "वाहिताग्न्यादिषु" इत्यत्र पाठाद्बहिष्कृतदुष्कृतो वा । पूर्ववदुभयत्र षत्वम् ।

❀भाषाऽर्थः❀ प्रभु ( सुग्रीव ) का ऋण चुकानेके लिए शक्तिको प्रकाशित करनेवाले निष्पाप हनूमान्‌जी युद्धमें शत्रुओंको मारते हुए प्रकाशमान हुए ॥ ६१ ॥

**चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्वन्नरीन् रणे ।**
**तिरस्कृतदिगाभोगो ददृशे बहुधा भ्रमन् ॥ ६२ ॥**

**अन्वयः**—वृक्षान् चतुष्काष्ठं क्षिपन् रणे अरीन् तिरस्कुर्वन् तिरस्कृतदिगाभोगः ( कपिः ) भ्रमन् बहुधा ददृशे ।

**व्याख्या**—वृक्षान् = तरून्, चतुष्काष्ठं = चतुर्दिशं यथा तथेति क्रियाविशेषणम् । क्षिपन् = प्रेरयन्, रणे = संग्रामे, अरीन् = शत्रून्, तिरस्कुर्वन् = अभिभवन्, तिरस्कृतदिगाभोगः = आच्छादितदिशाविस्तारः, स्वकायेन वृक्षैश्चेति शेषः । ( कपिः = हनूमान् ) भ्रमन् = चरन्, बहुधा = बहुभिः प्रकारैः, ददृशे = दृष्टः, एकोऽप्यनेक इव दृष्ट इत्यर्थः । एकस्य बहुत्वाऽसम्बन्धेपि सम्बन्धोक्तेरतिशयोक्तिः । तल्लक्षणं यथा—"सिद्धत्वेऽध्यवसायस्याऽतिशयोक्तिर्निगद्यते ।
भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ ।
पौर्वापर्याऽत्ययः कार्यहेत्वोः सा पञ्चधा ततः ॥ इति ॥

❀व्युत्पत्तिः❀ चतुष्काष्ठं—चतसृणां काष्ठानां समाहारश्चतुष्काष्ठं तद्यथा तथेति । "तद्धितार्थोत्तरपदसमाहारे च" इति समासः "संख्यापूर्वो द्विगुः" इति तस्य द्विगुसंज्ञा "स नपुंसकम्" इति नपुंसकत्वे प्राप्ते "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट" इति स्त्रीत्वप्राप्तौ "आबन्तो वा" इति वैकल्पिकं नपुंसकत्वम् । "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वम् । "इदुदुपधस्य चाऽप्रत्ययस्य" इति षः । तिरस्कुर्वन्—"तिरसोऽन्यतरस्याम्" इति सत्वविकल्पः । तिरस्कृतदिगाभोगः—तिरस्कृता दिशामाभोगा येन सः । पूर्ववत्सत्वम् । बहुधा—बहुभिः प्रकारैरिति, बहुशब्दस्य "बहुगणवतुडतिसंख्या" इति संख्या संज्ञा । "संख्याया विधार्थे धा" इति धाप्रत्ययः ।

❀भाषाऽर्थः❀ वृक्षोंको चारों दिशाओंमें फेंकते हुए, युद्धमें शत्रुओंको तिरस्कृत करते हुए, अपने शरीरसे और वृक्षोंसे दिशाओंके विस्तारको आच्छादित करते हुए हनूमान्‌जी घूमते हुए एक होकर भी अनेकके सदृश दिखाई दिये ॥ ६२ ॥

युग्मम् ६३—६४ ।

**द्विष्कुर्वतां चतुष्कुर्वन्नभिघातं नगैर्द्विषाम् ।**
**बहिष्करिष्यन् संग्रामाद्रिपुन् ज्वलनपिङ्गलः ॥ ६३ ॥**

**अन्वयः**—ज्वलनपिङ्गलः अभिघातं द्विः कुर्वतां द्विषां नगैः चतुः कुर्वन् संग्रामात् अरीन् बहिष्करिष्यन् ( आटीत् ) ।

**व्याख्या**—ज्वलनपिङ्गलः = अग्निपिशङ्गः, अभिघातं = प्रहारं, बाणादिभिरिति शेषः । द्विः = द्वौ वारौ, कुर्वतां = विदधतां, द्विषां = शत्रूणां, नगैः=वृक्षैः, चतुः = चतुरो वारान्, कुर्वन् = विदधत् , संग्रामात् = युद्धस्थलात्, अरीन् = शत्रून् , बहिष्करिष्यन् = निराकरिष्यन्, आटीदिति उत्तरश्लोकस्थपदेन सम्बन्धः । आटीत् = परिचक्राम ।

**ॐव्युत्पत्तिःॐ** ज्वलनपिङ्गलः—ज्वलन इव पिङ्गलः । नगैः = "शैलवृक्षौ नगावगौ" इत्यमरः । द्विः = "द्वित्रिचतुर्भ्यः सुच्" इति कृत्वोऽर्थे सुच् । द्विः + कुर्वतां = "द्विस्त्रिश्चतुरिति कृत्वोऽर्थे" इति विसर्जनीयस्य वैकल्पिके षत्वे द्विष्कुर्वताम् । चतुः—पूर्वसूत्रेण कृत्वोऽर्थे सुच् । चतुः + कुर्वन् = चतुष्कुर्वन्, "द्विस्त्रिश्चतुरिती"त्यादिना षत्वम् । बहिः + करिष्यन् = बहिष्करिष्यन्, "इसुसोः सामर्थ्ये" इति विसर्गस्य वैकल्पिकं षत्वम् । सामर्थ्यमिह व्यपेक्षा । पदानामाकाङ्क्षायोग्यतासन्निधिवशाद्यः परस्पराऽन्वयः सा व्यपेक्षा ।

**ॐभाषाऽर्थःॐ** अग्निके तुल्य पीले हनूमान्‌जी शस्त्रादिसे दो वार आघात करनेवाले शत्रुओंपर वृक्षोंसे चार वार आघात करते हुए संग्रामस्थलसे शत्रुओंको बाहर निकालते हुए घूमने लगे ॥ ६३ ॥

**ज्योतिष्कुर्वन्निवैकोऽसावाटीत् संख्ये परार्ध्यवत् ।**
**तमनायुष्करं प्राप शक्रशत्रुर्धनुष्करः ॥ ६४ ॥**

**अन्वयः**—ज्योतिः कुर्वन् इव एकः असौ परार्ध्यवत् संख्ये आटीत् । अनायुष्करं तं धनुष्करः शक्रशत्रुः प्राप ।

**व्याख्या**—ज्योतिः = अग्निं, कुर्वन् इव = विदधत् इव, दीपयन्निवेत्यर्थः । एकः = एकाकी अपि, असौ = हनूमान्, परार्ध्यवत् = परार्ध्यसंख्याक इव, अत्रोत्प्रेक्षाऽलङ्कारः । परार्ध्यवत् = दिव्यवत् इति जयमङ्गलः । संख्ये = संग्रामे, आटीत्= परिचक्राम । अनायुष्करं = प्राणाऽपहारिणं, तं = हनूमन्तं, धनुष्करः = कार्मुकहस्तः, शक्रशत्रुः = इन्द्रजित् , प्राप=प्राप्तवान् , अभियात इत्यर्थः ।

**ॐव्युत्पत्तिःॐ** ज्योतिः + कुर्वन् = ज्योतिष्कुर्वन् , "इसुसोः सामर्थ्ये" इति विसर्गस्य

वैकल्पिकं षत्वम् । परार्ध्यवत्—परार्ध्येन तुल्यं, वतिप्रत्ययः । परार्धो द्युलोकः, ब्रह्माण्डसम्बन्धिन ऊर्ध्वभागस्योत्कृष्टत्वात् । परार्धे भवः परार्ध्यः, "पराऽवराऽधमोत्तमपूर्वाच्च" इति यत् इति जयमङ्गलः । आटीत्—"अट गतौ" इति धातोर्लुङ् । "इट ईटि" इति सिचो लोपः । अनायुष्करम् = न आयुः करोतीति अनायुष्करस्तम्, "कृञो हेतुताच्छील्याऽऽनुलोम्येषु" इति टः । "नित्यं समासेऽनुत्तरपदस्थस्य" इति विसर्गस्य षत्वम् । धनुष्करः—धनुः करे यस्य सः, पूर्वसूत्रेण विसर्गस्य षत्वम् ।

ॐभाषाऽर्थःॐ अग्निको प्रदीप्त करते हुएके सदृश, अकेले होते हुए भी हनूमान्‌जी परार्ध्य संख्यकके तुल्य हो संग्राममें घूमने लगे । प्राणोंका अपहरण करनेवाले उनको हाथमें धनु लिए हुए इन्द्रजित्‌ने पा लिया ॥ ६४ ॥

अस्यन्नरुष्करान् बाणान् ज्योतिष्करसमद्युतिः ।
यशस्करो यशस्कामं कपिं बाणैरताडयत् ॥ ६५ ॥

अन्वयः—अरुष्करान् बाणान् अस्यन् ज्योतिष्करसमद्युतिः यशस्करः यशस्कामं कपिं बाणैः अताडयत् ।

व्याख्या—अरुष्करान्=व्रणकरान्, बाणान् = शरान्, अस्यन् = क्षिपन्, ज्योतिष्करसमद्युतिः = भास्करतुल्यकान्तिः, यशस्करः = कीर्तिसम्पादकः, शत्रुनाशेनेति शेषः । यशस्कामं = कीर्तिकामं, कपिं = हनूमन्तं, बाणैः = शरैः, अताडयत् = ताडितवान् । "अवाकिरत्" इति मल्लिनाथसम्मतः पाठस्तस्य अक्षिपदित्यर्थः ।

ॐव्युत्पत्तिःॐ अरुष्करान्—अरुः कुर्वन्तीति तच्छीला अरुष्करास्तान्, "दिवाविभानिशे"त्यादिना टप्रत्ययः । "नित्यं समासेऽनुत्तरपदस्थस्य" इति विसर्गस्य षः । "व्रणोऽस्त्रियामीर्ममरुः" इत्यमरः । ज्योतिष्करसमद्युतिः—ज्योतिः करोतीति तच्छीलो ज्योतिष्करः ( आदित्यः ) । "कृञो हेतुताच्छील्याऽऽनुलोम्येषु" इति टप्रत्ययः । पूर्ववत् षत्वम् । ज्योतिष्करेण समा द्युतिर्यस्य सः । यशस्करः—यशः करोतीति तच्छीलः, पूर्वसूत्रेण टः । "अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" इति सत्वम् । यशस्कामं—यशसि कामो यस्य स यशस्कामस्तम् । पूर्वसूत्रेणैव सत्वम् ।

ॐभाषाऽर्थःॐ व्रणको उत्पन्न करनेवाले बाणोंको फेंकते हुए, सूर्यके सदृश कान्तिवाले कीर्तिसम्पादक इन्द्रजित्‌ने यशको चाहनेवाले हनूमान्‌जीपर बाणोंसे प्रहार किया ॥ ६५ ॥

चकाराऽधस्पदं नाऽसौ चरन् वियति मारुतिः ।
मर्मविद्भिस्तमस्काण्डैर्विध्यमानोऽप्यनेकधा ॥ ६६ ॥

अन्वयः—असौ मारुतिः वियति चरन् मर्मविद्भिः तमस्काण्डैः अनेकधा विध्यमानोऽपि अधस्पदं न चकार ।

**व्याख्या**—असौ = पूर्वोक्तः, मारुतिः = हनूमान्, वियति = आकाशे, चरन् = भ्रमन्, मर्माविद्भिः = मर्मभेदिभिः, तमस्काण्डैः = तमःसवर्णैः बाणैः, अयोमयत्वादिति भावः। अनेकधा = अनेकैः प्रकारैः, विध्यमानोऽपि = ताड्यमानोऽपि, अधस्पदं = भुवि पादविक्षेपं, न चकार = न कृतवान्।

**ॐव्युत्पत्तिःॐ** मर्माविद्भिः—मर्माणि विध्यन्तीति मर्माविधस्तैः, "क्विप् च" इति क्विप्। "नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ" इति पूर्वपदस्य दीर्घत्वम्। तमस्काण्डैः—तमःसवर्णाः काण्डास्तमस्काण्डास्तैः, मध्यमपदलोपी समासः। "कस्कादिषु च" इति विसर्गस्य सः। "काण्डोऽस्त्री दण्डबाणाऽर्ववर्गाऽवसरवारिषु" इत्यमरः। विध्यमानः—विध्यत इति, कर्मणि लटः शानच्। मल्लिनाथमते—"भिद्यमान" इति पाठस्तस्य विदार्यमाण इत्यर्थः। अधस्पदं—अधः पदं, तत्, "मयूरव्यंसकादयश्च" इति समासः, मयूरव्यंसकादिराकृतिगणः। "अधःशिरसी पदे" इति विसर्गस्य सादेशः।

**ॐभाषाऽर्थःॐ** हनूमान्जीने आकाशमें विचरण करते हुए मर्मभेदी अन्धकारके सदृश अयोमय बाणोंसे अनेक बार ताडित होते हुए भी भूतलमें पादप्रक्षेप नहीं किया ॥ ६६ ॥

अथ षत्वाऽधिकारः।

इतः प्रभृति "अपदान्तस्य मूर्धन्य" इत्यधिकृत्याऽऽह—

**पुरुहूतद्विषो धूर्षु युक्तान् यानस्य वाजिनः।**
**आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत् ॥ ६७ ॥**

**अन्वयः**—प्राभञ्जनिः पुरुहूतद्विषो यानस्य धूर्षु युक्तान् वाजिनः त्वक्षु निर्भिद्य आयूंषि अमोचयत्।

**व्याख्या**—प्राभञ्जनिः = हनूमान्, पुरुहूतद्विषः = इन्द्रशत्रोः, इन्द्रजित इत्यर्थः। यानस्य = रथस्य, धूर्षु = भारेषु, युक्तान् = बद्धान्, वाजिनः = अश्वान्, त्वक्षु = चर्मसु, निर्भिद्य = विदार्य, आयूंषि = जीवितानि, अमोचयत् = अत्याजयत्, हनूमानिन्द्रजिद्रथस्याऽश्वान् हतवानिति भावः।

**ॐव्युत्पत्तिःॐ** प्राभञ्जनिः—प्रभञ्जनस्याऽपत्यं पुमान्, "अत इञ्" इति इञ्। पुरुहूतद्विषः—पुरुहूतं द्वेष्टीति पुरुहूतद्विट्, तस्य। "सत्सूद्विषे"त्यादिना क्विप्। "पृतनाषाड्द्विष" इति पुस्तकान्तरपाठस्तत्र पृतनां सहते इति पृतनाषाट्, तस्य। "छन्दसि सह" इति ण्विः, "सहेः साडः स" इति सहेः सस्य मूर्धन्यः। एतत्पदस्य वेदप्रयोज्यत्वेऽपि "तुरासाहं पुरोधाये"त्याद्यभियुक्तकर्तृकप्रयोगदर्शनात् लौकिकत्वमपीति केचित्। धूर्षु, त्वक्षु—सुप्रत्ययसकारत्वात् "आदेशप्रत्यययोः" इति षत्वम्। आयूंषि—

"नुम्विसर्जनीयशर्व्यवायेऽपि" इति षत्वम् । अमोचयत्—णिजन्तात् "मुच्लृ मोक्षणे" इति धातोर्लङ् ।

ॐभाषार्थःॐ हनूमान्‌जीने इन्द्रजित्‌के रथका भार ढोनेवाले घोड़ोंको चमड़ेमें विदारणकर मार डाला ॥ ६७ ॥

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा ।
आहर्तुमन्यानशिषत् प्रोषितत्रासकर्कशः ॥ ६८ ॥

**अन्वयः**—ते यदा भूमौ सुषुपुः तदा प्रोषितत्रासकर्कशः रावणिः अन्यान् आहर्तुं सारथिम् अशिषत् ।

**व्याख्या**—ते=इन्द्रजिद्वाजिनः, यदा = यस्मिन्काले, भूमौ = पृथिव्यां, सुषुपुः= सुप्ताः, मृता इत्यर्थः । तदा=तस्मिन्काले, प्रोषितत्रासकर्कशः = अपगतभयः कठोरश्च, रावणिः = इन्द्रजित् , अन्यान् = अपरान् , अश्वानिति भावः । आहर्तुम् = आनेतं, सारथिं = सूतम् , अशिषत् = आज्ञापयत् ।

ॐव्युत्पत्तिःॐ सुषुपुः—"ञिष्वप् शये" इति धातोर्लिट् । आदेशसकारत्वात् "आदेशप्रत्यययोः" इति षत्वम् । प्रोषितत्रासकर्कशः—प्रोषितः त्रासो यस्मात्स प्रोषितत्रासः, स चाऽसौ कर्कशः । प्रोषित इत्यत्र प्रपूर्वकात् "वस निवासे" इति धातोः क्तः । यजादित्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणम् । "शासिवसिघसीनां च" इति षत्वं च । रावणिः—रावणस्याऽपत्यं पुमान् , "अत इञ्" इति इञ् । अशिषत्—"शासु अनुशिष्टौ" इति धातोर्लुङ् । "सर्तिशास्त्यर्तिभ्यश्च" इति च्लेरङ् "शास इदङ्हलोः" इति उपधाया इत्वं "शासिवसिघसीनां च" इति षत्वं च ।

ॐभाषाऽर्थःॐ रथके घोड़े जब जमीनपर गिर पड़े, तब निर्भीक और कठोर इन्द्रजित्‌ने दूसरे घोड़ोंको लानेके लिए सारथिको आज्ञा दी ॥ ६८ ॥

प्रतुष्टूषुः पुनर्युद्धमासिषञ्जयिषुर्भयम् ।
आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ६९ ॥

**अन्वयः**—( रावणिः ) पुनः युद्धं प्रतुष्टूषुः भयम् आसिषञ्जयिषुः आत्मीयान् उत्सिसाहयिषन् इव रथम् आतस्थौ ।

**व्याख्या**—( रावणिः = इन्द्रजित् ) पुनः=भूयः, युद्धं = संग्रामं, प्रतुष्टूषुः = प्रस्तोतुम् ( प्रारब्धुम् ) इच्छुः, भयं=भीतिं, शत्रुचित्त इति शेषः, आसिषञ्जयिषुः= आसञ्जयितुम् इच्छुः, आत्मीयान्=स्वकीयान् , भृत्यानित्यर्थः । उत्सिसाहयिषन् इव=उत्साहयितुम् इच्छन् इव, रथं=स्यन्दनं, वाज्यन्तरयुक्तमिति शेषः । आतस्थौ= आस्थितः, आरुरोहेत्यर्थः ।

ॐव्युत्पत्तिःॐ युद्धं—कृदन्तपदेन योगे प्राप्तायाः कर्मणि षष्ठ्याः तस्य उप्रत्यया-न्तत्वात् "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति निषेधः। प्रतुष्टूषुः—प्रपूर्वकात् सन्नन्तात् "ष्टुञ् स्तुतौ" इति धातोरुः। "अज्झनगमां सनि" इति दीर्घः। "स्तौति-ण्योरेव षण्यभ्यासात्" इति अभ्यासादुत्तरस्य षत्वम्। आसिषञ्जयिषुः—आङ्पूर्व-कात्सन्नन्तात् "षञ्ज सङ्गे" इति धातोरुप्रत्ययः। "स्तौतिण्योरेवे"ति "षञ्ज सङ्गे" इति धातोरुप्रत्ययः। "स्तौतिण्योरेवे"त्यादिना अभ्यासादुत्तरस्य धातुसकारस्य षत्वम्। उत्सिसाहयिषन्—उत्पूर्वकात्सन्नन्तात् साहयतेर्लटः शत्रादेशः। "स्तौती"त्यादिना षत्वे प्राप्ते "सः स्विदिस्वदिसहीनां च" इति धातुसकारस्य सकार एव न षकारः।

ॐभाषाऽर्थःॐ इन्द्रजित् फिर युद्धका आरम्भ करनेकी इच्छा करता हुआ, हनूमान्जीके चित्तमें भय उत्पन्न करनेका इच्छुक होकर और अपने भृत्योंको उत्साहित करनेकी इच्छा रखते हुएके सदृश हो रथमें आरूढ हुआ॥ ६९॥

**बलान्यभिषिषिक्षन्तं तरुभिः कपिवारिदम्।**
**विजिगीषुः पुनश्चक्रे व्यूहं दुर्जयमिन्द्रजित्॥ ७०॥**

**अन्वयः**—बलानि तरुभिः अभिषिषिक्षन्तं कपिवारिदं विजिगीषुः इन्द्रजित् पुनः दुर्जयं व्यूहं चक्रे।

**व्याख्या**—बलानि = सैन्यानि, तरुभिः = वृक्षैः, अभिषिषिक्षन्तम् = अभिषेक्तुमिच्छन्तं, कपिवारिदं = वानरमेघं, विजिगीषुः = विजेतुमिच्छुः, इन्द्रजित्=मेघनादः, पुनः = भूयः, दुर्जयं = दुर्जयनामकं, व्यूहं = सैन्यसन्निवेशं, चक्रे = निर्ममे।

ॐ व्युत्पत्तिः ॐ अभिषिषिक्षन्तम् = अभिपूर्वकात् सन्नन्तात् "षिच क्षरणे" इति धातोर्लटः शत्रादेशः। "स्थादिष्वभ्यासेन चाऽभ्यासस्य" इति धात्वभ्याससकारयोः षत्वम्। कपिवारिदं = कपिरेव वारिदः कपिवारिदस्तम्, "मयूरव्यंसकादयश्च" इति समासः। रूपकाऽलङ्कारः। तल्लक्षणं यथा—"रूपकं रूपितारोपाद्विषये निरपह्नवे।" इति। विजिगीषुः = विपूर्वकात् सन्नन्तात् "जि जये" इति धातोः "सनाशंसभिक्ष उः" इति उप्रत्ययः। "सन्लिटोर्जेः" इति कुत्वम्। "आदेशप्रत्यययोः" इति प्रत्ययसकारस्य षत्वं च।

ॐ भाषाऽर्थः ॐ सैन्योंका वृक्षोंसे अभिषेक करनेकी इच्छा करते हुए वानररूप मेघको जीतनेकी इच्छा करनेवाले इन्द्रजितने फिर दुर्जय नामक व्यूह की रचना की॥

**अभिष्यन्तः कपि क्रोधादभ्यषिञ्चन्निवाऽऽत्मनः।**
**संप्रहारसमुद्भूतैः रक्तैः कौष्णैररुश्च्युतैः॥ ७१॥**

**अन्वयः**—अभिष्यन्तः ( राक्षसाः ) आत्मनः सम्प्रहारसमुद्भूतैः कोष्णैः अरुश्च्युतैः रक्तैः कपि क्रोधात् अभ्यषिञ्चन् इव।

**व्याख्या**—अभिष्यन्तः = अन्तं नयन्तः, राक्षसा इति भावः। "अभिष्यन्तम्" इति मल्लिनाथसम्मतः पाठस्तत्र "कपिम्" इत्यस्य विशेषणत्वं बोद्धव्यम्। आत्मनः= स्वस्य, संप्रहारसमुद्भूतैः = कपिकृतप्रहारजन्यैः, कोष्णैः = ईषदुष्णैः, अरुश्च्युतैः = व्रणनिर्गतैः, रक्तैः = रुधिरैः, कपिं = हनूमन्तं, क्रोधात् = कोपात्, अभ्यषिञ्चन् इव अभिषिक्तवन्त इव।

❀व्युत्पत्तिः❀ अभिष्यन्तः—अभिपूर्वकात् "षोऽन्तकर्मणि" इति दैवादिकाद्धातोर्लटः शत्रादेशः। "ओतः श्यनि" इत्योकारलोपः "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इति सस्य षः। कोष्णैः—ईषदुष्णानि कोष्णानि तैः। "कवं चोष्णे" इति कादेशः। अरुश्च्युतैः—अरुषः श्च्युतानि अरुश्च्युतानि, तैः। अभ्यषिञ्चन्—अभिपूर्वकात् "षिच क्षरणे" इति धातोर्लङ्। "प्राक्सिताद्ड्व्यवायेऽपि" इति षत्वम्। उत्प्रेक्षाऽलङ्कारः।

❀भाषाऽर्थः❀ संहार करते हुए राक्षसोंने अपने, हनूमान्‌जीसे किये गये प्रहारसे उत्पन्न कुछ उष्ण व्रणसे उत्पन्न रुधिरसे हनूमान्‌जीको क्रोधसे जैसे अभिषेक किया॥

**संग्रामे तानधिष्ठास्यन्निषद्य पुरतोरणम्।**
**अविषीदन्नवष्टब्धान् व्यष्टभ्नान्नरविष्वणान् ॥ ७२ ॥**

**अन्वयः**—संग्रामे अवष्टब्धान् तान् नरविष्वणान् अविषीदन् ( कपिः ) निषद्य अधिष्ठास्यन् पुरतोरणं व्यष्टभ्नात्।

**व्याख्या**—संग्रामे = युद्धे, अवष्टब्धान् = अविदूरस्थान्, निकटस्थानित्यर्थः। तान् = पूर्वोक्तान्, नरविष्वणान् = सशब्दं मनुष्यभोजिनः, अविषीदन् = विषादमगच्छन्, अखिन्नः सन्नित्यर्थः, हनूमानिति शेषः। निषद्य = स्थित्वा, तोरणे इति शेषः। अधिष्ठास्यन् = आक्रमिष्यन्, पुरतोरणं = नगरबहिर्द्वारं, व्यष्टभ्नात्=आश्रितवान्।

❀व्युत्पत्तिः❀ अवष्टब्धान्—अवपूर्वकात् सौत्रधातोः स्तन्भेः क्तः। "अवाच्चाऽऽलम्बनाऽऽविदूर्ययोः" इति आविदूर्येऽर्थे षत्वम्। नरविष्वणान्—नरान् विष्वणन्तीति नरविष्वणास्तान्। विपूर्वकात् "स्वन शब्दे" इति धातोः पचाद्यच्। "वेश्च स्वनो भोजने" इति षत्वम्। अविषीदन्—न विषीदतीति, विपूर्वकात् "षद्लृ विशरणगत्यवसादनेषु" इति धातोर्लटः शत्रादेशः। "सदिरप्रतेः" इति षत्वम्। निषद्य—निपूर्वकात् पूर्वधातोः क्त्वो ल्यबादेशः, पूर्वसूत्रेणैव षत्वम्। अधिष्ठास्यन्—अधिष्ठास्यतीति, अधिपूर्वकात् "ष्ठा गतिनिवृत्तौ" इति धातोर्लृटः शत्रादेशः। "उपसर्गात्सुनोति"-त्यादिना षत्वम्। व्यष्टभ्नात्—विपूर्वात् स्तन्भेः सौत्रधातोः लङ्। "स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च" इति चात् श्ना। "स्तन्भेः" इत्युपसर्गादुत्तरस्य धातुसकारस्य षत्वम्।

ॐभाषाऽर्थःॐ संग्राममें निकटवर्ती उन नरभक्षकों ( राक्षसों ) को खिन्न नहीं नहीं होते हुए हनूमानूजीने बहिर्द्वारमें खड़े होकर आक्रमण करते हुए नगरके बहिर्द्वारका आश्रय लिया ॥ ७२ ॥

विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् ।
यन्न व्यसहतेन्द्रोऽपि कपिः पर्यषहिष्ट तत् ॥ ७३ ॥

अन्वयः—राक्षसाः क्रुद्धाः ( सन्तः ) विषह्य शस्त्रजालम् अवाकिरन्, यत् इन्द्रोऽपि न व्यषहत तत् कपिः पर्यषहिष्ट ।

व्याख्या—राक्षसाः = यातुधानाः, क्रुद्धाः = कुपिताः सन्तः, विषह्य = सोढ्वा, कपिप्रहारमिति शेषः । शस्त्रजालम् = आयुधसमूहं, कपौ इति शेषः । अवाकिरन् = व्यक्षिपन् । यत् = शस्त्रजालम्, इन्द्रोऽपि = मघवाऽपि, न व्यषहत = न सोढवान्; तत् = शस्त्रजालं, कपिः = हनूमान्, पर्यषहिष्ट = सोढवान् ।

ॐव्युत्पत्तिःॐ विषह्य—विपूर्वकात् "षह मर्षणे" इति धातोः क्त्वो ल्यबादेशः । "सात्पदाद्योः" इति प्रतिषेधे प्राप्ते "परिनिविभ्यः सेवसितसयसिवसहसुट्स्तुस्वञ्जाम्" इति सहेः सस्य षत्वम् । अवाकिरन्—अवपूर्वकात् "कॄ विक्षेपे" इतिधातोर्लङ् । व्यषहत—विपूर्वकात्सहेर्लङ् । "सिवादीनां वाड्व्यवायेऽपि" इति विभाषया षत्वम् । पर्यषहिष्ट—परिपूर्वकात्सहेर्लुङ् । पूर्वसूत्रेणैव सहेः सकारस्य वैकल्पिकं षत्वम् ।

ॐभाषाऽर्थःॐ राक्षसोंने क्रुद्ध होकर हनूमानूजीके प्रहारको सहकर शस्त्र-समूहको छोड़ा । जिस (शस्त्र-समूह) को इन्द्रने भी नहीं सहन किया था, उसको हनूमानूजीने सह लिया ॥ ७३ ॥

विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान् ।
विष्कन्तॄन् परिघेणाऽहन्नविस्कन्ता कपिर्द्विषः ॥ ७४ ॥

अन्वयः—विष्यन्दमानरुधिरः कपिः रक्तविस्यन्दपाटलान् विष्कन्तॄन् द्विषः अविस्कन्ता ( सन् ) परिघेण अहन् ।

व्याख्या—विष्यन्दमानरुधिरः = क्षरद्रक्तः, कपिः = हनूमान्, रक्तविस्यन्दपाटलान् = रुधिरस्रावलोहितान्, विष्कन्तॄन् = विष्कन्दनशीलान्, गच्छतानित्यर्थः । द्विषः = शत्रून्, राक्षसानित्यर्थः । अविष्कन्ता = स्वयमचञ्चलः सन्, परिघेण = अर्गलेन, अहन् = हतवान् ।

ॐव्युत्पत्तिःॐ विष्यन्दमानरुधिरः—विष्यन्दत् इति विष्यन्दमानं, विपूर्वात् "स्यन्दू प्रस्रवणे" इति धातोर्लटः शानच्, विष्यन्दमानं रुधिरं यस्य सः । रुधिरस्य अप्राणित्वात् "अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु" इति स्यन्दतेः सस्य वैकल्पिकं षत्वम् । रक्तविष्यन्दपाटलान्—रक्तानां विष्यन्देन पाटलान् । विष्कन्तॄन्—विष्कन्दन्तीति तच्छीला

विष्कन्तारस्तान्, विपूर्वकात् "स्कन्दिर् गतिशोषणयोः" इति धातोस्ताच्छील्ये "तृन्" इति तृन् । "वेः स्कन्देरनिष्ठायाम्" इति षत्वविकल्पः । अविस्कन्ता—न विस्कन्दतीति, तृन् । वैकल्पिकत्वात् पक्षे षत्वस्याऽभावः ।

ॐभाषाऽर्थःॐ जिनके शरीरसे रुधिर बह रहा है ऐसे हनूमानूजीने रुधिर बहनेसे लाल वर्णवाले चञ्चल शत्रुओं को स्वयं चञ्चल न होकर परिघ से ताडित किया ॥७४॥

मेघनादः परिस्कन्दन् परिष्कन्दन्तमाश्वरिम् ।
अबध्नादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन् ॥ ७५ ॥

अन्वयः— मेघनादः परिस्कन्दन् परिष्कन्दन्तम् अरिम् अपरिस्कन्दं ब्रह्मपाशेन विस्फुरन् आशु अबध्नात् ।

व्याख्या—मेघनादः = इन्द्रजित्, परिस्कन्दन्=परितो भ्रमन्, परिष्कन्दन्तं = परितो भ्रमन्तम्, अरिं=शत्रुं, हनूमन्तमित्यर्थः। अपरिस्कन्दं=निश्चलं यथा तथा, ब्रह्मपाशेन = ब्रह्माऽस्त्रेण, विस्फुरन् = दीप्यमानः सन्, आशु=शीघ्रम्, अबध्नात्=बबन्ध ।

ॐव्युत्पत्तिःॐ परिस्कन्दन्—परिस्कन्दतीति, परिपूर्वकात् "स्कन्दिर् गतिशोषणयोः" इति धातोर्लटः शत्रादेशः । "परेश्च" इत्यनेन षत्वस्य वैकल्पिकत्वात्पक्षे तदभावः । परिष्कन्दन्तं—पूर्वसूत्रेण षत्वम् । "मेघनादः परिष्कन्ता परिष्कन्ता माश्वरिम् ।" इति क्वाचित्कः पाठः । अपरिस्कन्दम्—परिस्कन्दतीति "परिस्कन्दः" पचाद्यच्, "परिस्कन्दः प्राच्यभरतेषु" इति "परेश्चे"ति षत्वविकल्पे प्राप्ते तदभावो निपात्यते । केषांचिन्मते क्तप्रत्ययान्तोऽयं, तत्र पूर्वसूत्रेण निपातनात् नलोपो बोध्यः । अविद्यमानः परिस्कन्दो यस्मिन्कर्मणि तद्यथा तथेति क्रियाविशेषणम् । विस्फुरन्—विस्फुरतीति, विपूर्वकात् "स्फुर संचलने" इति धातोर्लटः शत्रादेशः । "स्फुरतिस्फुलत्योर्निर्निविभ्यः" इति षत्वस्य विकल्पत्वात्पक्षे तदभावः । अबध्नात्—"बन्ध बन्धने" इति धातोर्लङ् ॥

ॐभाषाऽर्थःॐ इन्द्रजितने चारों तरफ घूमकर चारों तरफ घूमते हुए शत्रु हनूमानूजीको निश्चल रूपसे ब्रह्मास्त्रसे प्रकाशमान होकर शीघ्र बांध डाला ॥ ७५ ॥

विस्फुलद्भिर्गृहीतोऽसौ निष्फुलः पुरुषाऽशनैः ।
विष्कम्भितुं समर्थोऽपि नाऽचलद्ब्रह्मगौरवात् ॥ ७६ ॥

अन्वयः—विस्फुलद्भिः पुरुषाऽशनैः गृहीतो निस्फुलः असौ विष्कम्भितुं समर्थः अपि ब्रह्मगौरवात् न अचलत् ।

व्याख्या—विस्फुलद्भिः = उत्साहाचलद्भिः, पुरुषाऽशनैः = नरभक्षकैः, राक्षसैरित्यर्थः । गृहीतः = धृतः, तथाऽपि—निस्फुलः = दीप्यमानः, असौ = हनूमान्, विष्कम्भितुं=विचलितुं, समर्थोऽपि = शक्तोऽपि, ब्रह्मवरादेवेति शेषः । ब्रह्मगौरवात्= विधिगुरुत्वात्, न अचलत्=न चलितः ॥

ॐव्युत्पत्तिःॐ विस्फुलद्भिः—विस्फुलन्तीति विस्फुलन्तस्तैः, विपूर्वकात् "स्फुल संचलने" इति धातोर्लटः शत्रादेशः। "स्फुरतिस्फुलत्योर्निर्निविभ्य" इति षत्वस्य विकल्पत्वात्पक्षे तदभावः। पुरुषाऽशनैः—पुरुषमश्नन्तीति पुरुषाऽशनास्तैः, "कृत्यल्युटो बहुलम्" इति बहुलग्रहणसामर्थ्यात् कर्तरि ल्युट्। निष्फुलः—निस्फुलतीति, पचाद्यच्। पूर्वसूत्रेण षत्वविकल्पः। "संज्ञापूर्वको विधिरनित्य" इति "पुगन्तलघूपधस्य च" इति गुणाऽभावः। विष्कम्भितुं—विपूर्वात सौत्रात् स्कम्भुधातोस्तुमुन्। "वेः स्कभ्नातेर्नित्यम्" इति सस्य षः।

ॐभाषाऽर्थःॐ उत्साहसे चलते हुए राक्षसोंसे पकड़े गये तौ भी दीप्यमान हनूमानूजी विचलित होने के लिए समर्थ होते हुए भी ब्रह्माजीके गौरवसे विचलित नहीं हुए ॥ ७६ ॥

"कृषीढ्वं भर्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत्।
वानरं नेतु"मित्युच्चैरिन्द्रजित् प्रावदत्स्वकान् ॥ ७७ ॥

अन्वयः—"( हे भटाः! ) भर्तुः आनन्दं कृषीढ्वं, वानरं नेतुं वियत् द्रुतं मा न प्रोढ्वम्" इति इन्द्रजित् उच्चैः स्वकान् प्रावदत्।

व्याख्या—( हे भटाः! ) भर्तुः = स्वामिनः, रावणस्येत्यर्थः, आनन्दं=हर्षम्। कृषीढ्वं=कुरुध्वं, जयघोषणयेति भावः। वानरं=कपिं, नेतुं=प्रापयितुं, रावणसमीप इति शेषः। वियत् = आकाशं, द्रुतं = शीघ्रं, मा न प्रोढ्वं = नो न गच्छत, किन्तु गच्छत इत्यर्थः। "मा न प्लोढ्वम्" इति पाठेऽपि स एवाऽर्थः। "द्वौ नञौ एकं प्रकृतमर्थं द्योतयत" इति नयादिति भावः। इति = एवम्, इन्द्रजित्=मेघनादः, उच्चैः = तारस्वरेण, स्वकान् = आत्मीयान्, भटानिति शेषः, प्रावदत् = अब्रवीत्।

ॐव्युत्पत्तिःॐ कृषीढ्वं—"डुकृञ् करणे" इति धातोराशीर्लिङि "लिङः सीयुट्" इति सीयुट्। "इणः षीध्वंलुङ्लिटां धोऽङ्गात्" इति षीध्वमो धकारस्य मूर्धन्यो ढकारः। मा न प्रोढ्वं—माङि उपपदे "प्रुङ् गतौ" इति धातोर्लुङ्। ध्वमि "धि च" इति सलोपे गुणः "इणः षीध्व"मित्यादिना लुङ्धकारस्व मूर्धन्यो ढः। "प्लोढ्वम्" इति पाठे "प्लुङ् गतौ" इति धातुः।

ॐभाषाऽर्थःॐ "हे योद्धाओ! जयघोषणासे स्वामीके हर्षको उत्पन्न करो, वानरको स्वामीके समीप पहुँचानेके लिए आकाशमें शीघ्र कूद जाओ" ऐसा इन्द्रजित्ने ऊँचे स्वरसे अपने भृत्यों को कहा ॥ ७७ ॥

गतमङ्गुलिषङ्गं त्वां भीरुष्ठानादिहाऽऽगतम्।
खादिष्याम इति प्रोचुर्नयन्तो मारुतिं द्विषः ॥ ७८ ॥

अन्वयः—"अङ्गुलिषङ्गं गतं भीरुष्ठानात् इह आगतं त्वां खादिष्याम" इति मारुतिं नयन्तो द्विषः प्रोचुः।

**व्याख्या**—अङ्गुलिषङ्गं गतं = हस्तप्राप्तमित्यर्थः, भीरुष्ठानात्=कातरस्थानात्, मानवजनपदादिति भावः । इह = लङ्कायाम्, आगतम् = आयातं, त्वां=कपिं, खादिष्यामः = भक्षयिष्यामः, इति=एवं, मारुतिं = हनूमन्तं, नयन्तः = प्रापयन्तः, रावणाऽन्तिकमिति शेषः । द्विषः=शत्रवः, राक्षसा इत्यर्थः, प्रोचुः = जगदुः ।

॥व्युत्पत्तिः॥ अङ्गुलिषङ्गम्—अङ्गुलिषु सङ्गः अङ्गुलिषङ्गस्तं, "समासेऽङ्गुलेः सङ्गः" इति सस्य षत्वम् । मल्लिनाथस्तु "अङ्गुलिषङ्गत्वम्" इत्यपाठीत् । अङ्गुलिषु सङ्गो यस्य सोऽङ्गुलिषङ्गस्तस्य भावस्तत्वमिति व्याख्यच्च । भीरुष्ठानात्—भीरोः स्थानं भीरुष्ठानं, तस्मात् । "भीरोः स्थानम्" इति समासे सस्य षः । "ष्टुना ष्टुः" इति थस्य ठः । खादिष्यामः—"खाद भक्षणे" इति धातोः लृट् ।

॥भाषाऽर्थः॥ "हस्तप्राप्त और डरपोक ( मनुष्य ) के स्थानसे यहां आये हुए तुझे हम लोग खायँगे" ऐसा वचन हनूमान्‌जीको ले जानेवाले राक्षसोंने कहा ॥७८॥

**अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमाऽऽदिषु द्विजान् ।**
**योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चाऽवदन् ॥ ७९ ॥**

**अन्वयः**—"अग्निष्टोमाऽऽदिसंस्थेषु ज्योतिष्टोमाऽऽदिषु यो द्विजान् अरक्षीत्, तस्य मानुषस्य अयं दूत" इति च अवदन् ।

**व्याख्या**—अग्निष्टोमादिसंस्थेषु = अग्निष्टोमप्रभृतिसदृशेषु, ज्योतिष्टोमादिषु= ज्योतिष्टोमप्रभृतिषु क्रतुषु, यः = मानुषः द्विजान् = ब्राह्मणान्, विश्वामित्रादीनित्यर्थः । अरक्षीत् = रक्षितवान्, तस्य = पूर्वाऽभिहितस्य, मानुषस्य = मानवस्य, रामस्येत्यर्थः । अयं = संनिकृष्टवर्ती वानरः, दूतः = संदेशहरः, इति च = एवं च, अवदन् = अब्रुवन्, राक्षसा इति शेषः ।

॥व्युत्पत्तिः॥ अग्निष्टोमादिसंस्थेषु—अग्नीनां स्तोमः अग्निष्टोमः, सोमयागस्य संस्थासु आद्या संस्था उच्यते । "अग्नेः स्तुत्स्तोमसोमाः" इति सस्य षः । अग्निष्टोमः ( यज्ञविशेषः ) आदिर्येषां ते, ते संस्थाः ( प्रकाराः ) येषां तेषु । ज्योतिष्टोमादिषु – ज्योतिषः स्तोमो ज्योतिष्टोमः षोडशर्त्विक्साध्यो यज्ञविशेषः, "ज्योतिरायुषः स्तोमः" इति सस्य षः । स आदिर्येषां तेषु, यज्ञेष्वित्यर्थः । मानुषस्य—मनोरपत्यं पुमान् मानुषस्तस्य, "मनोर्जातावञ्यतौ षुक् च" इति अञ् षुगागमश्च ।

॥ भाषाऽर्थः ॥ "अग्निष्टोम आदि जैसे और ज्योतिष्टोम आदि यज्ञोंमें जिसने ब्राह्मणों की रक्षा की, उस मनुष्य का यह दूत है ।" ऐसा ( राक्षसों ने ) कहा ॥७९॥

**'नासां मातृष्वसेय्याश्च रावणस्य लुलाव यः ।**
**मातुः स्वसुश्च तनयान् खराऽऽदीन् विजघान यः ॥ ८० ॥**

**अन्वयः**—यो रावणस्य मातृष्वसेय्या नासां च लुलाव, यः मातुःस्वसुः तनयान् खरादींश्च निजघान।

**व्याख्या**—यः = मानुषः, रावणस्य = दशाऽऽननस्य, मातृष्वसेय्याः = मातृष्वसुः पुत्र्याः, शूर्पणखाया इति भावः। नासां च = नासिकां च, लुलाव = चिच्छेद, यः = मानुषः, मातुः स्वसुः = मातृभगिन्याः, तनयान् = पुत्रान्, खरादींश्च = खरप्रभृतींस्तु, निजघान = हतवान्, ( "अयं तस्य मानुषस्य दूत इति अवदन्" इति पूर्वेण सम्बन्धः )।

※ व्युत्पत्तिः ※ मातृष्वसेय्याः—मातुः स्वसा मातृष्वसा "मातृपितृभ्यां स्वसा" इति समासे षत्वम्। मातृष्वसुरपत्यं स्त्री मातृष्वसेयी, तस्याः। "मातृष्वसुश्च" इति ढगन्त्यलोपौ। लुलाव—"लूञ् छेदने" इति धातोर्लिट्। मातुः स्वसुः—"विभाषा स्वसृपत्योः" इति षष्ठ्या विकल्पादलुक्। "मातुःपितुर्भ्यामन्यतरस्याम्" इति वैकल्पिकषत्वस्याभावः।

※ भाषाऽर्थः ※ जिस मनुष्यने रावणकी मौसीकी बेटी ( शूर्पणखा ) की नाक भी काटी, जिसने रावणकी मौसीके पुत्र खर आदिक को भी मार डाला। ( उस मनुष्य का यह दूत है, राक्षसोंने ऐसा कहा ) ॥ ८० ॥

प्रादुःषन्ति न संत्रासा यस्य रक्षःसमागमे।
तस्य क्षत्रियदुःषूतेरयं प्रणिधिरागतः ॥ ८१ ॥

**अन्वयः**—यस्य रक्षःसमागमे सन्त्रासा न प्रादुःषन्ति, क्षत्रियदुःषूतेः तस्य अयं प्रणिधिः आगतः।

**व्याख्या**—यस्य = मानुषस्य, रक्षःसमागमे = राक्षससम्प्रहारे, सन्त्रासाः = भयानि, न प्रादुःषन्तिः = न प्रादुर्भवन्ति, क्षत्रियदुःषूतेः = क्षत्रदुःसन्तानस्य, तस्य = मानुषस्य, अयं = सन्निकृष्टस्थः, प्रणिधिः = चारः, आगतः = आयातः ( इति तेऽवदन् )।

※ व्युत्पत्तिः ※ प्रादुःषन्ति—"उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" इति प्रादुःशब्दात्परस्य अस्धातोः सकारस्य "श्नसोरल्लोपः" इत्यल्लोपे कृते षत्वम्। क्षत्रदुःषूतेः—सूयत इति सूतिः, "षूङ् प्राणिप्रसवे" इति धातोः कर्मणि "स्त्रियां क्तिन्" इति क्तिन्। दुष्टा सूतिः दुःषूतिः, "कुगतिप्रादयः" इति समासः। "सुविनिर्दुर्भ्यः सुपिसूतिसमाः" इति सूतेः सकारस्य षत्वम्। क्षत्रियस्य दुःषूतेः। प्रणिधिः—"यथाऽर्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः।" इत्यमरः।

※ भाषाऽर्थः ※ जिसको राक्षसोंके साथ युद्धमें भय उत्पन्न नहीं होते हैं, क्षत्रियकी दुष्ट सन्तति उस मनुष्यका यह दूत आया है ( राक्षसोंने ऐसा कहा ) ॥ ८१ ॥

**दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाऽऽशयः ।**
**चारकर्मणि निष्णातः प्रविष्टः प्रमदावनम् ॥ ८२ ॥**

अन्वयः—चारकर्मणि निष्णातो विषमाशयः पापः अयं राजेन्द्रं सुषुप्तं दृष्ट्वा प्रमदावनं प्रविष्टः ।

व्याख्या—चारकर्मणि = प्रणिधिक्रियायां, निष्णातः = कुशलः, विषमाऽऽशयः = कपटचित्तः, पापः = क्रूरः, अयं = वानरः, राजेन्द्रं = रावणं, सुषुप्तं = गाढनिद्रं, प्रमादिनमिति भावः । दृष्ट्वा = विलोक्य, ज्ञात्वेति भावः । प्रमदावनं = ललनोपवनम् , अशोकवनिकामित्यर्थः । प्रविष्टः = प्राविशत् ( इति ते अवदन् ) ।

**व्युत्पत्तिः** चारकर्मणि = चर एव चारः, स्वार्थ अण् । चारस्य कर्मणि । निष्णातः—"निनदीभ्यां स्नातेः कौशले" इति षत्वम् । "प्रवीणे निपुणाऽभिज्ञविज्ञनिष्णातशिक्षिताः ।" इत्यमरः । विषमाशयः = विपूर्वकस्य समस्य "सुविनिर्दुर्भ्यः सुपिसूतिसमाः" इति षत्वे विषमः । विषम आशयो यस्य सः । पापः—पापमस्याऽस्तीति, "अर्श आदिभ्योऽच्" इत्यच् । "नृशंसो घातुकः क्रूरः पापः" इत्यमरः । सुषुप्तं—सुष्ठु सुप्तः सुषुप्तस्तं, "ञिष्वप् शये" इति धातोः क्तप्रत्यये "वचिस्वपियजादीनां किति" इति सम्प्रसारणम् । "सुविनिर्दुर्भ्यः" इत्यादिना षत्वम् ।

**भाषाऽर्थः** चारकर्ममें कुशल, कपटचित्त, क्रूर यह बन्दर महाराज रावणको असावधान (सोया) जानकर अशोकवनिकामें घुस गया (ऐसा राक्षसोंने कहा) ॥८२॥

कुलकम् ८३—८७ ।

**सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषाम् ।**
**स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीम् ॥ ८३ ॥**

अन्वयः—( अयम् ) सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषां द्विजातीनां वृत्ते स्थितां मैथिलीं रात्रौ ऐक्षत ।

व्याख्या—( अयं = वानरः ) सुप्रतिष्णातसूत्राणां = विशुद्धसूत्राणां, कपिष्ठलसमत्विषां = गोत्रप्रवर्तककपिष्ठलऋषिसमानतेजसां, द्विजातीनां = ब्राह्मणानां, वृत्ते = चरित्रे, स्थितां = कृताश्रयां, मैथिलीं = जानकीं, रात्रौ = रजन्याम्, ऐक्षत = दृष्टवान् ( इति ते अवदन् ; इति पूर्वसम्बन्धः ) ।

**व्युत्पत्तिः** सुप्रतिष्णातसूत्राणां—"प्रतिष्णातम्" इत्यत्र "सूत्रं प्रतिष्णातम्" इति प्रतेः स्नातेः षत्वम् । शोभनं प्रतिष्णातं ( शुद्धम् ) सूत्रं येषां ते सुप्रतिष्णातसूत्रास्तेषाम् । कपिष्ठलसमत्विषां—"कपिष्ठल" इत्यत्र "कपिष्ठलो गोत्रे" इति निपातनात्षत्वम् । कपिष्ठलेन समा त्विड् येषां तेषाम् । द्विजातीनां—द्वे जाती ( जन्मनी ) येषां ते द्विजातयस्तेषाम् । वृत्ते—"वृत्तं पद्ये चरित्रे च" इत्यमरः ।

ॐभाषाऽर्थःॐ ( इस वानर ने ) विशुद्ध सूत्रवाले और कपिष्ठल ऋषिके समान तेजवाले ब्राह्मणोंके आचारमें रही हुई सीताको रातमें देखा ॥ ८३ ॥

**सर्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिराम् ।**
**शयानां कुष्ठले तारां दिविष्ठामिव निर्मलाम् ॥ ८४ ॥**

**अन्वयः**—सर्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिरां कुष्ठले शयानां दिविष्ठां ताराम् इव निर्मलाम् ( मैथिलीं रात्रौ ऐक्षत )।

**व्याख्या**—सर्वनारीगुणैः = सकलस्त्रीगुणैः, प्रष्ठाम्=अग्रगामिनीम् , उत्तमामित्यर्थः । विष्टरस्थां = पवित्रासनस्थां, गविष्ठिरां = वाचि स्थिरां, सत्यवाचमित्यर्थः । कुष्ठले = भूतले, शयानां=सुप्तां, स्वप्नशीलामित्यर्थः । दिविष्ठां=व्योमस्थितां, ताराम् इव=तारकाम् इव, निर्मलाम् = अमलां, पवित्रामित्यर्थः ( मैथिलीं रात्रौ ऐक्षत इति पूर्वश्लोकस्थपदैः सम्बन्धः ) ।

ॐव्युत्पत्तिःॐ सर्वनारीगुणैः—सर्वे च ते नारीगुणाः सर्वनारीगुणास्तैः, "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाऽधिकरणेन" इति समासः । प्रष्ठां = प्रतिष्ठत इति प्रष्ठा, ताम् । "आतश्चोपसर्गे" इति कः, "प्रष्ठोऽग्रगामिनि" इति षत्वनिपातः । विष्टरस्थां—विस्तीर्यत इति विष्टरः, विपूर्वकात् "स्तृञ् आच्छादने" इति धातोः "वृक्षाऽऽसनयोर्विष्टर" इति साधुत्वम् । "विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ।" इत्यमरः । विष्टरे तिष्ठतीति विष्टरस्था, ताम् । गविष्ठिरां—गवि स्थिरा इति गविष्ठिरा, ताम् । "गवियुधिभ्यां स्थिरः" इति षत्वम्, एतस्मादेव वचनात्सप्तम्या अलुक् । कुष्ठले—कोः स्थलमिति कुष्ठलं, तस्मिन् । "विकुशमिपरिभ्यः स्थलम्" इति षत्वम् । "गोत्रा कुः पृथिवी पृथ्वी" इत्यमरः । दिविष्ठां—दिवि तिष्ठतीति दिविष्ठा, ताम् । "अम्बाऽम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः" इति षत्वम् । अत्रैव "दिवी"ति निर्देशादलुक् ।

ॐभाषाऽर्थःॐ सम्पूर्ण स्त्रीगुणोंसे अग्रगामिनी, पवित्र, आसनमें स्थित, सत्य बोलनेवाली, भूतलमें सोनेवाली और तारासदृश निर्मल सीताजीको इसने रात में देखा ॥८४॥

**सुषाम्नीं सर्वतेजस्सु तन्वीं ज्योतिष्टमां शुभाम् ।**
**निष्टपन्तीमिवाऽऽत्मानं ज्योतिःसात्कुर्वतीं वनम् ॥ ८५ ॥**

**अन्वयः**—सुषाम्नीं सर्वतेजःसु ज्योतिष्टमां तन्वीं शुभाम् आत्मानं निष्टपन्तीम् इव वनं ज्योतिःसात्कुर्वतीम् ( मैथिलीं रात्रौ ऐक्षत ) ।

**व्याख्या**—सुषाम्नीं = शोभनसान्त्वयुक्तां, सर्वतेजःसु = सकलज्योतिःसु, ज्योतिष्टमाम् = उत्कृष्टतेजोभूतां, तन्वीं=कृशां, शुभां = कल्याणीम्, आत्मानं = शरीरं, निष्टपन्तीम् इव = तपोऽग्नौ सन्तापयन्तीम् इव, वनम् = उपवनं, ज्योतिः-

सात्कुर्वतीं = कात्स्न्येन ज्योतिर्मयं कुर्वतीम् ( मैथिलीं स रात्रौ ऐक्षतेति सम्बन्धः )।

※व्युत्पत्तिः※ सुषाम्नीं—शोभनं साम यस्याः सा सुषाम्नी, ताम्। "अन उपधा-लोपिनोऽन्यतरस्याम्" इति ङीप्, "सुषामादिषु च" इति षत्वं च। ज्योतिष्टमाम्—अतिशयेन ज्योतिर्ज्योतिष्टमा, ताम्। "अतिशायने तमबिष्ठनौ" इति तमप्प्रत्ययः। "ह्रस्वात्तादौ तद्धिते" इति षत्वं, ष्टुत्वं च। निष्टपन्तीं—निष्टपतीति निष्टपन्ती, ताम्। "निसस्तपतावनासेवने" इति षत्वम्। ज्योतिःसात्कुर्वतीं-"विभाषा साति कात्स्न्ये" इति सातिप्रत्ययः। "नुम्विसर्जनीयशर्व्यवायेऽपि" इति प्राप्तस्य षत्वस्य "सात्प-दाद्योः" इति निषेधः।

※भाषाऽर्थः※ उत्तम सान्त्वसे युक्त सब तेजोंमें उत्कृष्ट तेजोभूत, कृश और कल्याणी तथा अपनेको तपस्यारूप अग्निमें सन्तप्त करती हुईकी सदृश एवम् उप-वनको ज्योतिर्मय करती हुई की सदृश सीताजीको बन्दरने रातमें देख लिया ॥८५॥

**मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराऽऽकुलाम् ।**
**उल्लसत्कुसुमां पुण्यां हेमरत्नलतामिव ॥ ८६ ॥**

**अन्वयः**—मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराऽऽकुलाम् उल्लसत्कुसुमां पुण्यां हेमरत्नलताम् इव ( मैथिलीं रात्रौ अयम् ऐक्षत )।

**व्याख्या**—मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराऽऽकुलां = प्रचुरमधुताऽऽपन्नकेसर-पिङ्गलद्विरेफव्याप्ताम्, उल्लसत्कुसुमां=राजत्पुष्पां, पुण्यां=पवित्रां, हेमरत्नलताम् इव= मणिखचितस्वर्णमयकल्पवल्लीम् इवेत्यर्थः ( एतादृशीं मैथिलीं रात्रौ अयम् ऐक्षतेति सम्बन्धः )।

※ व्युत्पत्तिः ※ मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराऽऽकुलां—कात्स्न्येन मधुभूताः मधुसाद्भूताः, "विभाषा साति कात्स्न्ये" इति सातिप्रत्ययः, "आदेशप्रत्यययोः" इति षत्वे प्राप्ते "सात्पदाद्योः" इति निषेधः। मधुसाद्भूता ये किञ्जल्काः, तैः पिञ्जरैर्भ्र-मरैराकुलाम्। उल्लसत्कुसुमाम्—उल्लसन्ति कुसुमानि यस्यां, ताम्।

※ भाषाऽर्थः ※ प्रचुर मधुओंसे पूर्ण केसरोंसे पीले भ्रमरोंसे आकुल, शोभित पुष्पोंसे सम्पन्न, पवित्र, मणिखचित सुवर्णमय कल्पवृक्षकी लता-सरीखी सीताजी को रातमें इस बन्दरने देख लिया ॥ ८६ ॥

**विलोचनाऽम्बु मुञ्चन्तीं कुर्वाणां परिसेसिचाम् ।**
**हृदयस्येव शोकाऽग्निसन्तप्तस्योत्तमव्रताम् ॥ ८७ ॥**

**अन्वयः**—विलोचनाऽम्बु मुञ्चन्तीं शोकाऽग्निसन्तप्तस्य हृदयस्य परिसेसिचां कुर्वाणाम् इव उत्तमव्रताम् ( मैथिलीम् अयं रात्रौ ऐक्षत )।

**व्याख्या**—विलोचनाऽम्बु=अश्रु, मुञ्चन्तीं=क्षरन्तीं, शोकाऽग्निसन्तप्तस्य =

मन्युवह्निसन्तापयुक्तस्य, हृदयस्य = हृदः, परिसेसिचां = परितः पौनःपुन्येन, सेचनं, कुर्वाणाम् इव = विदधतीम् इव, स्थितामिति शेषः। उत्तमव्रताम् = उत्कृष्टनियमां, पतिव्रतामिति भावः। ( मैथिलीम् अयं रात्रौ ऐक्षतेति सम्बन्धः )।

ॐव्युत्पत्तिःॐ शोकाऽग्निसन्तप्तस्य—शोक एवाऽग्निस्तेन सन्तप्तस्य। परिसेसिचां—परिपूर्वकात् यङन्तात् "षिच क्षरणे" इति धातोः "अ प्रत्ययात्" इति अप्रत्ययः। "उपसर्गात्सुनोती"त्यादिना षत्वे प्राप्ते "सिचो यङि" इति प्रतिषेधः।

ॐभाषाऽर्थःॐ आंसू गिराती हुई, अत एव शोकरूप अग्निसे सन्तप्त हृदयको चारों तरफ बारंबार सेचन करती हुई की सदृश और उत्तम व्रतवाली सीताको इसने रातमें देख लिया ॥ ८७ ॥

**दृष्ट्वा तामभनग्वृक्षान् द्विषो घ्नन् परिसेधतः।**
**परितस्तान् विचिक्षेप क्रुद्धः स्वयमिवाऽनिलः ॥ ८८ ॥**

**अन्वयः**—तां दृष्ट्वा परिसेधतो द्विषो घ्नन् ( अयम् ) वृक्षान् अभनक्, स्वयं क्रुद्धः अनिल इव तान् परितः विचिक्षेप।

**व्याख्या**—तां = सीतां, दृष्ट्वा = विलोक्य, परिसेधतः=सर्वतो गच्छतः, द्विषः= शत्रून्, घ्नन् = हिंसन्, ( अयं = वानरः ) वृक्षान्=तरून, अभनक् = बभञ्ज। स्वयं= साक्षात्, क्रुद्धः = कुपितः, अनिल इव = वायुरिव, तान् = वृक्षान्, परितः=समन्तात्, विचिक्षेप=विक्षिप्तवान्।

ॐव्युत्पत्तिःॐ परिसेधतः—परिसेधन्तीति परिसेधन्तस्तान्, "षिधु गत्याम्" इति धातोर्लटः शत्रादेशः। "उपसर्गात्सुनोती"त्यादिना प्राप्तस्य षत्वस्य "सेधतेर्गतौ" इति प्रतिषेधः। अभनक्—भञ्जेर्लङि तिलोपः कुत्वं च। परितः—"समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इत्यमरः।

ॐभाषाऽर्थःॐ सीताको देखकर सब ओर जाते हुए शत्रुओंको मारते हुए इसने पेड़ोंको तोड़ डाला, साक्षात् कुपित वायुके सदृश उन (पेड़ों) को चारों ओर फेंका ॥८८॥

**अप्रतिस्तब्धविक्रान्तमनिस्तब्धो महाऽऽहवे।**
**विसोढवन्तमस्त्राणि व्यतस्तम्भद्घनध्वनिः ॥ ८९ ॥**

**अन्वयः**—घनध्वनिः महाऽऽहवे अनिस्तब्धः ( सन् ) अप्रतिस्तब्धविक्रान्तम् अस्त्राणि विसोढवन्तम् ( एनम् ) व्यतस्तम्भत् ( नयन्तो राक्षसा एनम् अवदन् )।

**व्याख्या**—घनध्वनिः = मेघनादः, इन्द्रजिदित्यर्थः। महाऽऽहवे = महायुद्धे, अनिस्तब्धः = अप्रतिबन्धः सन्, अप्रतिस्तब्धविक्रान्तम् = अप्रतिबन्धपराक्रमम्, अस्त्राणि = आयुधानि, विसोढवन्तं = मर्षयन्तम्, ( एनं = कपिम् ) व्यतस्तम्भत् = स्तब्धं कृतवान्, "हनूमन्तं नयन्तो राक्षसा एवमवदन्नि"ति योज्यम्।

*व्युत्पत्तिः* घनध्वनिः—घनस्येव ध्वनिर्यस्य सः । महाऽऽहवे—महांश्चाऽसौ आहवो महाहवस्तस्मिन्, "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति समासः । "आन्महतः समानाऽधिकरणजातीययोः" इत्यात्वम् । "अभ्यामर्दसमाघातसंग्रामाऽभ्यागमाऽऽहवाः ।" इत्यमरः । अनिस्तब्धः—अविद्यमानं निस्तब्धं यस्य सः । अप्रतिस्तब्धविक्रान्तम्—अविद्यमानं प्रतिस्तब्धं यस्य तत् अप्रतिस्तब्धं, तादृशं विक्रान्तं यस्य सः अप्रतिस्तब्धविक्रान्तस्तम् । निस्तब्धप्रतिस्तब्धयोरुभयत्र "स्तन्भेः" इति प्राप्तस्य षत्वस्य "प्रतिस्तब्धनिस्तब्धौ च" इति प्रतिषेधनिपातनम् । विसोढवन्तं—विपूर्वात् "षह मर्षणे" इति धातोः क्तवतुप्रत्ययः । "परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इति प्राप्तस्य षत्वस्य "सोढः" इति निषेधः । व्यतस्तम्भत्—स्तम्भेर्णौ चङि "स्तम्भुसिवुसहां चङि" इति षत्वप्रतिषेधः ।

*भाषाऽर्थः* इन्द्रजित्‌ने महायुद्धमें प्रतिबन्धरहित होते हुए प्रतिबन्धरहित पराक्रमवाले और अस्त्रोंको सहनेवाले इस बन्दरको निश्चल कर डाला, हनूमान्‌जीको ले जानेवाले राक्षसोंने ऐसा कहा ॥ ८९ ॥

ते विज्ञायाऽभिसोष्यन्तं रक्तैः रक्षांसि सव्यथाः ।
अन्यैरप्यायतं नेहुर्वरत्राशृङ्खलाऽऽदिभिः ॥ ९० ॥

अन्वयः—ते रक्षांसि रक्तैः अभिसोष्यन्तं विज्ञाय सव्यथाः ( सन्तः ) अन्यैरपि वरत्राशृङ्खलाऽऽदिभिः आयतं नेहुः ।

व्याख्या—ते = राक्षसाः, रक्षांसि = राक्षसान्, रक्तैः = रुधिरैः, अभिसोष्यन्तम् = अभिषेक्ष्यन्तं, क्वचित् "निसोष्यन्तम्" इति पाठः । कपिमिति शेषः । विज्ञाय = ज्ञात्वा, तत्समये प्रतिचिकीर्षुं बुद्ध्वेति भावः । सव्यथाः = सभयाः सन्तः, अन्यैरपि = अपरैरपि, वरत्राशृङ्खलाऽऽदिभिः = चर्ममयरज्जुनिगडप्रभृतिभिः, आयतं = दीर्घं यथा तथा, मल्लिनाथमते तु "आयतैः" इति तृतीयाऽन्तः पाठः । नेहुः = बबन्धुः, मल्लिनाथमते "मेनुः" इति पाठः, अर्थः पूर्वोक्त एव "मन बन्धने" इति धातुः ।

*व्युत्पत्तिः* अभिसोष्यन्तम्—अभिसोष्यतीति अभिसोष्यन्, तम् "षुञ् अभिषवे" इति धातोर्लृटः शत्रादेशः । "सुनोतेः स्यसनोः" इति "उपसर्गात्सुनोती"त्यादिना प्राप्तस्य षत्वस्य निषेधः । नेहुः—"णह बन्धने" इति धातोर्लिट् । "अत एकहल्मध्येऽनादेशादेर्लिटि" इति एत्वमभ्यासलोपश्च ।

*भाषाऽर्थः* उन राक्षसोंने हनूमान्‌जीको राक्षसोंको रुधिरोंसे अभिषेक करनेवाले जानकर भयभीत होकर और भी चर्ममय रज्जु ( रस्सी ) और निगड ( बेड़ी ) आदिसे विस्तृतरूपसे बांधा ॥ ९० ॥

विषसादेन्द्रजिद् बुद्ध्वा बन्धे बन्धाऽन्तरक्रियाम् ।
दिव्यबन्धो विषहते नाऽपरं बन्धनं यतः ॥ ९१ ॥

पाठे निःपूर्वात् "वा गतिगन्धनयोः" इति धातोः कर्तरि क्तः। "निर्वाणोऽवाते" इति निपातनान्निष्ठानत्वे णत्वम्।

॥भाषाऽर्थः॥ "इसने देवदारुवृक्षोंसे युक्त आम्रके वृक्ष आदि से उपलक्षित उद्यानको वृक्षरहित कर डाला।" ऐसा वानरद्वेषी राक्षसोंने कहा ॥ ९४ ॥

उपास्थिषत संप्रीताः पूर्वाह्णे रोषवाहणम्।
राक्षसाः कपिमादाय पतिं रुधिरपायिणाम् ॥ ९५ ॥

अन्वयः—पूर्वाह्णे संप्रीता राक्षसा कपिम् आदाय रोषवाहणं रुधिरपायिणां पतिम् उपास्थिषत।

व्याख्या—पूर्वाह्णे = प्राह्णे, संप्रीताः = हृष्टाः, राक्षसाः=यातुधानाः, कपिं = हनूमन्तम्, आदाय = गृहीत्वा, रोषवाहणं=कोपाश्रयम्, अतिकुपितं, रुधिरपायिणां= रक्तपायिनां, राक्षसानामित्यर्थः, पतिं = स्वामिनं, रावणमित्यर्थः। उपास्थिषत= उपस्थिताः, तेन संगता इत्यर्थः।

॥व्युत्पत्तिः॥ पूर्वाह्णे—अह्नः पूर्वं पूर्वाह्णः, तस्मिन्। "पूर्वाऽपराऽधरोत्तरमेकदेशिनैकाधिकरणे" इति एकदेशिसमासः। "अह्नोऽह्न एतेभ्य" इति अह्नादेशः, "अह्नोऽदन्तात्" इति णत्वम्, "रात्राऽह्नाऽहाः पुंसि" इति पुंल्लिङ्गता। रोषवाहणं=रोषस्य वाहनं, "वाहनमाहितात्" इति णत्वम्। रुधिरपायिणां =रुधिरं पिबन्तीति तच्छीलास्तेषां ताच्छील्ये णिनिः। "प्रातिपदिकाऽन्तनुम्विभक्तिषु च" इति णत्वम्। उपास्थिषत=उपपूर्वात् स्थाधातोर्लुङि "उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्" इति संगतिकरण आत्मनेपदम् "स्थाघ्वोरिच्च" इति इत्वम्।

॥भाषाऽर्थः॥ प्रसन्न होकर राक्षसलोग दिनके पूर्वभागमें हनूमान्जीको लेकर अतिशय कुपित राक्षसोंके स्वामी रावणके पास उपस्थित हुए ॥ ९५ ॥

सुरापाणपरिक्षीबं रिपुदर्पहरोदयम्।
परस्त्रीवाहिनं प्रापुः साऽऽविष्कारं सुरापिणः ॥ ९६ ॥

अन्वयः—साविष्काराः सुरापिणः सुरापाणपरिक्षीबं रिपुदर्पहरोदयं परस्त्रीवाहिनं प्रापुः।

व्याख्या - साऽऽविष्काराः = साऽहङ्काराः, सुरापिणः=मद्यपसंसर्गिणः, राक्षसा इति भावः। सुरापाणपरिक्षीबं = मदिरापानमत्तं, रिपुदर्पहरोदयं=शत्रुमानहरवृद्धिं, परस्त्रीवाहिनं=अन्यदारप्रापकं, रावणमिति भावः। प्रापुः= प्राप्तवन्तः।

॥ व्युत्पत्तिः ॥ साऽऽविष्काराः—आविष्कारेण सहिताः, क्वचित् "साविष्कारम्" इति पाठस्तस्य रावणविशेषणत्वेन योजना कार्या। सुरापिणः—सुरां पिबन्तीति सुरापाः, "गापोष्टक्" इति टक्। सुरापाः सन्ति येषां ते, "अत इनिठनौ" इति

इनिः। "एकाऽजुत्तरपदे णः" इति णत्वम्। सुरापाणपरिक्षीबं—सुरायाः पानं सुरापाणं, भावे ल्युट्। "वा भावकरणयोः" इति पक्षे णत्वम्। अक्षीबत इति क्षीबः, "क्षीबृ मदे" इति धातोः "गत्यर्थाऽकर्मके"त्यादिना क्तप्रत्ययः। "अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः" इति निष्ठातकारस्य लोपनिपातः। "मत्ते शौण्डोत्कटक्षीबाः" इत्यमरः। पर्याप्तं क्षीबः परिक्षीबः, सुरापाणेन परिक्षीबः सुरापाणपरिक्षीबस्तम्। रिपुदर्पहरोदयं—रिपुदर्पं हरतीति रिपुदर्पहरः, "हरतेरनुद्यमनेऽच्" इत्यच्प्रत्ययः। रिपुदर्पहर उदयो यस्य तम्। परस्त्रीवाहिनं—परस्त्रियो वहतीति तच्छीलः परस्त्रीवाही, तम्। "प्रातिपदिकाऽन्तनुम्विभक्तिषु च" इति णत्वस्य वैकल्पिकत्वात्पक्षे तदभावः।

※भाषाऽर्थः※ अहङ्कारयुक्त तथा सुरापान करनेवालोंसे सम्पर्क रखनेवाले वे राक्षस, सुरा पीनेसे अतिशय मत्त ( मतवाला ), शत्रुके गर्वको तोड़नेवाली वृद्धिसे युक्त एवम् परस्त्रियोंको प्राप्त करनेवाले रावणके पास पहुंच गये ॥ ९६ ॥

सङ्घर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः ।
प्रहिण्वन्तो हनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥

अन्वयः—द्विषन्मतीः प्रमीणन्तं हनूमन्तं प्रहिण्वन्तः संघर्षयोगिणः त्रिदशद्विषः पादौ प्रणेमुः।

व्याख्या—द्विषन्मतीः = शत्रुबुद्धीः, प्रमीणन्तं = हिंसन्तं, हरन्तमित्यर्थः, हनूमन्तं = वायुपुत्रं, प्रहिण्वन्तः=प्रापयन्तः, राक्षसा इति शेषः, संघर्षयोगिणः=स्पर्द्धायोगिनः, नित्यमत्सरिण इत्यर्थः। त्रिदशद्विषः = देवशत्रोः, रावणस्येत्यर्थः। पादौ= चरणौ, प्रणेमुः = प्रणताः।

※व्युत्पत्तिः※ प्रमीणन्तं = प्रमीणातीति प्रमीणन्, तम्। प्रपूर्वकात् "मीञ् हिंसायाम्" इति धातोर्लटः शत्रादेशः। "हिनुमीना" इति णत्वम्। प्रहिण्वन्तः—प्रहिण्वन्तीति, प्रपूर्वकात् "हि गतौ" इति स्वादिगणस्थाद्धातोर्लटः शत्रादेशः। पूर्वसूत्रेण णत्वम्। सङ्घर्षयोगिणः—सङ्घर्षेण योगः ( सम्बन्धः ) संघर्षयोगः, सोऽस्ति एषां ते, इनिप्रत्ययः। "कुमति च" इति णत्वम्। प्रणेमुः—प्रपूर्वकात् "णम प्रह्वत्वे शब्दे" इति धातोर्लिट्। "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम्।

※भाषाऽर्थः※ शत्रुओंके [illegible]द्धयोंका हरण करनेवाले हनूमान्जीको पहुंचाते हुए राक्षसोंने स्पर्धा करनेवाले देवद्वेषी रावणके चरणोंमें प्रणाम किया ॥ ९७ ॥

प्रवपाणि शिरो भूमौ वानरस्य वनच्छिदः ।
आमन्त्रयत संक्रुद्धः समितिं रक्षसां पतिः ॥ ९८ ॥

अन्वयः—संक्रुद्धो रक्षसां पतिः "वनच्छिदो वानरस्य शिरो भूमौ प्रवपाणि" (इति) समितिम् आमन्त्रयत।

**व्याख्या**—संक्रुद्धः = संकुपितः, रक्षसां = राक्षसानां, पतिः = स्वामी, रावण इत्यर्थः। वनच्छिदः = उद्याननाशकस्य, वानरस्य=कपेः, शिरः = मस्तकं, भूमौ = पृथिव्यां, प्रवपाणि = छित्वा पातयामि, ( इति = एवम् ) समितिं = सभाम्, आमन्त्रयत = अभाषत।

❀व्युत्पत्तिः❀ प्रवपाणि—प्रपूर्वकात् "डुवप् बीजसन्ताने" इति धातोः "लोट् च" इति लोट्। "आनि लोट्" इति नित्यं णत्वम्। समितिं—"समज्या परिषद्गोष्ठी सभासमितिसंसदः" इत्यमरः।

❀भाषाऽर्थः❀ क्रुद्ध होकर राक्षसपति रावणने "अशोकवनिकाको उजाड़नेवाले वानरके शिरको काटकर जमीनपर डालता हूँ" सभाको ऐसा कहा ॥ ९८ ॥

**प्रण्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव।**
**ततः प्रणिहितः स्वाऽर्थे राक्षसेन्द्रं विभीषणः ॥ ९९ ॥**

**अन्वयः**—ततः प्रणिघ्नन्तं राक्षसेन्द्रं स्वाऽर्थे प्रणिहितो विभीषणो घन इव प्रणिनदन् प्रण्यगादीत्।

**व्याख्या**—ततः = आमन्त्रणाऽनन्तरं, प्रणिघ्नन्तं = जिघांसन्तमित्यर्थः। राक्षसेन्द्रं = रावणं, स्वाऽर्थे = आत्मकार्ये, प्रणिहितः = युक्तः, विभीषणः = रावणाऽनुजः, घन इव = मेघ इव, प्रणिनदन् = गर्जन् सन्, प्रण्यगादीत् = प्रणिगदितवान्।

❀व्युत्पत्तिः❀ प्रणिघ्नन्तं—प्रणिहन्तीति प्रणिघ्नन्, तम्। प्रनिपूर्वकात् "हन हिंसागत्योः" इति धातोर्लटः शत्रादेशः। "नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च"ति नेर्णत्वम्। प्रणिहितः=प्रनिपूर्वकात् धाधातोर्निष्ठायां क्तः। "दधातेर्हिः" इति धातोर्हिः। धाधातो"र्घु"संज्ञकत्वात्पूर्वसूत्रेण नेर्णत्वम्। प्रणिनदन्—प्रणिनदतीति, प्रनिपूर्वकात् "णद अव्यक्ते शब्दे" इति धातोर्लटः शत्रादेशः। णत्वं पूर्ववत्। प्रण्यगादीत्—प्रनिपूर्वकात् "गद व्यक्तायां वाचि" इति धातोर्लुङ्। पूर्ववत् णत्वम्।

❀भाषाऽर्थः❀ तदनन्तर मारनेकी इच्छा करनेवाले रावणको अपने कार्यमें नियुक्त विभीषणने मेघके सदृश गर्जते हुए कहा ॥ ९९ ॥

**प्रणिशाम्य दशग्रीव ! प्रणियातुमलं रुषम्।**
**प्रणिजानीहि, हन्यन्ते दूता दोषे न सत्यपि ॥ १०० ॥**

**अन्वयः**—हे दशग्रीव ! प्रणिशाम्य, रुषं प्रणियातुम् अलम्, दोषे सति अपि दूता न हन्यन्ते इति प्रणिजानीहि।

**व्याख्या**—हे दशग्रीव = हे रावण !, प्रणिशाम्य=प्रशान्तो भव। रुषं = क्रोधं, प्रणियातुं=प्राप्तुम्, अलं=न, रोषो न कर्तव्य इति भावः। दोषे=अपराधे, सति अपि=

विद्यमाने अपि, दूताः = सन्देशहराः, न हन्यन्ते = न हिंस्यन्ते, इति = एवं, प्रणिजानीहि = विद्धि ।

॥व्युत्पत्तिः॥—प्रणिशाम्य—प्रनिपूर्वकात् "शमु उपशमे" इति धातोर्लोट्। सिपि हिलोपः। "शमामष्टानां दीर्घः श्यनि" इति दीर्घत्वम्। "नेर्गदे"त्यादिना नेर्णत्वम्। प्रणियातुं—प्रनिपूर्वकात् यातेस्तुमुन्, अत्र अलंयोगे "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वाप्रत्ययविषये तुमुन्प्रयोगो देशविभाषाऽनुसारात्कृतः, कष्ट इति मल्लिनाथः। णत्वं च पूर्वसूत्रेणैव। प्रणिजानीहि—प्रनिपूर्वकात् ज्ञाधातोर्लोट्। "शेषे विभाषाऽकखादावषान्त उपदेशे" इति नेर्णत्वं वा।

॥भाषाऽर्थः॥ "हे रावण! आप शान्त हों, क्रोध नहीं करना चाहिए, अपराध होने पर भी दूत नहीं मारे जाते हैं, इसे आप जानिए" ॥ १०० ॥

प्राणयन्तमरिं प्रोचे राक्षसेन्द्रो विभीषणम्।
'प्राणिणिषुर्न पापोऽयं योऽभाङ्क्षीत् प्रमदावनम्' ॥ १०१ ॥

**अन्वयः**—राक्षसेन्द्रः अरिं प्राणयन्तं विभीषणं प्रोचे—"यः प्रमदावनम् अभाङ्क्षीत्, अयं पापः प्राणिणिषुः न ।

**व्याख्या**—राक्षसेन्द्रः = रावणः, अरिं = शत्रुं, "हरिम्" इति पाठे वानरमित्यर्थः। प्राणयन्तं = जीवयन्तं "दूतो न वध्य" इत्युक्त्वा रक्षन्तमित्यर्थः । विभीषणं = स्वानुजं, प्रोचे = जगाद । यः = अरिः, प्रमदावनम् = अन्तःपुरोचितमुपवनम्, अशोकवनिकामित्यर्थः। अभाङ्क्षीत् = भग्नवान्, अयं = सोऽयं, पापः = क्रूरः, प्राणिणिषुः = जीवितुमिच्छुः, न = नैव, एतादृशोऽपराधी कथं न वध्य इति भावः।

॥व्युत्पत्तिः॥ प्राणयन्तं—प्राणयतीति प्राणयन्, तम्। प्रपूर्वकात् "अन प्राणने" इति धातोर्ण्यन्ताल्लटः शत्रादेशः। "अनितेः" इति णत्वम्। अभाङ्क्षीत्—भञ्जेर्लुङि सिचि "वदव्रजहलन्तस्याऽचः" इति वृद्धिः। प्राणिणिषुः—प्रपूर्वादनितेः सन्नन्तादुप्रत्ययः। "उभौ साऽभ्यासस्य" इति द्वयोर्नकारयोर्णत्वम्।

॥भाषाऽर्थः॥ रावणने शत्रुको जिलाते हुए विभीषणको कहा—"जिसने प्रमदावनको तोड़ डाला, वह पापी जीनेकी इच्छा करनेवाला नहीं है ॥ १०१ ॥

प्राघानिषत रक्षांसि येनाऽऽप्तानि वने मम।
न प्रहण्मः कथं पापं वद पूर्वाऽपकारिणम् ॥ १०२ ॥

**अन्वयः**—येन वने मम आप्तानि रक्षांसि प्राघानिषत, पूर्वाऽपकारिणं पापं (तम्) कथं न प्रहण्मः ? वद।

**व्याख्या**—येन = अरिणा, वने = उपवने, मम = रावणस्य, आप्तानि = हितकारीणि, अक्षादीनीति भावः। रक्षांसि = राक्षसाः, प्राघानिषत = हतानि, पूर्वाऽपका-

रिणं = प्रथमद्रोहिणं, पापं = क्रूरं, ( तम् = अरिम् ) कथं = किमर्थं, न प्रहण्मः=न मारयामः, वद = कथय ।

※व्युत्पत्तिः※ अघानिषत—हन्तेः कर्मणि लुङि "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इति चिण्वदिड्वृद्धी । "हो हन्तेर्ञ्णिन्नेषु" इति कुत्वम् । "हन्तेरत्पूर्वस्य" इत्यस्य प्रत्युदाहरणम् । प्रहण्मः—"वमोर्वा" इति हन्तेर्णत्वविकल्पः ।

※भाषाऽर्थः※ जिसने उपवनमें हमारे हितकारक राक्षसोंको मार डाला, प्रथम द्रोही क्रूर उस शत्रुको हम कैसे न मारें ? बोलो ॥ १०२ ॥

**वेश्माऽन्तर्हणनं कोपान्मम शत्रोः करिष्यतः ।**
**मा कार्षीरन्तरयणं प्रयाणाऽर्हमवेह्यमुम् ॥ १०३ ॥**

**अन्वयः**—कोपात् शत्रोः वेश्माऽन्तर्हणनं करिष्यतो मम अन्तरयणं मा कार्षीः, अमुं प्रयाणार्हम् अवेहि ।

**व्याख्या**—कोपात् = क्रोधात्, शत्रोः = अरेः, वेश्मान्तर्हणनं = सदनाऽभ्यन्तरे हननं, करिष्यतः = विधास्यतः, मम = रावणस्य, अन्तरयणम्=अन्तरायं, मा कार्षीः = नो कुरु, अमुं = कपिं, प्रयाणाऽर्हं = महाप्रस्थानयोग्यम्, अवेहि=जानीहि ।

※व्युत्पत्तिः※ वेश्माऽन्तर्हणनं = वेश्माऽन्तः हननं वेश्माऽन्तर्हणनं, तत् । सुप्सुपासमासः । "अन्तरदेशे" इति नकारस्य णत्वम् । देशे तु अन्तर्हननो देशः । अन्तरयणम्—अन्तः ( मध्ये ) अयनम् अन्तरयणं, सुप्सुपासमासः । "अयनं च" इति णत्वम् । प्रयाणाऽर्हं—प्रकृष्टं यानं प्रयाणं, "कुगतिप्रादय" इति समासः । "कृत्यच" इति णत्वम् । प्रयाणम् अर्हतीति प्रयाणाऽर्हस्तम्, "अर्हः" इति अच्प्रत्ययः ।

※भाषाऽर्थः※ क्रोधसे घरसे भीतर शत्रुकी हत्या करनेवाले मेरा अन्तराय (विघ्न) मत करो, इस बन्दरको मारनेके लिए योग्य जान लो ॥ १०३ ॥

**प्रहीणजीवितं कुर्युर्ये न शत्रुमुपस्थितम् ।**
**न्याय्याया अपि ते लक्ष्म्याः कुर्वन्त्याशु प्रहापणम् ॥ १०४ ॥**

**अन्वयः**—ये उपस्थितं शत्रुं प्रहीणजीवितं न कुर्युः, ते न्याय्याया अपि लक्ष्म्या आशु प्रहापणं कुर्वन्ति ।

**व्याख्या**—ये = जनाः, उपस्थितं = प्राप्तं, शत्रुं = रिपुं, प्रहीणजीवितं=त्यक्तजीवनं, न कुर्युः = न विदधीरन्, ते = जनाः, न्याय्याया अपि = न्यायादनपेताया अपि, कुलक्रमागताया अपीति भावः । लक्ष्म्याः = श्रियः, आशु = शीघ्रं, प्रहापणं = त्याजनं, कुर्वन्ति = विदधति, अतो लक्ष्म्याः स्थिरीकरणाऽर्थमप्युपस्थितशत्रुर्हन्तव्य इति भावः ।

❀व्युत्पत्तिः❀ प्रहीणजीवितं—प्रहीणं जीवितं यस्य तम् । "ओहाक् त्यागे" इति धातोः कर्मणि क्तः । "घुमास्थागापाजहातिसां हलि" इत्याकारस्य ईत्वम् । "ओदितश्च" इति निष्ठानत्वम् । "कृत्यच" इति णत्वम् । न्याय्यायाः—न्यायादनपेता न्याय्या, तस्याः । "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः । प्रहापणं—प्रपूर्वकात् हाधातोर्ण्यन्ताल्ल्युटि पुगागमः । "णेर्विभाषा" इति णत्वम् ।

❀भाषाऽर्थः❀ जो उपस्थित शत्रुको नहीं मारते हैं वे कुलक्रमसे आई हुई लक्ष्मीका भी शीघ्र त्याग कराते हैं ॥ १०४ ॥

कः कृत्वा रावणाऽऽमर्षप्रकोपणमवद्यधीः ।
शक्तो जगति शक्रोऽपि कर्तुमायुःप्रगोपणम् ॥ १०५ ॥

अन्वयः—जगति अवद्यधीः कः शक्रोऽपि रावणाऽमर्षप्रकोपणं कृत्वा आयुःप्रगोपणं कर्तुं शक्तः ?

व्याख्या—जगति = लोके, अवद्यधीः = दुर्बुद्धिः, कः शक्रोऽपि = इन्द्रोऽपि, रावणाऽमर्षप्रकोपणं = रावणकोपाऽतिवृद्धिं, कृत्वा=विधाय, आयुःप्रगोपणं = जीवनसंरक्षणं, कर्तुं=विधातुं, शक्तः = समर्थः, न कोऽपीत्यर्थः ।

❀व्युत्पत्तिः❀ अवद्यधीः—अवद्या धीर्यस्य सः । रावणाऽमर्षप्रकोपणं—रावणाऽमर्षस्य प्रकोपणं, तत्, "कुप क्रोधे" इति दैवादिकाद्धातोर्भावे ल्युट् । "हलश्चेजुपधात्" इति णत्वम् । आयुःप्रगोपणम्—आयुषः प्रगोपणं, तत् । "गुपू रक्षणे" इति धातोर्भावेल्युट् । पूर्ववत् णत्वम् ।

❀भाषार्थः❀ लोकमें दुर्बुद्धि कौन—चाहे इन्द्र भी रावणके क्रोधको बहुत बढ़ाकर आयुका संरक्षण करनेको समर्थ है ? ॥ १०५ ॥

वनाऽन्तप्रेङ्खणः पापः फलानां परिणिंसकः ॥
प्रणिक्षिष्यति नो भूयः प्रणिन्द्याऽस्मान्मधून्ययम् ॥ १०६ ॥

अन्वयः—वनाऽन्तप्रेङ्खणः पापः फलानां परिणिंसकः अयं भूयः अस्मान् प्रणिन्द्य मधूनि नो प्रणिक्षिष्यति ।

व्याख्या—वनाऽन्तप्रेङ्खणः=उपवनप्रान्तचरः, पापः=क्रूरः, फलानाम् = आम्रादीनां, परिणिंसकः = चुम्बकः, भक्षक इत्यर्थः । अयं = वानरः, भूयः=पुनः, अस्मान्= राक्षसान्, प्रणिन्द्य = तिरस्कृत्य, मधूनि = मकरन्दान्, नो प्रणिक्षिष्यति = न चुम्बिष्यति, न भक्षयिष्यतीत्यर्थः । भूय उपवनफलभक्षणनिवारणाऽर्थं सत्वरमयं हनिष्यत इति भावः ।

❀व्युत्पत्तिः❀ वनाऽन्तप्रेङ्खणः—वनाऽन्ते प्रेङ्खतीति, "इखि गतौ" इति धातोः कर्तरि ल्युट् "इजादेः सनुम" इति णत्वम् । फलानां—कर्मणि षष्ठी । परिणिंसकः—

"णिसि चुम्बने" इति आदादिकाद्धातोर्ण्वुल् । "वा निंसनिक्षनिन्दाम्" इति नस्य णत्वविकल्पः । प्रणिन्द्य = प्रपूर्वकात् "णिदि कुत्सायाम्" इति धातोः क्त्वो ल्यबादेशः । पूर्ववत् णत्वविकल्पः । प्रणिंक्ष्यति—प्रपूर्वकात् "णिक्ष चुम्बने" इति धातोर्लृट्, पूर्वसूत्रेणैव णत्वविकल्पः ।

⊛भाषाऽर्थः⊛ उपवनके समीपमें विचरण करनेवाला, क्रूर, फलोंको खानेवाला यह बन्दर फिर हमलोगोंका तिरस्कारकर मधुभक्षण नहीं करेगा ॥ १०६ ॥

**हरेः प्रगमनं नाऽस्ति, न प्रभानं हिमद्रुहः ।**
**नाऽतिप्रवेपनं वायोर्मया गोपायिते वने ॥ १०७ ॥**

**अन्वयः**—मया गोपायिते वने हरेः प्रगमनं न अस्ति, हिमद्रुहः प्रभानं न, वायोः अतिप्रवेपनं न ।

**व्याख्या**—मया = रावणेन, गोपायिते = गुप्ते, रक्षित इत्यर्थः, वने = उपवने, हरेः = इन्द्रस्य चन्द्रस्य वा, प्रगमनं = प्रचारः, न अस्ति = न वर्तते । हिमद्रुहः = सूर्यस्य, प्रभानं = प्रतापनं, न = न वर्तते । वायोः = वातस्य, अतिप्रवेपनम् = अत्यन्तचलनं, न = न वर्तते, कुसुमस्तेयसाध्वसादिति भावः ।

⊛व्युत्पत्तिः⊛ गोपायिते—"गुपू रक्षणे" इति धातोर्निष्ठायां क्तप्रत्ययः, "आयादय आर्द्धधातुके वा" इति विकल्पादायप्रत्ययः । हरेः—"यमाऽनिलेन्द्रचन्द्राऽर्कविष्णुसिंहांऽशुवाजिषु । शुकाऽहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥" इत्यमरः । प्रगमनं = "कृत्यच" इति प्राप्तस्य णत्वस्य "न भाभूपूकमिगमिप्यायीवेपाम्" इति प्रतिषेधः । प्रभानं—"भा दीप्तौ" इति धातोर्भावे ल्युट् । पूर्ववत् णत्वप्राप्तिस्तत्प्रतिषेधश्च । अतिप्रवेपनं—"टुवेपृ कम्पने" इति धातोर्ल्युट् । पूर्ववत् णत्वप्राप्तिप्रतिषेधौ ।

⊛भाषाऽर्थः⊛ मुझसे रक्षित उपवनमें इन्द्र वा चन्द्रका प्रचार नहीं है, सूर्यका प्रतापन नहीं है और न वायुका अत्यन्त चलन ही है ॥ १०७ ॥

**'दुष्पानः पुनरेतेन कपिना भृङ्गसंभृतः ।**
**प्रनष्टविनयेनाऽग्र्यः स्वादुः पुष्पाऽऽसवो वने' ॥ १०८ ॥**

**अन्वयः**—प्रनष्टविनयेन एतेन कपिना वने भृङ्गसंभृतः अग्र्यः स्वादुः पुष्पाऽऽसवः पुनः दुष्पानः" ।

**व्याख्या**—प्रनष्टविनयेन = दुर्विनीतेन, एतेन = समीपतरवर्तिना, कपिना = वानरेण, वने = उपवने, भृङ्गसंभृतः = भ्रमरसञ्चितः, अग्र्यः = श्रेष्ठः, स्वादुः = मधुरः, पुष्पासवः = कुसुमविकारः, मधु इत्यर्थः । पुनः = भूयः, दुष्पानः = दुःखेन पेयः, पातव्यो न भविष्यतीति भावः ।

⊛व्युत्पत्तिः⊛ प्रनष्टविनयेन—प्रनष्टो विनयो यस्य, तेन । "नशेः षाऽन्तस्य" इति

णत्वप्रतिषेधः । पुष्पाऽऽसवः—आसव इव आसवः, मादकत्वात्, लाक्षणिकोऽयं प्रयोगः । पुष्पाणामासवः । दुष्पानः—दुःखेन पीयत इति "आतो युच्" इति खलोऽपवादो युच् । "षात्पदाऽन्तात्" इति णत्वस्य प्रतिषेधः ।

ॐभाषाऽर्थःॐ दुर्विनीत यह बन्दर उपवनमें भृङ्गोंसे सञ्चित, श्रेष्ठ, मधुर मधु फिर नहीं पी सकेगा ॥ १०८ ॥

**रोषभीममुखेनैवं क्षुभ्नतोक्ते प्लवङ्गमः ।**
**प्रोचे साऽऽनुनयं वाक्यं रावणं स्वाऽर्थसिद्धये ॥ १०९ ॥**

**अन्वयः**—रोषभीममुखेन क्षुभ्नता एवम् उक्ते प्लवङ्गमः स्वाऽर्थसिद्धये रावणं साऽनुनयं वाक्यम् ऊचे ।

**व्याख्या**—रोषभीममुखेन = कोपभयङ्कराऽऽननेन, क्षुभ्नता = क्षुभ्यता, रावणेनेति शेषः, एवम्=इत्थम्, उक्ते=कथिते सति, प्लवङ्गमः=हनूमान्, स्वाऽर्थसिद्धये= आत्मप्रयोजनसाफल्यार्थं, सीताप्रत्यर्पणकार्यसिद्धय इति भावः । रावणं=दशाननं, साऽनुनयम्=अनुनययुक्तं, वाक्यं=वक्ष्यमाणप्रकारकं पदसमूहम्, प्रोचे = जगाद ।

ॐव्युत्पत्तिःॐ रोषभीममुखेन—रोषाद्भीममुखेन, अत्र भीमपदेन निमित्तनिमित्तिनोर्व्यवधानात् "पदव्यवायेऽपि" इति विभक्तिनकारस्य णत्वप्रतिषेधः । क्षुभ्नता— "क्षुभ्नादिषु च" इति णत्वप्रतिषेधः ।

ॐभाषाऽर्थःॐ क्रोधसे भयङ्कर मुखवाले क्षुब्ध रावणके ऐसा कहनेपर हनूमान्‌जीने स्वार्थकी सिद्धिके लिए रावणको अनुनययुक्त वाक्य कहा ॥ १०९ ॥

अथ प्रकीर्णकाऽधिकारः ।

**दूतमेकं कपिं बद्धमानीतं वेश्म पश्यतः ।**
**लोकत्रयपतेः क्रोधः कथं तृणलघुस्तव ॥ ११० ॥**

**अन्वयः**—दूतम् एकं बद्धं वेश्म आनीतं कपिं पश्यतः लोकत्रयपतेः तव क्रोधः कथं तृणलघुः ?

**व्याख्या**—दूतं = सन्देशहरं, तत्राऽपि—एकम् = एकाकिनम्, असहायमिति भावः । तदुपरि—बद्धं=नद्धम्, अस्वतन्त्रीकृतं, तत्राऽपि न दूरनिहितमपितु—वेश्म= गृहम्, आनीतं = प्रापितं, तत्राऽपि न देवं नाऽसुरं नैव मनुष्यमपि तु—कपिं = वानरं, पश्यतः = विलोकयतः, लोकत्रयपतेः = भुवनत्रितयाऽधीश्वरस्य, तव=भवतः, क्रोधः = कोपः, कथं = केन प्रकारेण, तृणलघुः = तृणवत् तुच्छः, परमाणुपर्वतयोरिवाऽऽवयोर्महान्तरत्वात्तुच्छे मयि लोकाऽधीश्वरस्य तव कोपप्रवृत्तिरस्थानस्थेति भावः ।

ॐव्युत्पत्तिःॐ वेश्म—"वेश्म सद्म निकेतनम्" इत्यमरः । तृणलघुः—तृणमिव लघुः, "उपमानानि सामान्यवचनैः" इति समासः ।

※भाषाऽर्थः※ एक तो दूत, उसपर अकेले, उसपर भी बांधे गये, उसके ऊपर घरमें लाये गये ऐसे बानर ( मुझ ) को देखते हुए तीन लोकोंके स्वामी आपका क्रोध किस प्रकारसे तृणके सदृश तुच्छ है ? ॥ ११० ॥

अग्न्याहितजनप्रह्वे विजिगीषापराङ्मुखे ।
कस्माद्वा नीतिनिष्णस्य संरम्भस्तव तापसे ॥ १११ ॥

अन्वयः—अग्न्याहितजनप्रह्वे विजिगीषापराङ्मुखे तापसे नीतिनिष्णस्य तव कस्मात् वा संरम्भः ?

व्याख्या—अग्न्याहितजनप्रह्वे = अग्निहोत्रिजननम्रे, विजिगीषापराङ्मुखे = विजयेच्छाविरक्ते, तापसे = तपस्विनि, राम इति भावः । नीतिनिष्णस्य = नयकुशलस्य, तव = भवतः, कस्मात् = हेतोः, वा, संरम्भः = कोपः । अनपराधे रामे त्वदीयो विरोधोऽनुचित इति भावः ।

※व्युत्पत्तिः※ अग्न्याहितजनप्रह्वे—अग्नय आहिता यैस्ते अग्न्याहिताः, "वाऽऽहिताग्न्यादिषु" इति निष्ठाया विकल्पेन परनिपातः । अग्न्याहिताश्च ते जनाः, तेषु प्रह्वे । तापसे—तपोऽस्याऽस्तीति तापसस्तस्मिन्, "अण् च" इत्यण् । नीतिनिष्णस्य—नितरां स्नातीति निष्णः, कुशल इत्यर्थः । "आतश्चोपसर्गे" इति कर्तरि कः । "निनदीभ्यां स्नातेः कौशले" इति षत्वम् । नीतौ निष्णस्य ।

※भाषाऽर्थः※ अग्निहोत्री जनोंमें नम्र, विजयकी इच्छामें विरक्त, तपस्वी राममें किस कारणसे तुम्हारा कोप है ? ॥ १११ ॥

न सर्वरात्रकल्याण्यः स्त्रियो वा रत्नभूमयः ।
यं विनिर्जित्य लभ्यन्ते कः कुर्यात्तेन विग्रहम् ॥ ११२ ॥

अन्वयः—यं विनिर्जित्य सर्वरात्रकल्याण्यः स्त्रियो रत्नभूमयो वा न लभ्यन्ते, तेन विग्रहं कः कुर्यात् ?

व्याख्या—यं = तापसं, राममित्यर्थः । विनिर्जित्य = जित्वा, सर्वरात्रकल्याण्यः = नित्यमङ्गलाः, स्त्रियः = ललनाः, रत्नभूमयो वा = मणयो भुवश्च वा, न लभ्यन्ते = न प्राप्यन्ते, तेन = तादृशेन तापसेन सह, विग्रहं = संग्रामं, कः = जनः, कुर्यात् = विदधीत, न कोऽपि, निष्फलत्वादिति भावः ।

※व्युत्पत्तिः※ सर्वरात्रकल्याण्यः—सर्वाश्च ता रात्रयः सर्वरात्राः "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाऽऽधिकरणेन" इति समासः । "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इति समासान्तोऽच्प्रत्ययः । "रात्राह्नाहाः पुंसि" इति पुंलिङ्गता । सर्वरात्रान् कल्याण्यः सर्वरात्रकल्याण्यः, "कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया, "अत्यन्तसंयोगे च" इति समासः । रत्नभूमयः—रत्नानि च भूमयश्च ।

ॐभाषाऽर्थःॐ जिस तपस्वीको जीतकर सब रात्रियोंमें मङ्गलरूप स्त्रियाँ अथवा रत्न और भूमि नहीं पाये जावेंगे, उससे कौन विग्रह करेगा ? ॥ ११२ ॥

संगच्छ रामसुग्रीवौ भुवनस्य समृद्धये ।
रत्नपूर्णाविवाऽम्भोधी हिमवान् पूर्वपश्चिमौ ॥ ११३ ॥

अन्वयः—भुवनस्य समृद्धये रामसुग्रीवौ रत्नपूर्णौ पूर्वपश्चिमौ अम्भोधी हिमवान् इव संगच्छ ।

व्याख्या—सन्धिस्तु सफल इति प्रतिपादयति—समिति । भुवनस्य = लोकस्य, समृद्धये=अभ्युदयाय, रामसुग्रीवौ = राघवबाल्यनुजौ, रत्नपूर्णौ = मणिपूरितौ, पूर्वपश्चिमौ अम्भोधी = समुद्रौ, हिमवान इव = हिमालय इव, संगच्छ = सन्धेहि ।

ॐव्युत्पत्तिःॐ अम्भोधी—अम्भांसि धीयन्ते अनयोः अम्भोधी, तौ । "कर्मण्यधिकरणे च" इति किप्रत्ययः । संगच्छ—सकर्मकत्वात् "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदं न ।

ॐभाषाऽर्थःॐ लोकके अभ्युदयके लिए राम और सुग्रीवसे, रत्नोंसे पूर्ण पूर्व और पश्चिम समुद्रसे हिमालयके सदृश संगत होवो ॥ ११३ ॥

सुहृदौ रामसुग्रीवौ किंकराः कपियूथपाः ।
परदाराऽर्पणेनैव लभ्यन्ते मुञ्च मैथिलीम् ॥ ११४ ॥

अन्वयः—रामसुग्रीवौ सुहृदौ कपियूथपाः किङ्कराः परदाराऽर्पणेन एव लभ्यन्ते, मैथिलीं मुञ्च ।

व्याख्या—येन समं विग्रहो निष्फलस्तेन सन्धिरपि तथैव स्यादिति चेत्तत्राऽऽह—स्विति । रामसुग्रीवौ=राघवबाल्यनुजौ, सुहृदौ=मित्रे, कपियूथपाः=वानरसेनापतयः, नीलप्रभृतय इत्यर्थः । किङ्कराः = भृत्याः, एते सर्वेऽपि परदाराऽर्पणेन एव = परस्त्रीसमर्पणेन एव, लभ्यन्ते = प्राप्यन्ते, न तु स्वाऽर्थव्ययेनेति भावः । अतः—मैथिलीं= सीतां, मुञ्च=त्यज । हिरण्यादिलाभादपि मित्रलाभस्य वरतरत्वम्, यथाऽऽह भगवान् योगीश्वरो याज्ञवल्क्यः—

"हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहितः ॥" इति

( आचाराऽध्याये राजधर्मप्रकरणम् ३५२ श्लोकः )

ॐव्युत्पत्तिःॐ सुहृदौ–शोभनं हृदयं ययोस्तौ, "सुहृद्दुर्हृदौ मित्राऽमित्रयोः" इति हृदयस्य हृद्भावन्निपातः । किङ्कराः—किं कुर्वन्तीति, "दिवाविभे"त्यादिना टः ।

ॐभाषाऽर्थःॐ राम और सुग्रीव मित्र, वानरसेनापति नील आदि भृत्य, ये सब परस्त्रीको लौटा देनेसे ही मिल रहे हैं, इस लिए सीताजीको छोड़ो ॥ ११४ ॥

**धर्मं प्रत्यर्पयन् सीतामर्थं रामेण मित्रताम् ।**
**कामं विश्वासवासेन सीतां दत्त्वाऽऽप्नुहि त्रयम् ॥ ११५ ॥**

**अन्वयः**—सीतां प्रत्यर्पयन् धर्मं, रामेण मित्रताम् अर्थं, विश्वासवासेन कामं, सीतां दत्त्वा त्रयम् आप्नुहि ।

**व्याख्या**—सीतासमर्पणेन त्रिवर्गप्राप्तिं सूचयति—धर्ममिति । सीतां=मैथिलीं, प्रत्यर्पयन् = समर्पयन्, धर्मं = सुकृतं, परदारवर्जनादिति भावः । रामेण = दाशरथिना सह, मित्रतां = सख्यं, तदेव अर्थं=पुरुषाऽर्थद्वितीयं, सर्वलाभेभ्यो मित्रलब्धेरुत्कृष्टत्वादिति भावः । विश्वासवासेन=विश्रम्भपूर्वकाऽवस्थानेन, सीताया लङ्कास्थितौ तु सन्ततं रामाक्रमणाशङ्कया विश्वासवासाऽभावात्कामाऽभाव इति भावः । कामं = रतिं सुखं च, सीतां = मैथिलीं, दत्त्वा = समर्प्य, रामायेति शेषः । त्रयं = त्रितयं, पुरुषाऽर्थत्रिवर्गम्, आप्नुहि = लभस्व ।

ॐव्युत्पत्तिःॐ त्रयं—त्रयोऽवयवा यस्येति त्रयं, तत् । "संख्याया अवयवे तयप्" इति तयप्, तस्य "द्वित्रिभ्यां तयस्याऽयज्वा" इति अयजादेशः ।

ॐभाषाऽर्थःॐ हे रावण ! सीताजीको लौटाते हुए धर्मको, रामसे मित्रतारूप अर्थको, विश्वासपूर्वक स्थितिसे कामको, इस तरह सीताजीको देकर पुरुषार्थके त्रिवर्गको प्राप्त करो ॥ ११५ ॥

**विराधताडकावालिकबन्धखरदूषणैः ।**
**न च न ज्ञापितो यादृङ् मारीचेनाऽपि ते रिपुः ॥ ११६ ॥**

**अन्वयः**—विराधताडकावालिकबन्धखरदूषणैः मारीचेन अपि रिपुः यादृक्, ( तादृक् ) ते न ज्ञापितः ( इति ) न ।

**व्याख्या**—सीताया अप्रदाने रामः किं कर्तुं समर्थ इत्याह—विराधेति । विराधताडकावालिकबन्धखरदूषणैः=रामहतैरेभिः, पुनः—मारीचेन अपि = ताडकासुतेन अपि, रिपुः=शत्रुः, राम इति भावः, यादृक् = यादृशोऽस्ति ( तादृक् = तादृशः ) ते= तव, न च ज्ञापित इति न = न बोधित इत्येवं न वर्तते, किंतु बोधित एवेत्यर्थः । सीताया अप्रदाने विराधादिगतिं प्राप्स्यसीति भावः ।

ॐव्युत्पत्तिःॐ यादृक्—य इवाऽयं पश्यतीति, यच्छब्दात् "त्यदादिषु दृशोऽनालोचने कञ्च" इति क्विन्, सर्वाऽपहारी लोपः । "आ सर्वनाम्नः" इति सर्वनाम्न आकारोऽन्तादेशः ।

ॐभाषाऽर्थःॐ हे रावण ! विराध, ताडका, वाली, कबन्ध, खर और दूषणने एवम् मारीचने भी शत्रु जैसा है वैसा तुम्हें ज्ञापित नहीं किया, यह बात नहीं ( किन्तु ज्ञापित ही किया है ) ॥ ११६ ॥

**'खराऽऽदिनिधनं चाऽपि मा मंस्था वैरकारणम् ।**
**आत्मानं रक्षितुं यस्मात्कृतं तन्न जिगीषया' ॥ ११७ ॥**

**अन्वयः**—खराऽऽदिनिधनं चाऽपि वैरकारणं मा मंस्थाः, यस्मात् तत् आत्मानं रक्षितुं कृतं, जिगीषया न" ।

**व्याख्या**—अकारणं मद्वान्धववधातिना रामेण कथं मैत्रीति चेत्तत्राह—खरेति । खरादिनिधनं चाऽपि = खरप्रभृतिवधं चाऽपि, वैरकारणं = विरोधहेतुं, मा मंस्थाः = नो मन्यस्व, यस्मात् = कारणात्, तत् = खराऽऽदिनिधनम्, आत्मानं = स्वं, रक्षितुं = गोप्तुं, कृतं = विहितं, रामेणेति शेषः । "सर्वत आत्मानं गोपायीत" इति श्रुतिमनुसृत्य हन्तुकामानामेव खरादीनां निधनं स्वरक्षणाऽर्थं रामेण कृतमिति भावः । जिगीषया = जेतुमिच्छया, न = तन्निधनं न कृतम् ।

ॐव्युत्पत्तिःॐ मा मंस्थाः—मन्यतेः "माङि लुङ्" इति लुङि थासि "न माङ्योगे" इत्यडागमाऽभावः ।

ॐभाषाऽर्थःॐ हे रावण ! रामसे किये गये खर आदिके वधको भी विरोधका कारण मत मानो, क्योंकि रामने अपनी रक्षाके लिए उनका वध किया है, जयके अभिलाषसे नहीं" ॥ ११७ ॥

**ततः क्रोधाऽनिलाऽऽपातकम्प्राऽऽस्याऽम्भोजसंहतिः ।**
**महाह्रद इव क्षुभ्यन् कपिमाह स्म रावणः ॥ ११८ ॥**

**अन्वयः**—ततो रावणः क्रोधाऽनिलाऽऽपातकम्प्राऽऽस्याऽम्भोजसंहतिः महाह्रद इव क्षुभ्यन् कपिम् आह स्म ।

**व्याख्या**—ततः = हनूमद्वाक्याऽवसानाऽनन्तरं, रावणः = दशाननः, क्रोधाऽनिलाऽऽपातकम्प्राऽऽस्याऽम्भोजसंहतिः = कोपवायुघातकम्पनशीलमुखकमलसमूहः, महाह्रद इव = अगाधजलो जलाशय इव, क्षुभ्यन् = संचलन्, कपिं = हनूमन्तम्, आह स्म = अब्रवीत् । अत्र श्लेषसङ्कीर्ण उपमाऽलङ्कारः ।

ॐव्युत्पत्तिःॐ क्रोधाऽनिलाऽऽपातकम्प्राऽऽस्याऽम्भोजसंहतिः—क्रोधोऽनिल इव तस्याऽऽपातेन कम्प्रा अस्याम्भोजसंहतिर्यस्य, सः । क्षुभ्यन्—क्षुभ्यतीति, "क्षुभ संचलने" इति दैवादिकाद्धातोर्लटः शत्रादेशः ।

ॐभाषाऽर्थःॐ जैसे वायुके आघातसे कम्पनशील कमलोंसे युक्त महाह्रद क्षुब्ध होता है, उसी तरह क्रोधके आघातसे कम्पनशील मुखोंसे युक्त रावण क्षुब्ध होता हुआ हनूमान्‌जीसे बोला ॥ ११८ ॥

**'हतराक्षसयोधस्य विरुग्णोद्यानशाखिनः ।**
**दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं तव ?' ॥ ११९ ॥**

**अन्वयः**—"हतराक्षसयोधस्य विरुग्णोद्यानशाखिनः "दूतः अस्मि" इति ब्रुवाणस्य तव दूतसदृशं किम् ? ।

**व्याख्या**—"दूतमेकमि"त्यस्योत्तरमाह—हतेति । हतराक्षसयोधस्य=निषूदितरक्षोभटस्य विरुग्णोद्यानशाखिनः = भग्नाक्रीडवृक्षस्य, "दूतोऽस्मि" = "सन्देशहरोऽस्मि", इति = इत्थं, ब्रुवाणस्य = कथयतः, तव = कपेः, दूतसदृशं = दूताऽनुरूपं, कर्मेति शेषः । किं = वर्तते किं ?, नेति भावः, दूता हि केवलं सन्देशहराः, न तु पराऽहिताऽऽचरणशीला इति भावः ।

**॥व्युत्पत्तिः॥** हतराक्षसयोधस्य—हता राक्षसयोधा येन, तस्य । विरुग्णोद्यानशाखिनः—विपूर्वकात् "रुजो भङ्गे" इति धातोर्निष्ठायां क्तप्रत्यये "ओदितश्चे"ति निष्ठानत्वे च विरुग्णपदसिद्धिः । विरुग्णा उद्यानशाखिनो येन तस्य । "पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ।" इत्यमरः ।

**॥भाषाऽर्थः॥** राक्षसयोद्धाओंको मारनेवाले और उद्यानके वृक्षोंको तोड़नेवाले तथा "मैं दूत हूँ" ऐसा कहनेवाले तेरा दूतके समान यह कार्य है क्या ? ॥ ११९ ॥

**पङ्गुबालस्त्रियो निघ्नन् कबन्धखरताडकाः ।**
**तपस्वी यदि काकुत्स्थः कीदृक् कथय पातकी ? ॥ १२० ॥**

**अन्वयः**—पङ्गुबालस्त्रियः कबन्धखरताडकाः निघ्नन् काकुत्स्थः तपस्वी यदि, पातकी कीदृक् ? ( इति ) कथय ।

**व्याख्या**—"संरम्भस्तव तापस" इत्यस्योत्तरमाह—पङ्ग्विति । पङ्गुबालस्त्रियः= अङ्गविकलाऽर्भकयोषितः, यथाक्रमं—कबन्धखरताडकाः=तदाख्याः, निघ्नन्=व्यापादयन्, काकुत्स्थः = रामः, तपस्वी यदि = तापसश्चेत्, पातकी = पातकभाक्, कीदृक्= कीदृशः, ( इति एतत् ) कथय=ब्रूहि । स्त्रीबालादिहन्ता रामः कथं नाम तापसो भवितुमर्हतीति भावः ।

**॥व्युत्पत्तिः॥** तपस्वी—तपोऽस्याऽस्तीति, "तपः सहस्राभ्यां विनीनी" इति विनिप्रत्ययः । कीदृक्—क इवाऽयं पश्यतीति, "त्यदादिषु दृशोऽनालोचने कञ्च" इति क्विन् । सर्वाऽपहारी लोपः । "इदंकिमोरीश् की" इति किमः की । अत्र यथासंख्याऽलङ्कारस्तल्लक्षणं यथा—"यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ।" इति ।

**॥भाषाऽर्थः॥** अङ्गविकल कबन्ध, बालक खर और स्त्री ताड़काको मारनेवाला राम तपस्वी है तो पातकी कैसा होता है ? ( यह ) बतलाओ ॥ १२० ॥

**अभिमानफलं जानान्महत्त्वं कथमुक्तवान् ।**
**रत्नादिलाभशून्यत्वान्निष्फलं रामविग्रहम् ॥ १२१ ॥**

**अन्वयः**—महत्त्वम् अभिमानफलं जानन् रामविग्रहं रत्नाऽऽदिलाभशून्यत्वात् निष्फलं कथम् उक्तवान् ?

**व्याख्या**—"न सर्वरात्रकल्याण्य" इत्याद्युक्त्या रामविग्रहे यः फलाऽभावः प्रतिपादितस्तस्योत्तरमाह—अभिमानेति । महत्त्वं = महावीरत्वम्, अभिमानफलम् = अहङ्कारैकफलं, जानन् = अवगच्छन्, त्वमिति शेषः । रामविग्रहं = काकुत्स्थविरोधं, रत्नादिलाभशून्यत्वात् = मण्यादिप्राप्तिरहितत्वात्, निष्फलं = व्यर्थं, कथं = केन प्रकारेण, उक्तवान् = अभिहितवान्, जयाऽभिलाषिणो मानैकधना भवन्ति, न धनान्तरगृध्नव इति भावः ।

॥व्युत्पत्तिः॥ अभिमानफलम्—अभिमानः फलं यस्य तत् अभिमानफलं, तत् ।

॥भाषाऽर्थः॥ वीरताका फल अभिमान है ऐसा जानते हुए तूंने रामके साथ युद्धको रत्नादिकोंके लाभसे शून्य होनेसे निष्फल कैसे कहा ? ॥ १२१ ॥

परस्त्रीभोगहरणं धर्म एव नराऽशिनाम् ।
मुखमस्तीत्यभाषिष्ठाः का मे साऽऽशङ्कता त्वयि ? ॥ १२२ ॥

**अन्वयः**—परस्त्रीभोगहरणं नराशिनां धर्म एव, मुखम् अस्ति इति अभाषिष्ठाः, त्वयि का मे साऽऽशङ्कता ? ।

**व्याख्या**—"धर्मं प्रत्यर्पयन् सीताम्" इत्येतस्याऽप्ययुक्तत्वं साधयति—परेति । परस्त्रीभोगहरणं = परदारविहारलुण्ठनं, नराशिनां = राक्षसानां, धर्म एव = आचार एव । एवं स्थिते "सीतां प्रत्यर्पयन्धर्ममाप्नुही"त्येतद्यदुक्तं तत्—मुखं = वदनम्, अस्ति = वर्तते, इति = अस्माद्धेतोः, अभाषिष्ठाः, त्वयि = त्वद्विषये, उपचारेण रामविषय इति भावः । का मे साऽऽशङ्कता = का मदीया आशङ्का, त्रैलोक्यविजयित्वादिति भावः । मल्लिनाथमते तु "रामे साऽऽशङ्कतां मयि" इति पाठः । तत्र मयि, रामे = रामविषये, साशङ्कताम् = आशङ्कां, मुखमस्तीति अभाषिष्ठा इत्यर्थयोजना कार्या ।

॥व्युत्पत्तिः॥ अभाषिष्ठाः—"भाष व्यक्तायां वाचि" इति धातोर्लुङ् ।

॥भाषाऽर्थः॥ परस्त्रियोंसे भोग और उनका हरण राक्षसोंका धर्म ही है, इस कारणसे "सीताको लौटाकर धर्म पाओ" यह तुमने मुख है इसलिए कहा, तुम्हारे विषयमें मेरी क्या आशङ्का है ? ॥ १२२ ॥

ब्रूहि दूरविभिन्नानामृद्धिशीलक्रियाऽन्वयैः ।
हनूमन् ! कीदृशं सख्यं ? नरवानररक्षसाम् ॥ १२३ ॥

**अन्वयः**—हे हनूमन् ! ऋद्धिशीलक्रियाऽन्वयैः दूरविभिन्नानां नरवानररक्षसां सख्यं कीदृशं ? ब्रूहि ।

व्याख्या—"संगच्छ रामसुग्रीवौ" इत्यस्योत्तरमाह—ब्रूहीति । हे हनूमन् = हे कपे ! ऋद्धिशीलक्रियाऽन्वयैः = ऐश्वर्यस्वभावाऽऽचारवंशैः, दूरविभिन्नानाम् = अत्यन्तविसदृशानां, नरवानररक्षसां = मानवमर्कटराक्षसानां, सख्यं = मैत्री, कीदृशं = कीदृक्, स्यादिति शेषः । ब्रूहि = कथय, प्रत्युत एतेषां संघर्ष एव वर्धेत इति भावः ।

॥व्युत्पत्तिः॥ सख्यं—सख्युर्भावः, "सख्युर्यः" इति यः । कीदृशं—"त्यदादिषु दृशोऽनालोचने कञ्च" इति कञ् । "इदंकिमोरीश् की" इति किमः कीभावः ।

॥भाषाऽर्थः॥ हे हनूमन् ! ऐश्वर्य, स्वभाव, आचार और वंशसे अतिशय विलक्षण ( भिन्न लक्षणवाले ) मनुष्य, बानर और राक्षसोंकी कैसी मित्रता होगी ? बोलो ।

एको द्वाभ्यां विराधस्तु जिताभ्यामविवक्षितः ।
हतश्छलेन मूढोऽयं तेनाऽपि तव कः स्मयः ? ॥ १२४ ॥

अन्वयः—विराधः अविवक्षितः मूढः जिताभ्याम् एकः छलेन हतः तेन अपि तव कः स्मयः ?

व्याख्या—"विराधादिभिर्ज्ञापितोऽसि यादृगरिः" इत्यस्योत्तरमाह—एक इति । विराधः = राक्षसः, अविवक्षितः = अप्रसिद्धः, मूढः = मूर्खः, जिताभ्यां = प्राग्विजिताभ्यां, द्वाभ्यां रामलक्ष्मणाभ्याम्, एकः = असहायः, तत्राऽपि छलेन = कपटेन, हतः = मारितः, तेन अपि = तादृशेन वधेन अपि, तव = हनूमतः, कः स्मयः = को विस्मयः, अहो ते मोह इति भावः ।

॥व्युत्पत्तिः॥ एकः—"एकाकी त्वेक एकक" इत्यमरः ।

॥भाषाऽर्थः॥ विराध अप्रसिद्ध और मूर्ख, जीते गये राम और लक्ष्मण इन दो जनोंसे अकेला जो छलसे मारा गया, ऐसे वधसे भी तुम्हें क्यों विस्मय होता है ? ॥

मन्नियोगाच्च मारीचः पलायनपरायणः ।
युयुत्सारहितो रामं ममाराऽपहरन् वने ॥ १२५ ॥

अन्वयः—मन्नियोगात् पलायनपरायणो युयुत्सारहितो वने रामम् अपहरन् मारीचो ममार ।

व्याख्या—"मारीचेन च ज्ञापित" इत्यस्योत्तरमाह—मन्नियोगादिति । मन्नियोगात् = मदादेशात्, पलायनपरायणः = अपसर्पणतत्परः, रामकर्षणसिद्ध्यर्थमिति भावः । अत एव युयुत्सारहितः = युद्धेच्छाशून्यः, वने = अरण्ये, रामं = दाशरथिम्, अपहरन् = दूरमाकर्षन्, मारीचः = ताडकासुतः, ममार = मृतः । रामेण मारीचो युद्धे न हतः, "न भीतं न परावृत्तम्" इति स्मृत्यनुशासनमुल्लङ्घ्य परावृत्तं मारीचं हतवतो रामस्य कोऽयमुत्कर्ष इति भावः ।

❀व्युत्पत्तिः❀ मन्नियोगात्—मम नियोगस्तस्मात्, "प्रत्ययोत्तरपदयोश्च" इत्यस्मद् उत्तरपदे मदादेशः ।

❀भाषाऽर्थः❀ मेरी आज्ञासे भागनेमें तत्पर, युद्धकी इच्छासे रहित और वनमें रामको दूर ले जाता हुआ मारीच मर गया (इसमें रामका क्या उत्कर्ष है ?) ॥१२५॥

**निजघानाऽन्यसंसक्तं सत्यं रामो लतामृगम् ।**
**त्वमेव ब्रूहि संचिन्त्य युक्तं तन्महतां यदि ॥ १२६ ॥**

**अन्वयः**—रामः अन्यसंसक्तं लतामृगं निजघान, सत्यम् । तत् महतां युक्तं यदि, त्वमेव सञ्चिन्त्य ब्रूहि ।

**व्याख्या**—रामकर्तृको बालिवधः सुतरामनुचित इत्याह—निजघानेति । रामः= दाशरथिः, अन्यसंसक्तम् = अपरसंसृष्टं, सुग्रीवेण युध्यमानमिति भावः । लतामृगं = वानरं, बालिनमित्यर्थः । निजघान = हतवान्, तत् = अन्यसंसक्तहननं, महतां = वीराणां, युक्तं यदि = उचितं चेत्, त्वमेव, सञ्चिन्त्य = सम्यग्विमृश्य, ब्रूहि = कथय । "न परेण समासक्तम्" इति निषेधकवचनमतिक्रामतो रामस्य एष व्यापारः साऽतिशयमनुचित इति भावः ।

❀व्युत्पत्तिः❀ लतामृगं—लताचारी मृगो लतामृगस्तं, मध्यमपदलोपी समासः ।

❀भाषाऽर्थः❀ रामने सुग्रीवसे लड़ते हुए बाली को मारा, यह सत्य है । परन्तु यह कार्य वीरोंके योग्य हो तो, तुम ही अच्छी तरह विचारकर कहो ॥ १२६ ॥

**'पुंसा भक्ष्येण बन्धूनामात्मानं रक्षितुं वधः ।**
**क्षमिष्यते दशाऽऽस्येन क्त्वेयं तव दुर्मतिः' ॥ १२७ ॥**

**अन्वयः**—भक्ष्येण पुंसा आत्मानं रक्षितुं बन्धूनां वधो दशाऽऽस्येन क्षमिष्यते इयं तव दुर्मतिः क्त्या ?"

**व्याख्या**—"खराऽऽदिनिधनं चाऽपि मा मंस्था वैरकारणम्" इत्यस्योत्तरमाह—पुंसेति । भक्ष्येण = भक्षणीयेन, अस्माकमिति शेषः । पुंसा = पुरुषेण, रामेणेत्यर्थः । आत्मानं = स्वं, रक्षितुं = त्रातुं, कृत इति शेषः । बन्धूनां = खरप्रभृतीनां बान्धवानां, वधः=मारणं, दशाऽऽस्येन=रावणेन, मयेत्यर्थः । क्षमिष्यते=सहिष्यते, इति = एतादृशी, तव=हनूमतः, दुर्मतिः=दुर्बुद्धिः, क्त्या=कुत्रत्या, वृथा दुराशा न कार्येति भावः ।

❀व्युत्पत्तिः❀ बन्धूनाम्—"उभयप्राप्तौ कर्मणि" इति कर्मणि षष्ठी । क्त्या = क्व भवा, "अव्ययात्त्यप्" इति "अमेहक्वतसित्रेभ्य एव" इति नियमात्त्यप् ।

❀भाषाऽर्थः❀ हमलोगोंसे भक्षणीय पुरुष ( राम ) से अपनी रक्षाके लिए किये गये खर आदि बान्धवोंके वधको रावण सहेगा यह तेरी दुर्बुद्धि कहां उत्पन्न हुई ?" ॥

कपिर्जगाद 'दूतोऽहमुपायं तव दर्शने ।
द्रुमराक्षसविध्वंसमकार्षं बुद्धिपूर्वकम् ॥ १२८ ॥

**अन्वयः**—कपिः जगाद—"अहं दूतः, द्रुमराक्षसविध्वंसं बुद्धिपूर्वकं तव दर्शने उपायम् अकार्षम् ।

**व्याख्या**—अथ हनूमान् रावणस्य "किं दूतसदृशं तवे"त्यादिवाक्यस्योत्तरमाह— कपिरिति । कपिः=हनूमान्, जगाद = अकथयत । अहं=हनूमान्, दूतः= सन्देहहर एव, किन्तु—द्रुमराक्षसविध्वंसं=वृक्षरक्षोनाशं, बुद्धिपूर्वकं=मतिपूर्वकमेव,— तव=राक्षसराजस्य, दर्शने=साक्षात्कारे, उपायं = साधनम् , अकार्षं = कृतवानस्मि, अन्यथा "दूतोऽयमागत" इति मदाऽवलिप्तः को मां गणयेदिति भावः ।

※व्युत्पत्तिः※ अकार्षम्—"डुकृञ् करणे" इति धातोर्लुङ् ।

※भाषाऽर्थः※ हनूमान्जीने कहा—"मैं दूत ही हूँ, किन्तु वृक्ष और राक्षसोंके विध्वंसको जानबुझकर ही तुम्हारे दर्शनमें उपाय समझकर मैंने किया है ( नहीं तो मुझे कौन दूत समझता ? ) ॥ १२८ ॥

आत्रिकूटमकार्षुर्ये त्वत्का निर्जङ्गमं जगत् ।
दशग्रीव ! कथं ब्रूषे तानवध्यान् महीपतेः ॥ १२९ ॥

**अन्वयः**—हे दशग्रीव ! त्वत्का ये आत्रिकूटं जगत् निर्जङ्गमम् अकार्षुः, तान् महीपतेः अवध्यान् कथं ब्रूषे ? ।

**व्याख्या**—"पङ्गुबालस्त्रियो निघ्नन्" इत्यादिना प्रतिपादितं कबन्धादीनामवध्यत्वं निरस्यति—आत्रिकूटमिति । हे दशग्रीव = हे रावण ! "दशमूर्द्धन्" इति पाठेऽपि स एवाऽर्थः । त्वत्काः = त्वत्प्रधानाः, त्वदीया इति भावः । ये=कबन्धादयः, आत्रिकूटम्=त्रिकूटपर्वतमभिव्याप्य, जगत् = लोकं, निर्जङ्गमं = चरिष्णुजन्तुरहितम्, अकार्षुः=कृतवन्तः, तान् = त्वदीयान्, विराधादीन् पापिष्ठानित्यर्थः । महीपतेः= भूपतेः, शिष्टाऽनुग्रहदुष्टनिग्रहाऽधिकृतस्य रामस्येति भावः, अवध्यान्=वधाऽनर्हान्, कथं = केन प्रकारेण, ब्रूषे = कथयसि ।

※व्युत्पत्तिः※ त्वत्काः—त्वं ग्रामणीरेषां ते, "स एषां ग्रामणीः" इति कन्प्रत्ययः । आत्रिकूटम्—"आङ् मर्यादाऽभिविध्योः" इति अभिविधावव्ययीभावः । महीपतेः— "कृत्यानां कर्तरि वा" इति विकल्पेन षष्ठी ।

※भाषाऽर्थः※ हे रावण ! तुम्हारे जो कबन्ध आदि भृत्योंने त्रिकूट पर्वत तक जगत्को जङ्गम प्राणियोंसे रहित कर डाला है, उनको पृथ्वीपति रामका अवध्य कैसे कहते हो ?

अभिमानफलं प्रोक्तं त्वया रामविग्रहे ।
विनेशुस्तेन शतशः कुलान्यसुररक्षसाम् ॥ १३० ॥

अन्वयः—त्वया रामविग्रहे यत् अभिमानफलं प्रोक्तं, तेन असुररक्षसां कुलानि शतशो विनेशुः ।

व्याख्या—"अभिमानफलं जानन" इत्यादेरुत्तरं प्रतिपादयति—अभिमानेति । त्वया=रावणेन, रामविग्रहे = रामविरोधे, यत्, अभिमानफलम्=अभिमानफलं महत्त्वम्, प्रोक्तं=कथितं, तेन=कारणेन, असुररक्षसां=दैत्यराक्षसानां, कुलानि=वंशाः, शतशः = बहुशः, विनेशुः = विनष्टानि, त्वं तु दर्पान्न पश्यसीति भावः ।

✽व्युत्पत्तिः✽ शतशः—"बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्" इति शस्प्रत्ययः ।

✽भाषाऽर्थः✽ हे रावण ! तुमने रामके साथ विग्रहमें जो "वीरताका फल अभिमान है" ऐसा कहा, उससे दैत्य और राक्षसोंके सैकड़ों वंश नष्ट हो गये ॥ १३० ॥

यत् स्वधर्ममधर्मं त्वं दुर्बलं प्रत्यपद्यथाः ।
रिपौ रामे च निःशङ्को नैतत् क्षेमङ्करं चिरम् ॥ १३१ ॥

अन्वयः—त्वं यद् दुर्बलम् अधर्मं स्वधर्मं रिपौ रामे च निःशङ्कः ( इति ) प्रत्यपद्यथाः, एतत् चिरं क्षेमङ्करं न ।

व्याख्या—अथ "परस्त्रीभोगहरणम्" इत्यादेः खण्डनं विदधाति—यदिति । हे रावण ! त्वं, यत्, दुर्बलम्=असारम् , अधर्मं=परस्त्रीभोगहरणरूपं, स्वधर्मं=राक्षसानां विहितमाचारम्, एवं च—रिपौ = शत्रौ, रामे च=दाशरथौ च, निःशङ्कः=अहम् आशङ्कारहितः, (इति=एवम्), प्रत्यपद्यथाः=प्रतिपन्नोऽसि, एतत्=मतद्वयमपि, चिरं= बहुकालपर्यन्तं, क्षेमङ्करं न=कल्याणकरं न, सत्वरमेव पापफलमनुभविष्यसीति भावः ।

✽व्युत्पत्तिः✽ प्रत्यपद्यथाः—प्रतिपूर्वकात् "पद गतौ" इति दैवादिकाद्धातोर्लङ् । क्षेमङ्करं—क्षेमं करोतीति, "क्षेमप्रियमद्रेऽण् च" इति चकारात्खचि मुमागमः ।

✽भाषाऽर्थः✽ हे रावण ! तुम जो सारहीन अधर्मको स्वधर्म और "मैं शत्रु रामके विषयमें भी निःशङ्क हूं" ऐसा मानते हो, तुम्हारा यह दोनों ही मत बहुत कालतक कल्याण करनेवाला नहीं है ॥ १३१ ॥

अन्वयाऽऽदिविभिन्नानां यथा सख्यमनीप्सितम् ।
नैषं विरोधमप्येवं सार्धं पुरुषवानरैः ॥ १३२ ॥

अन्वयः—अन्वयादिविभिन्नानां यथा सख्यम् अनीप्सितम् एवं पुरुषवानरैः सार्धं विरोधम् अपि मा एषीः ।

व्याख्या—"ब्रूहि दूत विभिन्नानामि"त्यादेरुत्तरमाह—अन्वयादीति । अन्वयादिविभिन्नानां=वंशादिविलक्षणानाम् , ऋद्धिशीलक्रियाऽन्वयविसदृशानामित्यर्थः । यथा= येन प्रकारेण, सख्यं=मैत्री, अनीप्सितम्=आप्तुमनिष्टम्, एवं=तथा, पुरुषवानरैः=नर-

वानरैः, अन्वयादिविभिन्नैरिति भावः । सार्धं=सह, विरोधम् अपि=विग्रहम् अपि, मा एषीः=न इच्छ, असमानसख्यवदसमानविग्रहस्याऽपि अनीप्सितत्वादिति भावः ।

ॐव्युत्पत्तिःॐ मा एषीः—"इष इच्छायाम्" इति धातोः "माङि लुङ्" इति लुङि सिचि "इट ईटि" इति सेर्लोपः । "न माङ्योगे" इत्याडभावः ।

ॐभाषाऽर्थःॐ वंश आदिसे विलक्षणोंकी जैसे मैत्री अनीप्सित हुई, उसी तरह मनुष्य और वानरोंके साथ विरोध करनेकी इच्छा भी मत करो ॥ १३२ ॥

**विराधं तपसां विघ्नं जघान विजितो यदि ।**
**वरो धनुर्भृतां रामः स कथं न विवक्षितः ? ॥ १३३ ॥**

**अन्वयः**—धनुर्भृतां वरो रामः तपसां विघ्नं विराधं विजितो यदि जघान ( तदा ) स कथं न विवक्षितः ।

**व्याख्या**—"एको द्वाभ्याम्" इत्यादेरुत्तरमाह—विराधमिति । धनुर्भृतां= धनुर्धारिणां, वरः = श्रेष्ठः, रामः=रामचन्द्रः, तपसां=नियमानां, विघ्नम् = अन्तराय-भूतं, विराधं=राक्षसं, विजितः=तेन पूर्वं जितः सन्, यदि = चेत्, जघान=हतवान्, ( तदा = तर्हि ) सः=पूर्वविजेता, विराधः, कथं=केन प्रकारेण, न विवक्षितः=न प्रसिद्धः, एतेन पूर्वप्रतिपादितदोषस्याऽवकाश इति भावः ।

ॐव्युत्पत्तिःॐ विघ्नं—विहन्यतेऽनेनेति विघ्नस्तं, "घञर्थे कविधानम्" इति कः, "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधालोपः, "हो हन्तेर्ञ्णिन्नेषु" इति कुत्वम् ।

ॐभाषाऽर्थःॐ धनुर्धारियोंमें श्रेष्ठ रामचन्द्रजीने तपस्याओंके विघ्नभूत विराधको पहले उससे जीते जाकर पीछेसे मार डाला तो वह विराध कैसे प्रसिद्ध नहीं हुआ ? ।

**प्रणश्यन्नपि नाऽशक्नोदत्येतुं बाणगोचरम् ।**
**त्वयैवोक्तं महामायो मारीचो रामहस्तिनः ॥ १३४ ॥**

**अन्वयः**—महामायो मारीचः प्रणश्यन् अपि रामहस्तिनो बाणगोचरम् अत्येतुं न अशक्नोत् ( इति ) त्वया एव उक्तम् ।

**व्याख्या**—साम्प्रतं "मन्नियोगाच्च मारीच" इत्युक्तेरुत्तरमाह—प्रणश्यन्नपीति । महामायः=महामायावी कनकमृगरूपधारित्वादिति भावः । मारीचः=ताडकासुतः, प्रणश्यन् अपि = अदर्शनं गच्छन्नपि, पलायमानोऽपि, रामहस्तिनः = श्रेष्ठस्य राम-चन्द्रस्य, बाणगोचरं = शरविषयम्, अत्येतुम् = अतिक्रमितुं, न अशक्नोत् = समर्थो नाऽभूत्, ( इति = एतत् ) त्वया एव = भवता एव, उक्तम् = ममारेति वचनेन प्रति-पादितम्, अतः पलायमानस्याऽपि मायाविनो वधे रामस्य न कश्चिदपकर्ष इति भावः ।

*व्युत्पत्तिः* प्रणश्यन्—प्रणश्यतीति, प्रपूर्वकात् "णश अदर्शने" इति धातोर्लटः शत्रादेशः, "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम्। रामहस्तिनः-रामो हस्तीव इति रामहस्ती, तस्य, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति समासः।

*भाषाऽर्थः* महान् मायावी मारीच भागता हुआ भी श्रेष्ठ रामचन्द्रजीके बाण-विषयका अतिक्रमण नहीं कर सका, यह तुम ने ही कहा है ॥ १३४ ॥

**अन्याऽऽसक्तस्य यद्वीर्यं न त्वं स्मरसि वालिनः।**

**मूर्च्छावान् नमतः संध्यां ध्रुवं तद्बाहुपीडितः ॥ १३५ ॥**

**अन्वयः**—सन्ध्यां नमतः अन्याऽऽसक्तस्य वालिनो वीर्यं यत् त्वं न स्मरसि तत् तद्बाहुपीडितः मूर्च्छावान् ध्रुवम्।

**व्याख्या**—"निजघानाऽन्यसंसक्तम्" इति वाक्यस्य सोपहासमुत्तरमाह—अन्यासक्तस्येति। सन्ध्यां = सन्ध्योपास्यदेवतां, नमतः = वन्दमानस्य, अत एव—अन्याऽऽसक्तस्य = परसंसक्तस्य, वालिनः = सुग्रीवाऽग्रजस्य, वीर्यं = पराक्रमं, यत् = यस्मात्, त्वं = रावणः, न स्मरसि = न चिन्तयसि, तत्, तद्बाहुपीडितः = वालिभुज-व्यथितः, अत एव—मूर्च्छावान् = मूर्च्छितः, ध्रुवम्=अवश्यम्, अन्यथा कथं न स्मरसीत्यर्थः। अन्यसंसक्तवधदोषो न रामस्य, अन्यथा वालिना सुग्रीवे हते मित्रवधो विश्वासघातश्च स्यादतो रामेण वालिवधो विहित इति भावः।

*व्युत्पत्तिः* नमतः—नमतीति नमन्, तस्य। "णम प्रह्वत्वे शब्दे च" इति धातोर्लटः शत्रादेशः।

*भाषाऽर्थः* सन्ध्यावन्दन करते हुए अन्यकार्यमें आसक्त वालीके पराक्रमका जो तुम्हें स्मरण नहीं है उससे मालूम पड़ता है कि वालीके बाहुसे पीडित होकर तुम अवश्य मूर्च्छित हो गये थे ॥ १३५ ॥

**असद्बन्धुवधोपज्ञं विमुञ्च बलिविग्रहम्।**

**सीतामर्पय नन्तव्ये कोशदण्डाऽऽत्मभूमिभिः ॥ १३६ ॥**

**अन्वयः**—असद्बन्धुवधोपज्ञं बलिविग्रहं विमुञ्च, नन्तव्ये कोशदण्डाऽऽत्मभूमिभिः सीताम् अर्पय।

**व्याख्या**—"पुंसा भव्येयो" त्यादिना "बन्धूनां वधो न क्षमिष्यते" इत्येतस्य वाक्यस्य उत्तरं प्रतिपादयन् वाक्यमुपसंहरति—असदिति। ( हे रावण ! ) असद्ब-न्धुवधोपज्ञं = दुष्टबान्धवहननाद्यज्ञानं, बलिविग्रहं = बलवत्तरविरोधं, रामविद्वेषमिति भावः। विमुञ्च = त्यज, नन्तव्ये = प्रणामयोग्ये, राम इति भावः। कोशदण्डात्मभू-मिभिः = अर्थौघराजदण्डशरीरधरित्रीभिः समं, सीतां = जानकीम्, अर्पय=समर्पय, निवेदेहीति भावः।

❀व्युत्पत्तिः❀ असद्वन्धुवधोयज्ञम्—उपज्ञायत इत्युपज्ञा "आश्चोपसर्गे" इति कः। "उपज्ञा ज्ञानमाद्यं स्यात्" इत्यमरः। असद्वन्धुवध उपज्ञा यस्य तम्। जयमङ्गलमल्लिनाथमते तु असद्वन्धुवधस्य उपज्ञा असद्वन्धुवधोपज्ञम्, "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति नपुंसकलिङ्गता। अत्र पक्षे बन्धुवधस्याऽचेतनस्योपज्ञाने कर्तृत्वाऽसम्भवात्तेन हतबन्धुश्चेतनो लक्ष्यते इति मल्लिनाथः।

❀भाषाऽर्थः❀ हे रावण ! दुष्ट बन्धुओं का वध प्राथमिक ज्ञानवाले बलवद्विरोध-( बलवान् रामके साथ विद्वेष ) को छोड़ो, प्रणामके योग्य राममें खजाना, राज-दण्ड, शरीर और भूमिके साथ सीताजीको अर्पण करो ॥ १३६ ॥

**स्फुटपरुषमसह्यमित्थमुच्चैः सदसि मरुत्तनयेन भाष्यमाणः ।**
**परिजनमभितो विलोक्य दाहं दशवदनः प्रदिदेश वानरस्य ॥ १३७॥**

**अन्वयः**—स्फुटपरुषम् असह्यम् उच्चैः सदसि मरुत्तनयेन भाष्यमाणो दशवदनः अभितः परिजनं विलोक्य वानरस्य दाहं प्रदिदेश ।

**व्याख्या**—इत्थम् = अनेन प्रकारेण, स्फुटपरुषं = व्यक्तनिष्ठुरम्, अत एव—असह्यं = सोढुमशक्यम्, उच्चैः = तारं, सदसि = सभायां, मरुत्तनयेन = हनूमता, भाष्यमाणः = उच्यमान एव. न तु समासावित्यर्थः। दशवदनः=रावणः, अभितः = उभयतः, परिजनं = भृत्यवर्गं, विलोक्य=दृष्ट्वा, वानरस्य=हनूमतः, दाहं=भस्मीकरणं, प्रदिदेश=आदिष्टवान्। पुष्पिताग्रा वृत्तम्, तल्लक्षणं यथा—"अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा।" इति ॥

❀व्युत्पत्तिः❀ इत्थम्–"इदमस्थमुः" इति थमुप्रत्ययः, "कृन्मेजन्त" इत्यव्ययत्वम्।

❀भाषाऽर्थः❀ इस प्रकार स्पष्टरूपसे कठोर अत एव असह्य वाक्य ऊंचे स्वरसे सभामें हनूमान्जीके कहनेपर रावणने दोनों ओर भृत्योंको देखकर हनूमान्जीको जलानेकी आज्ञा दी ॥ १३७ ॥

इति श्रीचन्द्रकलाऽख्यया नव्यव्याख्यया मण्डिते श्रीभट्टिकाव्ये
मारुतिसंयमो नाम नवमः सर्गः। द्वितीयेऽधिकारकाण्डे
लक्षणरूपे चतुर्थः परिच्छेदः।



# अथ दशमः सर्गः ।

साम्प्रतं प्रसन्नकाण्डमुच्यते । प्रसादगुणयुक्तः प्रसन्नः । प्रसादलक्षणं यथा साहित्यदर्पणे—

"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवाऽनलः ।
स प्रसादः समस्तेषु रसेषु रचनासु च" (७।८) इति ।

प्रसन्नप्रचुरं काण्डं प्रसन्नकाण्डम् । तत्राऽस्मिन्काण्डे चत्वारः परिच्छेदाः अलङ्कारमाधुर्यप्रदर्शनदोषाः भाषासमावेशश्चेति । तत्राऽलङ्कारो द्विविधः—शब्दाऽलङ्कारोऽर्थाऽलङ्कारश्चेति । शब्दालङ्कारे प्रागनुप्रासं दर्शयति—

**अथ स वल्कदुकूलकुथाऽऽदिभिः परिगतो ज्वलदुद्धतवालधिः ।**
**उदपतद् दिवमाकुललोचनैर्नृरिपुभिः सभयैरभिवीक्षितः ॥ १ ॥**

**अन्वयः**—अथ वल्कदुकूलकुथाऽऽदिभिः परिगतो ज्वलदुद्धतवालधिः स सभयैः आकुललोचनैः नृरिपुभिः अभिवीक्षितः ( सन् ) दिवम् उदपतत् ।

**व्याख्या**—अथ = रावणकृतदाहाऽऽदेशाऽनन्तरं, वल्कदुकूलकुथाऽऽदिभिः = वल्कलक्षौमदर्भप्रभृतिभिः, परिगतः=परिवेष्टितः, ज्वलदुद्धतवालधिः=दीप्यमानोर्ध्वीकृतपुच्छः, सः=हनूमान्, सभयैः=त्रासयुक्तैः, अत एव, आकुललोचनैः=व्याकुललोचनैः, नृरिपुभिः=नरशत्रुभिः, राक्षसैरिति भावः । अभिवीक्षितः=अभिदृष्टः सन् , दिवम् आकाशम् , उदपतत्=उत्पतितवान् । पद्यमेतत् अनुप्रासवत् । अनुप्रासलक्षणं यथाः—

"अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् ।" इति । शब्दसाम्यं=व्यञ्जनसाम्यम् । रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः । अनुप्रासस्य च पञ्च भेदाः—छेकाऽनुप्रासो, वृत्त्यनुप्रासः, श्रुत्यनुप्रासोऽन्त्याऽनुप्रासो, लाटाऽनुप्रासश्च । तत्राऽयं वृत्त्यनुप्रासः, प्रथमे चरणे लकारयोः, द्वितीये तकारयोर्धकारयोश्च, तृतीये लकारयोश्चतुर्थे च चरणे रेफभकारयोरावृत्तेः । तल्लक्षणं यथा—

"अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा । एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥" इति ॥

**%व्युत्पत्तिः%** वल्कदुकूलकुथाऽऽदिभिः—वल्कानि च दुकूलानि च कुथाश्च, ते आद्यो येषां तैः । "क्षौमं दुकूलम्" इति, "अस्त्री कुशं कुथो दर्भः" इति चामरः । कुथग्रहणं तृणान्तराणामुपलक्षणम् । ज्वलदुद्धतवालधिः—ज्वलन् उद्धतो वालधिर्यस्य सः । "पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः" इत्यमरः । अत्र द्रुतविलम्बितं वृत्तं, तल्लक्षणं यथा—"द्रुतविलम्बितमाह नभौ भरौ" । इति ।

**%भाषाऽर्थः%** रावणके जलानेकी आज्ञा देनेके अनन्तर वल्कल (पेड़ोंकी छाल),

पट्टवस्त्र और कुश आदि तृणोंसे वेष्टित और जलते हुए उन्नत पूँछसे युक्त हनूमान्जी भयभीत अत एव आकुल नेत्रवाले राक्षसोंसे देखे जाते हुए आकाशमें उछल पड़े ॥१॥

**रणपण्डितोऽग्र्यविबुधाऽरिपुरे कलहं स राममहितः कृतवान् ।**
**ज्वलदग्नि रावणगृहं च बलात् कलहंसराममहितः कृतवान् ॥ २ ॥**

**अन्वयः**—रणपण्डितो राममहितः अहितः कृतवान् सः अग्र्यविबुधाऽरिपुरे कलहं बलात् कलहंसरामं रावणगृहं च ज्वलदग्नि कृतवान् ।

**व्याख्या**—रणपण्डितः=युद्धकुशलः, राममहितः = राघवपूजितः, अहितः = शत्रुः, रावणस्येत्यर्थः । कृतवान् = कृताऽपेक्षी, कार्यान्तराऽपेक्षीति भावः । सः=हनूमान्, अग्र्यविबुधारिपुरे = रावणनगर्यां, लङ्कायामित्यर्थः । कलहं=युद्धं, बलात्= बलमाश्रित्य, कलहंसरामं=कादम्बक्रीडासाधनं, रावणगृहं च=रावणभवनं च, ज्वलदग्नि=दीप्यमानपावकं, कृतवान् = चकार । अत्र यमकाऽलङ्कारः । यमकलक्षणं यथा— 'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवाऽऽवृत्तिर्यमकं विनिगद्यते ॥" इति

तत्र च युजोः = युग्मयोर्द्वितीयचतुर्थपादयोरित्यर्थः, यमितत्वात् युक्पादयमकमेतत् । प्रमिताऽक्षरा वृत्तं, तल्लक्षणं यथा—"प्रमिताऽक्षरा सजससैरुदिता ।" इति ॥

❀व्युत्पत्तिः❀ रणपण्डितः—रणे पण्डितः, "सप्तमी शौण्डैः" इति समासः । राममहितः—रामेण महितः ( पूजितः ), "मह पूजायाम्" इति धातोः क्तप्रत्ययः । कृतवान्—कृतम् (विशिष्टं कर्म) अपेक्ष्यत्वेनाऽस्ति यस्य सः "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप्प्रत्ययः । अग्र्यविबुधाऽरिपुरे=अग्र्यश्चाऽसौ विबुधः ( देवः ) अग्र्यविबुधः देवश्रेष्ठ इन्द्र इत्यर्थः । तस्याऽरिः रावणः, तस्य पूः अग्र्यविबुधाऽरिपुरं, तस्मिन् । "ऋक्पूरब्धूःपथामानक्षे" इति समासाऽन्तः अप्रत्ययः । कलहंसरामं—कलहंसं रमयतीति कलहंसरामं, तत् । ण्यन्तात् "रमु क्रीडायाम्" इति धातोः "कर्मण्यण्" इत्यण्, "कादम्बः कलहंसः स्यात्" इत्यमरः । ज्वलदग्नि = ज्वलन् अग्निर्यस्मिंस्तत् ।

❀भाषाऽर्थः—युद्धकुशल रामचन्द्रजीसे सत्कृत, रावणके शत्रु और विशिष्ट कार्यकी अपेक्षा करनेवाले । हनूमान्जीने रावणकी नगरी लङ्कामें संग्राम किया तथा कादम्ब हंसोंकी क्रीडाके साधन रावणके भवनमें आग लगा दी ॥ २ ॥

**निखिलाऽभवन् न सहसा सहसा ज्वलनेन पूः प्रभवता भवता ।**
**वनिताजनेन वियता वियता त्रिपुराऽऽपदं नगमिता गमिता ॥ ३ ॥**

**अन्वयः**—सहसा प्रभवता भवता ज्वलनेन वियता वियता वनिताजनेन त्रिपुराऽऽपदं गमिता नगम् इता निखिला पूः सहसा न अभवत् ।

**व्याख्या**—सहसा = अतर्कित एव, प्रभवता = वृद्धिं गच्छता, भवता=विद्यमानेन, ज्वलनेन = अग्निना, वियता = नभसा, वियता = इतस्ततो गच्छता, भयादिति शेषः ।

वनिताजनेन = महिलाजनेन, त्रिपुराऽऽपदं = त्रिपुरविपत्तिं, गमिता = प्रापिता, नगं = त्रिकूटपर्वतमित्यर्थः, इता = प्रापिता, निखिला = समस्ता, पूः = पुरी, लङ्केत्यर्थः । सहसा=हास्यसहिता, साऽऽनन्देति भावः । न अभवत् = न जाता ।

※व्युत्पत्तिः※ सहसा—"अतर्किते तु सहसा" इत्यमरः । वियता—विशेषेण एतीति वियन्, तेन । विपूर्वकात् "इण् गतौ" इति धातोर्लटः शत्रादेशः । नगं—न गच्छतीति नगस्तम्, "अन्यत्राऽपि दृश्यत इति वक्तव्यम्" इति डः, "नगोऽप्राणिष्वन्यतरस्याम्" इति नञः प्रकृतिभावः । "शैलवृक्षौ नगावगौ" इत्यमरः । सहसा—हसनं हसः "हसे हसने" इति धातोः "स्वनहसोर्वा" इत्यप् । "अथो हसः । हासो हास्यं च" इत्यमरः । हसेन सहिता "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सहस्य सभावः । अत्र पादाऽन्तयमकम् । प्रमिताक्षरा वृत्तम् ।

※भाषाऽर्थः※ सहसा बढ़नेवाले, विद्यमान अग्निसे आकाशसे भयके कारण इधर उधर जानेवाली स्त्रियोंसे त्रिपुरकी आपत्तिको प्राप्त कराई गई, त्रिकूट पर्वतमें स्थित समस्त नगरी ( लङ्का ) आनन्दरहित हो गई ॥ ३ ॥

**सरसां सरसां परिमुच्य तनुं पततां पततां ककुभो बहुशः ।**
**सकलैः सकलैः परितः करुणैरुदितै रुदितैरिव खं निचितम् ॥ ४ ॥**

**अन्वयः**—सरसां सरसां तनुं परिमुच्य बहुशः ककुभः पततां पतताम् उदितैः सकलैः सकलैः करुणैः रुदितैः परितः खं निचितम् इव ।

**व्याख्या**—सरसां = कासाराणां, सरसाम् = आर्द्रां, तनुं = शरीरं, परिमुच्य= त्यक्त्वा, त्रासादिति शेषः । बहुशः = बहून् वारान्, ककुभः=दिशः, पततां = गच्छतां, पततां = पक्षिणाम्, उदितैः = शब्दितैः, सकलैः = संपूर्णैः, सकलैः=माधुर्ययुक्तैः, करुणैः = करुणाजनकैः, रुदितैः = क्रन्दितैः, परितः = समन्तात्, खम् = आकाशं, निचितम् इव = व्याप्तम् इव आसीदिति शेषः ।

※व्युत्पत्तिः※ बहुशः—"बह्वल्पाऽर्थाच्छस्कारकादन्यतरस्याम्" इति शस् । ककुभः—"दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।" इत्यमरः । पततां—पतन्तीति पतन्तस्तेषां, "पत्लृ पतने" इति धातोर्लटः शत्रादेशः । पततां—"पतत्रि पत्रिपतगपतत्पत्ररथाण्डजाः ।" इत्यमरः । उदितैः—"वद व्यक्तायां वाचि" इति धातोर्निष्ठायां क्तप्रत्ययः । यजादित्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणम् । सकलैः—कलैः सहितानि सकलानि, तैः । सकलैः—"समग्रं सकलं पूर्णमखण्डं स्यादनूनके ।" इत्यमरः । उत्प्रेक्षाऽलङ्कारः । पादाऽऽदियमकमेतत्, पादानामादौ यमितत्वात् । तोटकवृत्तं, तल्लक्षणं यथा—"इह तोटकमम्बुधिसैः प्रमितम् ।" इति ॥

※भाषाऽर्थः※ तालावोंके आर्द्र शरीरको छोड़कर बहुत बार दिशाओंमें उड़नेवाले

पक्षियोंके शब्दित, मधुर शब्दोंसे युक्त, संपूर्ण करुणाजनक चिल्लाहटसे चारों तरफ आकाश व्याप्तके सदृश प्रतीत होता था ॥ ४ ॥

**न च कांचन काञ्चनसद्मचितिं न कपिः शिखिना शिखिना समयौत् ।**
**न च न द्रवता द्रवता परितो हिमहानकृता न कृता क्व च न ॥ ५ ॥**

**अन्वयः**—कपिः कांचन काञ्चनसद्मचितिं शिखिना शिखिना न समयौत् ( इति ) न । न च द्रवता ( इति ) न क्व च हिमहानकृता शिखिना द्रवता परितः न कृता ( इति ) न ।

**व्याख्या**—कपिः = हनूमान्, कांचन = कांचिदपि, काञ्चनसद्मचितिं = सौवर्णगृहसंहतिं, शिखिना = ज्वालावता, शिखिना = अग्निना, न समयौत् ( इति ) न=न मिश्रितवान् ( इति ) न, अपि तु मिश्रितवान् । न च द्रवता ( इति ) न = न च विसर्पता ( इति ) न, अपि तु विसर्पता, क्व च = क्वचिन्नाम, हिमहानकृता = तुषाराऽपचयकर्त्रा, शिखिना = अग्निना, द्रवता = द्रवत्वं, परितः = सर्वतः, न कृता ( इति ) न = न विहिता ( इति ) न, अपि तु विहिता एव ।

**⁂व्युत्पत्तिः⁂** शिखिना—शिखाः ( ज्वालाः ) सन्ति अस्य सः शिखी, तेन अत्राऽयं यौगिकशब्दः । "व्रीह्यादिभ्यश्च" इति इनिः । अपरः शिखिशब्दो योगरूढः । समयौत्-संपूर्वकात् "यु मिश्रणाऽमिश्रणयोः" इति धातोर्लङ्, "उतो वृद्धिर्लुकि हलि" इति वृद्धिः । द्रवता—द्रवतीति द्रवन्, तेन । "द्रु गतौ" इति धातोर्लटः शत्रादेशः । द्रवता—द्रवस्य भावः, "तस्य भावस्त्वतलौ" इति तल्प्रत्ययः "तलन्तं स्त्रियाम्" इति स्त्रीत्वम् । पादानां मध्ये यमितत्वात्पादमध्ययमकम् । तोटकवृत्तम् ।

**⁂भाषाऽर्थः⁂** हनूमान्जीने किसी भी सुनहले भवन-समूहको ज्वालावाले अग्निसे मिश्रित नहीं किया यह नहीं, मिश्रित ही किया । नहीं फैलनेवाले यह बात नहीं, फैलनेवाले तथा हिमको हटानेवाले अग्निने चारों तरफ द्रवभाव नहीं कर दिया यह बात नहीं, कर ही दिया ॥ ५ ॥

**अवसितं हसितं प्रसितं, मुदा विलसितं ह्रसितं स्मरभासितम् ।**
**न समदाः प्रमदा हतसंमदाः, पुरहितं विहितं न समीहितम् ॥ ६ ॥**

**अन्वयः**—प्रसितं हसितम् अवसितम् । मुदा स्मरभासितं विलसितं ह्रसितम् । प्रमदाः समदा न, हतसम्मदाः । समीहितं पुरहितं न विहितम् ।

**व्याख्या**—प्रसितं = तत्परं, हसितं = हसनं, लङ्कायामिति शेषः । अवसितम्= अपगतम् । मुदा = हर्षेण, स्मरभासितं = मन्मथदीपितं, विलसितं शृङ्गारविलासः, ह्रसितम् = अल्पीकृतम् । प्रमदाः = ललनाः, समदा न = दर्पसहिता न, प्रत्युत

हतसम्मदाः = नष्टहर्षाः । समीहितम् = अभीष्टं, पुरहितं = नगरकल्याणं, न विहितं= न अनुष्ठितम् , पुरस्याऽनलव्याप्तत्वादिति भावः ।

❀व्युत्पत्तिः❀ प्रसितं—"तत्परे प्रसिताऽऽसक्तौ" इत्यमरः । हसितं—हसनम् , "नपुंसके भावे क्तः" इति क्तः । अवसितम्-अवपूर्वकात् "षोऽन्तकर्मणि" इति धातोः क्तप्रत्ययः । "द्यतिस्यतिमास्थामित्ति किति" इतीत्वम् । स्मरभासितं—स्मरेण भासितं, "भासृ दीप्तौ" इति धातोः क्तः । हतसम्मदाः—हतः सम्मदो यासां ताः । "प्रमदसम्मदौ हर्षे" इति निपातितोऽयं सम्मदशब्दः । अत्र मण्डलाकारेण यमितत्वात् चक्रवालयमकम् । चक्रवालाकारं यमकं चक्रवालयमकम् । तल्लक्षणं यथा—

"पदानामवसाने तु वाक्ये स्यात्तुल्यवर्णता । प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यते ॥" इति ।

द्रुतविलम्बितं वृत्तम् ॥

❀भाषाऽर्थः❀ लङ्कामें प्रवृत्त हास्य चला गया, हर्षसे कामोद्दीपित श्रृङ्गारविलास क्षीण हो गया । स्त्रियां गर्वयुक्त नहीं, हर्षहीन हैं । अभीष्ट, नगरका हित भी नहीं किया गया ॥ ६ ॥

समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा ।
समिद्धशरणाऽऽदीप्ता देहऽलंकामतेश्वरा ॥ ७ ॥

अन्वयः—देहे समिद्धशरणा दीप्ता मतेश्वरा समिद्धशरणाऽऽदीप्ता अलंकामतेश्वरा लङ्का देहे ।

व्याख्या—देहे अभ्यन्तरभागे, समिद्धशरणा = उज्ज्वलगृहा, तत एव दीप्ता शोभासम्पन्ना, मतेश्वरा = अभीष्टमहादेवा, महादेवस्य लङ्कास्थायिनां सर्वेषामपि जनानामुपास्यत्वादिति भावः । समिद्धशरणादीप्ता = ऋषिनाशकप्रोत्साहकपाल्या, रावणपालनीयेति भावः । अलंकामतेश्वरा - पर्याप्तेच्छासमर्था, सर्वेच्छापूरयित्रीति तात्पर्यम् । एतादृशी, लङ्का = रावणपुरी, देहे दग्धा, हनूमता इति शेषः ।

❀व्युत्पत्तिः❀ समिद्धशरणा—समिद्धानि शरणानि यस्यां सा । संपूर्वकात् "ञिइन्धी दीप्तौ" इति धातोः क्तप्रत्यये समिद्धपदसिद्धिः । "शरण गृहरक्षित्रोः" इत्यमरः । मतेश्वरा—मत ईश्वरो यस्यां सा । "मन ज्ञाने" इति दैवादिकाद्धातोः "मतिबुद्धिपूजाऽर्थेभ्यश्च" इति वर्तमाने क्तप्रत्यये मतपदसिद्धिः । मतिरिहेच्छा बुद्धेः पृथगुपादानात् । समिद्धशरणाऽऽदीप्ता—समिधो दधतीति समिद्धाः ऋषयः । "आतोऽनुपसर्गे कः" इति कप्रत्ययः । यद्वा समिधो हतवन्त इति समिद्धाः, अर्थः पूर्ववत् । "अन्येष्वपि दृश्यते" इति डः । समिद्धान् ( ऋषीन् ) शृणन्ति ( हिंसन्ति ) इति समिद्धशरणा राक्षसाः । "शॄ हिंसायाम्" इति धातोः "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट् । समिद्धशरणान् आदीपयति ( प्रोत्साहयति ) इति समिद्धशरणादीप् , रावण इत्यर्थः । क्विप्प्रत्ययः, सर्वाऽपहारी लोपश्च । समिद्धशरणाऽऽदीपा ताप्यत इति समि-

ऋशरणादीप्ता, "ताय् सन्तानपालनयोः" इति धातोः कर्मणि कारके विवक्षिते "सम्पदादिभ्यः क्विप्" इति क्विप्। अलंकामतेश्वरा—अलं कामो यस्य सोऽलङ्कामः तस्य भावोऽलङ्कामता। ईष्टे इति ईश्वरा, "ईश ऐश्वर्ये" इति धातोः "स्थेशभासपिसकसो वरच्" इति वरच्, स्त्रीत्वविवक्षायाम् "अजाद्यतष्टाप्" इति टाप्। अस्मादेव धातोः "अन्येभ्योऽपि दृश्यन्ते" इति वनिपि स्त्रीत्वविवक्षायां "वनो र च" इति ङीप् रश्चाऽन्तादेशः, तत ईश्वरीतिपदं सिद्ध्यति। अलंकामतायाम् ईश्वरा। देहे—"दह भस्मीकरणे" इति धातोः कर्मणि लिट्, समुद्गाकारेण यमितत्वात् पादद्वययोरर्धद्वययोश्च संपुटकवत्सादृश्यात् समुद्गयमकमिति जयमङ्गलः। अनुष्टुब्वृत्तम्।

ॐभाषाऽर्थःॐ अभ्यन्तर भागमें उज्ज्वल गृहोंसे युक्त, शोभासम्पन्न, जहांपर महादेव अभीष्ट हैं, ऋषियोंको मारनेवाले राक्षसोंको प्रोत्साहन देनेवाले रावणसे पालनीय और सब इच्छाओंको पूर्ण करने वाली लङ्का हनुमान्‌जीसे जलाई गई॥ ७॥

**पिशिताशिनामनुदिशं स्फुटतां स्फुटतां जगाम परिविह्वलता।**
**ह्वलता जनेन बहुधा चरितं चरितं महत्त्वरहितं महता॥ ८॥**

**अन्वयः**—अनुदिशं स्फुटतां पिशिताऽशिनां परिविह्वलता स्फुटतां जगाम। महता ( अपि ) ह्वलता जनेन चरितं, बहुधा महत्त्वरहितं चरितम्।

**व्याख्या**—अनुदिशं दिशि दिशि, स्फुटतां पलायमानानां, पिशिताऽशिनां मांसाऽशिनां, राक्षसानामित्यर्थः। परिविह्वलता = परिविक्लवता, स्फुटतां= स्पष्टतां, जगाम = अगमत्। महता=शौर्यादिगुणयुक्तेन अपि, ह्वलता=चलता, जनेन= पुंसा, चरितं = यच्चेष्टितं, तत् बहुधा = बहुप्रकारं, महत्त्वरहितं = शौर्यादिगुणशून्यं, चरितम् अनुष्ठितं, भयादिति शेषः।

ॐव्युत्पत्तिःॐ अनुदिशं—दिशि दिशि, "अव्ययं विभक्ती"त्यादिना वीप्सायामव्ययीभावः। "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासाऽन्तष्टच्। स्फुटतां—स्फुटन्तीति स्फुटन्तस्तेषां, लटः शत्रादेशः। परिविह्वलता—परिविह्वलस्य भावः, "विक्लवो विह्वलः स्यात्तु" इत्यमरः। स्फुटतां—स्फुटस्य भावः स्फुटता, ताम्। ह्वलता—ह्वलतीति ह्वलन्, तेन। "ह्वल चलने" इति धातोर्लटः शत्रादेशः। रसनाकारेण यमितत्वात्काञ्चीयमकम्। प्रमिताक्षरा वृत्तम्।

ॐभाषाऽर्थःॐ दिशा दिशाओंमें भागनेवाले राक्षसोंकी विह्वलता स्पष्टताको प्राप्त हुई। शौर्यादियुक्त होकर भी चलनेवाले पुरुषसे जो चेष्टा की गई, वह भयके कारण महत्त्वसे रहित अनुष्ठित थी॥ ८॥

**न गजा नगजा दयिता, दयिता विगतं विगतं, ललितं ललितम्।**
**प्रमदा प्रमदाऽऽमहता महताऽमरणं मरणं समयात् समयात्॥ ९॥**

**अन्वयः**—नगजा दयिता गजा न दयिताः । विगतं विगतम् । ललितं ललितम् । प्रमदा आमहता ( इव ) प्रमदा । समयात् महताम् अरणं मरणं समयात् ।

**व्याख्या**—नगजाः = पर्वतोत्पन्नाः, दयिताः=अभीष्टाः, गजाः = हस्तिनः, न दयिताः = नो रक्षिताः । विगतं = पक्षिगमनं, विगतं = नष्टम् । ललितम् = ईप्सितं वस्तु, ललितं = पीडितम् । प्रमदा=ललना, आमहता = रोगपीडिता इव, पलायनहता इव वा । प्रमदा = हर्षशून्या जाता । समयात् = कालाद्धेतोः, महतां = शूराणामपि, अरणं = युद्धरहितं, मरणं = मृत्युः, समयात् = संप्राप्तम् ।

**व्युत्पत्तिः** नगजाः—नगे जाताः, "सप्तम्यां जनेर्डः" इति डः । दयिताः "अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ।" इत्यमरः । दयिताः—"दय दानगतिरक्षणहिंसाऽऽदानेषु" इति धातोः रक्षणेऽर्थे क्तः प्रत्ययः । विगतं—वीनां गतम् । ललितं—"लल ईप्सायाम्" इति धातोः क्तप्रत्ययः, "ललितमीप्सिते । लडिते हावभेदे स्यात्" इति कोशः । प्रमदः ( हर्षः ) अस्ति यस्याः सा प्रमदा, "अर्श आदिभ्योऽच्" इत्यच्प्रत्ययः । आमहता—आमेन ( रोगेण पलायनेन वा ) हता । प्रमदा—प्रगतो मदो ( हर्षः ) यस्याः सा । समयात्—हेतौ पञ्चमी । अरणम्—अविद्यमानो रणो यस्मिंस्तत्, "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति नञ्बहुव्रीहिः । समयात्—संपूर्वकात् "या प्रापणे" इति धातोर्लङ् । मालाऽऽकारेण यमकविन्यासात् यमकावली । तोटकवृत्तम् ।

**भाषाऽर्थः** पर्वतमें उत्पन्न अभीष्ट हाथी रक्षित नहीं हुए । पक्षियोंकी गति नष्ट हो गई । प्रमदा रोगसे वा पलायनसे पीडितके सदृश हर्षसे रहित हो गई एवम् समयके कारण शूरोंका विना युद्धका मरण उपस्थित हुआ ॥ ९ ॥

> न वानरैः पराक्रान्तां महद्भिर्भीमविक्रमैः ।
> न वा नरैः पराक्रान्तां ददाह नगरीं कपिः ॥ १० ॥

**अन्वयः**—वानरैः महद्भिः भीमविक्रमैः न पराक्रान्तां, वा नरैः न पराक्रान्तां नगरीं कपिः ददाह ।

**व्याख्या**—वानरैः=अन्यैः कपिभिः, तथा महद्भिः=महाप्राणैः, भीमविक्रमैः= भयङ्करपराक्रमैः, असह्यपराक्रमैरित्यर्थः, इन्द्रादिभिरिति भावः । न पराक्रान्तां = न निरुद्धां, वा = अथ वा, नरैः = मनुष्यैः, न पराक्रान्तां=न विगृहीतां, नगरीं = पुरीं, लङ्कामित्यर्थः । कपिः=हनूमान्, ददाह=दग्धवान् ।

**व्युत्पत्तिः** पराक्रान्तां—परापूर्वकात् "क्रमु पादविक्षेपे" इति धातोर्निष्ठायां क्तप्रत्ययः । प्रथमतृतीयपादयोर्यमितत्वात् अयुक्पादयमकम् । अनुष्टुब्वृत्तम् ।

**भाषाऽर्थः** अन्य वानरोंसे और महाप्राण असह्य पराक्रमवाले इन्द्र आदियोंसे

भी नहीं रोकी गई एवम् मनुष्योंसे भी अनाक्रान्त ( आक्रमण नहीं की गई ) ऐसी लङ्का नगरीको हनूमान्‌जीने जला दिया ॥ १० ॥

**द्रुतं द्रुतं वह्निसमागतं गतं महीमहीनद्युतिरोचितं चितम् ।**
**समं समन्तादपगोपुरं पुरं परैः परैरप्यनिराकृतं कृतम् ॥ ११ ॥**

**अन्वयः**—महीं गतं चितम् ( यत् ) अहीनद्युतिरोचितं ( तत् ) वह्निसमागतं द्रुतं द्रुतम् । परैः परैरपि अनिराकृतं पुरम् अपगोपुरं समन्तात् समं कृतम् ।

**व्याख्या**—महीं = पृथ्वीं, गतं=प्राप्तं सदपि, चितं=सौवर्णगृहसमूहेन व्याप्तं, ( यत् = पुरम् ) अहीनद्युतिरोचितम् = उत्कृष्टतेजोभासितं, ( तत् = पुरम् ) वह्निसमागतम्=अग्निसंयुक्तं, सत्, द्रुतं=शीघ्रं, द्रुतं विलीनम् । परैः=शत्रुभिः, परैरपि = उत्कृष्टैरपि, शक्रादिभिरिति भावः । अनिराकृतम् अनभिभूतं सत्, साम्प्रतं तु—अपगोपुरं=पुरद्वाररहितम्, अत एव—समन्तात् = सर्वतः, समं=तुल्यं, कृतं = विहितम् ।

॥व्युत्पत्तिः॥ द्रुतं—"लघु क्षिप्रमरं द्रुतम्" इत्यमरः । द्रुतं—"द्रु गतौ" इति धातोः क्तप्रत्ययः । परैः—"अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिनः ।" इत्यमरः । परैः—"दूराऽनात्मोत्तमाः पराः" इत्यमरः । अपगोपुरम्—अपगतं गोपुरं यस्मात्तत्, "पुरद्वारं तु गोपुरम्" इत्यमरः । पादस्यादावन्ते च यमितत्वात् पादाद्यन्तयमकम् । वंशस्थं वृत्तं—"जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ।

॥भाषाऽर्थः॥ भूतलमें विद्यमान, सुनहले गृहोंसे व्याप्त जो शहर उत्कृष्ट तेजसे प्रकाशित था, वह अग्निसे संयुक्त होकर शीघ्र विलीन हो गया । शत्रुओंसे और इन्द्र आदि श्रेष्ठ पुरुषोंसे भी अनभिभूत वही शहर पुरद्वारसे भी रहित अत एव चारों तरफ समान किया गया ॥ ११ ॥

**नश्यन्ति ददर्श वृन्दानि कपीन्द्रः ।**
**हारीण्यबलानां हारीण्यबलानाम् ॥ १२ ॥**

**अन्वयः**—कपीन्द्रः अबलानाम् अबलानां हारीणि हारीणि वृन्दानि नश्यन्ति ददर्श ।

**व्याख्या**—कपीन्द्रः=हनूमान्, अबलानां=बलरहितानां, रक्षकरहितानामिति भावः, अबलानां=स्त्रीणां, हारीणि=मौक्तिकमाल्यधारकाणि, हारीणि=मनोहराणीति भावः । एतादृशानि, वृन्दानि=समूहान्, नश्यन्ति=पलायमानानि, ददर्श=दृष्टवान् ।

॥व्युत्पत्तिः॥ अबलानाम्—अविद्यमानं बलं यासां तासां, नञ्बहुव्रीहिः । अबलानां—"स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।" इत्यमरः । अत्र नञ् अल्पाऽर्थकः । हारीणि—हाराः सन्ति येषां तानि, "अत इनिठनौ" इतीनिप्रत्ययः ।

हारीणि—हरन्तीति तच्छीलानि, "सुप्यजातौ णिनिस्ताच्छील्ये" इति ताच्छील्ये णिनिः । पादद्वयस्य चक्रवाकमिथुनवदवस्थितत्वात् अत्र मिथुनयमकम् । तनुमध्यावृत्तं— "त्यौ चेत्तनुमध्या" इति तल्लक्षणम् ।

ॐभाषाऽर्थः—हनूमान्जीने रत्नरहित स्त्रियोंके हारको धारण करनेवाले मनोहर समूहोंको भागते हुए देखा ॥ १२ ॥

**नारीणामपनुनुदुर्न देहखेदान् नाऽऽरीणाऽमलसलिला हिरण्यवाप्यः ।**
**नाऽऽरीणामनलपरीतपत्रपुष्पान् नाऽरीणामभवदुपेत्य शर्म वृक्षान् ॥१३॥**

**अन्वयः**—आरीणाऽमलसलिला हिरण्यवाप्यः नारीणां देहखेदान् न अपनुनुदुः । अनलपरीतपत्रपुष्पान् वृक्षान् उपेत्य ( स्थितानाम् ) आरीणां नारीणां शर्म न अभवत् ।

**व्याख्या**—आरीणाऽमलसलिलाः=गतनिर्मलजलाः, हिरण्यवाप्यः=स्वर्णघटितदीर्घिकाः, नारीणां = स्त्रीणां, देहखेदान् = अग्निजनितान् शरीरतापान्, न अपनुनुदुः = न अपनीतवत्यः । अनलपरीतपत्रपुष्पान् = अग्निव्याप्तदलकुसुमान्, वृक्षान्=तरून्, उपेत्य=गत्वा, स्थितानामिति शेषः । आरीणाम्=अरिसम्बन्धिनीनां, नारीणां = स्त्रीणां, शर्म = सुखं, न अभवत्=नो जातम् ।

ॐव्युत्पत्तिःॐ आरीणाऽमलसलिलाः—आङ्पूर्वकात् "रीङ् स्रवणे" इति धातोः "स्वादय ओदित" इति ओदित्त्वाऽतिदेशात् "ओदितश्च" इति निष्ठानत्वम् । आरीणम् अमलं सलिलं यासु ताः । हिरण्यवाप्यः—हिरण्यघटिता वाप्यः, मध्यमपदलोपी समासः । "वापी तु दीर्घिका" इत्यमरः । अपनुनुदुः—अपपूर्वकात् "णुद प्रेरणे" इति धातोर्लिट् । अनलपरीतपत्रपुष्पान्—अनलपरीतानि पत्रपुष्पाणि येषां ते अनलपरितपत्रपुष्पास्तान् । आरीणाम्—अरीणामिमा आर्यस्तासां, "तस्येदम्" इत्यण्, तदन्तात् "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति ङीप् । शर्म—"शर्म शातसुखानि च"इत्यमरः । अत्र प्रतिपदं पुष्पफलस्येव मूलेऽवस्थितत्वाद् वृन्तयमकम् । प्रहर्षिणी वृत्तम् । तल्लक्षणं यथा—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।" इति ।

ॐभाषाऽर्थःॐ निर्मल जलसे युक्त सुवर्णघटित वापियोंने स्त्रियोंके दाहजन्य शरीरके दुःखोंको नहीं मिटाया । अग्निसे व्याप्त पत्ते और फूलोंसे युक्त वृक्षोंके पास जाकर रही हुई शत्रुओंकी स्त्रियोंको सुख नहीं हुआ ॥ १३ ॥

**अथ लुलितपतत्रिमालं रुग्णासनबाणकेशरतमालम् ।**
**स वनं विविक्तमालं सीतां द्रष्टुं जगामाऽलम् ॥ १४ ॥**

**अन्वयः**—अथ सीतां द्रष्टुम् अलं सः लुलितपतत्रिमालं रुग्णासनबाणकेशरतमालं विविक्तमालं वनं जगाम ।

**व्याख्या**—अथ = दाहाऽनन्तरं, सीतां=जानकीं, द्रष्टुं=विलोकितुम्, अलं=

समर्थः, सः = हनूमान्, लुलितपतत्रिमालं = चलितपक्षिसंहति, रुग्णाऽसनबाणकेशरतमालं=भग्नसर्जकग्रन्थिकानागकेशरतापिच्छं, विविक्तमालं = पवित्रमाल्यं, वनम् = अशोकवनिकाख्यमुपवनं, जगाम = गतः ।

ॐव्युत्पत्तिःॐ लुलितपतत्रिमालं—लुलिता पतत्रिमाला यस्मिंस्तत् । रुग्णाऽसनबाणकेशरतमालं—रुग्णाः ( भग्नाः ) असनबाणकेशरतमाला यस्मिंस्तत् । विविक्तमालं—विविक्ता माला यस्मिंस्तत्, "विविक्तौ पूतविजनौ" इत्यमरः । अत्र प्रतिपादं घृन्तादुपरि पुष्पमिवाऽवस्थितत्वात् पुष्पयमकम् । अत्र आर्याच्छन्दसा भाव्यं, परं प्रथमचरणे त्रयोदश मात्रा वर्त्तन्ते, अतश्चिन्त्यमेवत्(१) ।

ॐभाषाऽर्थःॐ दाहके अन्तर सीताजीको देखनेके लिए समर्थ हनूमान्‌जी जहांसे पक्षियोंका समूह चला गया है और तोड़े गये सर्ज, बाण, नागकेशर और तमालसे युक्त, निर्मल मालाओंसे संपन्न, ऐसे अशोकवनिकाको चले गये ॥ १४॥

**घनगिरीन्द्रविलङ्घनशालिना वनगता वनजद्युतिलोचना ।**
**जनमता ददृशे जनकाऽऽत्मजा तरुमृगेण तरुस्थलशायिनी ॥ १५ ॥**

**अन्वयः**— घनगिरीन्द्रविलङ्घनशालिना तरुमृगेण वनगता वनजद्युतिलोचना जनमता तरुस्थलशायिनी जनकात्मजा ददृशे ।

व्याख्या—घनगिरीन्द्रविलङ्घनशालिना = मेघपर्वतेन्द्राऽतिक्रमणशोभिना, तरुमृगेण = हनूमता, वनगता = अशोकवनिकां संप्राप्ता, वनजद्युतिलोचना = पद्मकान्तिनयना, जनमता = लोकविदिता, पतिव्रतेयमिति शेषः । तरुस्थलशायिनी = वृक्षस्थलशयनशीला, जनकात्मजा = सीता, ददृशे = दृष्टा ।

ॐव्युत्पत्तिःॐ घनगिरीन्द्रविलङ्घनशालिना = घना इव गिरीन्द्राः, तेषां विलङ्घनेन शाडते ( डलयोरभेदात् शालते ) शोभते तच्छीलः घनगिरीन्द्रविलङ्घनशाली, तेन । तरुमृगेण—तरुचारी मृगस्तरुमृगस्तेन, मध्यमपदलोपी समासः । वनजद्युतिलोचना—वने जातं वनजं, "सप्तम्यां जनेर्डः" इति डः । वनजस्येव द्युतिर्ययोस्ते वनजद्युतिनी, तादृशे लोचने यस्याः सा, "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति प्राप्तस्य ङीषः "न क्रोडादिबह्वचः" इति प्रतिषेधः । जनमता—मतेत्यत्र "मनु अवबोधने" इति धातोः निष्ठायां क्तप्रत्ययः, तदन्तयोगे प्राप्तायाः "कर्तृकर्मणोः कृति" इति कर्तरि षष्ठ्याः

---

(१) "अत्रानुक्तं गाथा" ( पि० सू० ८।१ ) इति पिङ्गलोक्त्या "विषमाक्षरपादं वा पादैरसमं दशधर्मवत् । यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥" (५।१२) इति भट्टकेदारोक्त्या च विषमाक्षरपादत्वादिदं गाथावृत्तम् । 'तथा पादान्तगोऽपी वेत्युक्तेरन्त्यवर्णस्य लघुत्वाद्द्वादशमात्रा एव, 'पत्रिमालम्' इति पाठः साधुरिति भरत इति । ( सम्पादकः )

"न लोकाऽव्ययनिष्ठाखलर्थतृनाम्" इति निषेधः। जनैः मता "कर्तृकरणे कृता बहुलम्" इति समासः। मतेत्यत्र "मतिबुद्धि" इत्यादिना विहितः क्तप्रत्यय इति स्वीकारे तु "क्तेन च पूजायाम्" इति समासप्रतिषेधः स्यात्। तरुस्थलशायिनी—तरुमूलस्थलं तरुस्थलं, तस्मिन् शेते इति "व्रते" इति णिनिः, तदन्तात् "ऋन्नेभ्यो ङीप्" इति ङीप्। ददृशे—कर्मणि लिट्। पादानामादौ मध्ये च घनवनजनतरुशब्दानां यमितत्वात् आदिमध्ययमकम्। द्रुतविलम्बितं वृत्तम्।

※भाषाऽर्थः※ मेघसदृश श्रेष्ठ पर्वतोंको लाँघनेवाले हनूमान्‌जीने अशोकवनिकामें स्थित, कमलसदृश कान्तिवाले लोचनोंसे युक्त, लोकोंसे जानी गई, पेड़के मूलप्रदेशमें अवस्थित स्थलमें व्रतके कारणसे सोनेवाली सीताजीको देखा ॥ १५ ॥

कान्ता सहमाना दुःखं च्युतभूषा ।
रामस्य वियुक्ता कान्ता सहमाना ॥ १६ ॥

अन्वयः—कान्ता दुःखं सहमाना च्युतभूषा वियुक्ता सहमाना रामस्य कान्ता ( तरुमृगेण ददृशे )।

व्याख्या—कान्ता = सुन्दरी, दुःखं = कष्टं, वियोगजमिति भावः। सहमाना= मर्षयन्ती, च्युतभूषा = विगताऽलङ्कारा, वियुक्ता = वियोगिनी, सहमाना = मानसहिता, त्रिलोकनायकं रामं परित्यज्य राक्षसं न स्वीकरिष्यामीत्यास्माऽभिमानेन युक्तेति भावः। रामस्य=रामचन्द्रस्य, कान्ता=प्रिया, सीतेत्यर्थः, "तरुमृगेण ददृशे" इति पूर्वश्लोकस्याभ्यां पदाभ्यां सम्बन्धः, हनूमता दृष्टेत्यर्थः।

※व्युत्पत्तिः※ कान्ता—"कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्।" इत्यमरः। सहमाना—सहत इति "षह मर्षणे" इति धातोर्लटः शानजादेशः "आने मुक्" इति मुगागमश्च। सहमाना—मानेन सहिता "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सभानस्य विकल्पत्वात्पक्षे तदभावः। "मानश्चित्तसमुन्नतिः" इत्यमरः। कान्ता—"विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना। प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥" इत्यमरः। पादद्वयाऽतिक्रमाद्विपथेन ( विमार्गेण ) यमितत्वाद्विपथयमकम्। तनुमध्या वृत्तम्।

※भाषाऽर्थः※ सुन्दरी, दुःखको सहनेवाली, अलङ्कारोंसे रहित, वियोगिनी, अभिमानसे युक्त रामकी प्रिया सीताजीको हनुमान्‌जीने देखा ॥ १६ ॥

मितमवददुदारं तां हनूमान् मुदाऽरं
रघुवृषभसकाशं यामि देवि! प्रकाशम्।
तव विदितविषादो दृष्टकृत्स्नाऽऽमिषादः
श्रियमनिशमवन्तं पर्वतं माल्यवन्तम् ॥ १७ ॥

अन्वयः—"हे देवि ! तव विदितविषादो दृष्टकृत्स्नाऽऽमिषादः ( अहम् ) रघुवृषभसकाशं श्रियम् अनिशम् अवन्तं माल्यवन्तं पर्वतं प्रकाशम् अरं यामि" ( इति ) हनूमान् तां मुदा मितम् उदारम् अवदत् ।

व्याख्या—हे देवि = हे राज्ञि !, तव=भवत्याः, विदितविषादः = ज्ञातखेदः, दृष्टकृत्स्नाऽऽमिषाऽदः=वीक्षिताऽशेषराक्षसः, अहमिति शेषः । रघुवृषभसकाशं=रामसमीपं, श्रियं = शोभाम्, अनिशं = निरन्तरम्, अवन्तं=रक्षन्तं, माल्यवन्तं=माल्यवन्नामकं, पर्वतं = शैलं, प्रकाशं = प्रकटम्, अरं = शीघ्रं, यामि = गच्छामि, ( इति= इत्थम् ) हनूमान् = वायुपुत्रः, तां = सीतां, मुदा = हर्षेण, मितम् = अल्पाक्षरम्, उदारं = महाऽर्थसंपन्नं, वचनम्, अवदत् = अब्रवीत् ।

❀व्युत्पत्तिः❀ दृष्टकृत्स्नाऽऽमिषादः—आमिषम् अदन्तीति आमिषादाः, "कर्मण्यण्" इत्यण् "वाऽसरूपोऽस्त्रियाम्" इति वचनात् "अदोऽनन्ने" इति विट्प्रत्ययेनाऽणो विकल्पेन बाधनात् । दृष्टाः कृत्स्ना आमिषादा येन सः । अवन्तम्—अवतीति अवन्, तम् । लटः शत्रादेशः । अरं—"लघु क्षिप्रमरं द्रुतम्" इत्यमरः । पादस्य मध्ये अन्ते च यमितत्वात् मध्यान्तयमकम् । मालिनीवृत्तम् ।

❀भाषाऽर्थः❀ "हे देवि ! आपके विषादको जाननेवाला और सब राक्षसोंको देखनेवाला मैं, रामके समीप, शोभाको निरन्तर पालन करनेवाले माल्यवान् नामके पर्वतको प्रकाश रूपसे शीघ्र जाता हूं" इस प्रकारसे हनूमान्‌जीने सीताजीको हर्षके साथ परिमित और महान् अर्थसे संपन्न वाक्य कहा ॥ १७ ॥

**उदपतद्वियदप्रगमः परैरुचितमुन्नतिमत्पृथुसत्त्ववत् ।**
**रुचितमुन्नतिमत्पृथुसत्त्ववत्प्रतिविधाय वपुर्भयदं द्विषाम् ॥ १८ ॥**

अन्वयः—परैः अप्रगमः वपुः रुचितमुत् नतिमत् पृथुसत्त्ववत् द्विषां भयदं प्रतिविधाय रुचितम् उन्नतिमत् पृथुसत्त्ववत् वियत् उदपतत् ।

व्याख्या—परैः = शत्रुभिः, अप्रगमः अनभिभवनीयः, हनूमानिति शेषः । वपुः = शरीरं, रुचितमुत् = तुष्टहर्षकारकं, नतिमत् = नमनयुक्तं, देवनमस्कारकमिति भावः । यद्वा—रुचितं = दीप्तियुक्तम्, उन्नतिमत् = उच्छ्राययुक्तं, पृथुसत्त्ववत्= सत्त्वप्राशस्त्ययुक्तं, द्विषां शत्रूणां, भयदं = भीतिकारकं, प्रतिविधाय=कृत्वा, रुचितं= दीप्तियुक्तं, तदानीं निर्मलत्वादिति भावः । उन्नतिमत्=उच्छ्राययुक्तं, पृथुसत्त्ववत्=विस्तीर्णप्राणियुक्तं, वियत्=आकाशम्, उदपतत्=उत्पपात ।

❀व्युत्पत्तिः❀ अप्रगमः—न प्रगम्यते इति, "ग्रहवृदृनिश्चिगमश्च" इति कर्मण्यप् । "कर्तृकर्मणोः कृति" इत्यत्र "विभाषोपसर्गे" इति मण्डूकप्लुत्याऽनुवर्तनीयम् ,

सोपसर्गस्य कृतः प्रयोगे विभाषया षष्ठ्याः "परैरि"त्यत्र तृतीया इति जयमङ्गलः। अथवा परैरित्यस्य रुचितमित्यत्र सम्बन्धः, उत्कृष्टैर्जन्तुभिः शोभितमित्यर्थः। अप्रगमः—अन्येषामिति शेषः। रुचितमुत्—रुचितान्मोदयतीति, क्विप्प्रत्ययः। अत्र णिजर्थोऽन्तर्भूतः। नतिमत्—नतिरस्ति यस्मिंस्तत्, मतुप्प्रत्ययः। पृथुसत्त्ववत्—पृथुसत्त्वमस्ति यस्मिंस्तत्, मतुप्प्रत्ययः। पृथुसत्त्ववत्—पृथवश्च ते सत्त्वाः पृथुसत्त्वाः, "सत्त्वमस्त्री तु जन्तुषु" इत्यमरः। पृथुसत्त्वाः सन्ति यस्मिंस्तत्। द्वयोः पादयोर्मध्ये पादद्वयस्य यमितत्वात् गर्भयमकम्। द्रुतविलम्बितं वृत्तम्।

※भाषाऽर्थः※ शत्रुओंसे अधृष्य हनूमान्‌जी शरीरको, सन्तुष्टजनोंको हर्षकारक, देवताओंको नमस्कार करनेवाला, सत्त्वगुणसे सम्पन्न और शत्रुओंको भय उत्पन्न करनेवाला बनाकर दीप्तियुक्त, उन्नत और विस्तीर्ण जन्तुओंसे सम्पन्न आकाशको उछल पड़े ॥ १८ ॥

**बभौ मरुत्वान् विकृतः समुद्रो, बभौ मरुत्वान् विकृतः समुद्रः।**
**बभौ मरुत्वान् विकृतः समुद्रो, बभौ मरुत्वान् विकृतः स मुद्रः ॥ १९ ॥**

**अन्वयः**—विकृतः समुद्रो मरुत्वान् बभौ । विकृतः समुद्रो मरुत्वान् बभौ। मरुत्वान् विकृतः समुद्रो बभौ । मुद्रः स मरुत्वान् विकृतः ( सन् ) बभौ ।

**व्याख्या**—विकृतः = वनभङ्गादिविविधकर्मकर्ता, समुद्रः = मुद्रासहितः, सीताऽभिज्ञानचूडामणियुक्त इति भावः । मरुत्वान् = वायुपुत्रो हनूमान्, बभौ = दिदीपे । विकृतः = विकारयुक्तः, रावणपरिभवादिति भावः । समुद्रः = अप्सरोभिः सहितः, मरुत्वान् = देवाऽधिपतिः, इन्द्र इत्यर्थः । बभौ=दिदीपे, हनूमद्विक्रमजनितेन हर्षेणेति भावः । मरुत्वान् = प्रचुरवायुयुक्तः, हनूमदुत्पतनेनेति भावः । अत एव—विकृतः = उल्लङ्घितमर्यादः, समुद्रः = सागरः, बभौ = दिदीपे, धातूपसर्गाणामनेकार्थत्वादत्र भातिः सत्तायां प्रयुक्त इति जयमङ्गलः । मुद्रः = हर्षप्रदः, पुत्रो मे सुखेन यास्यतीति मनसि कृत्वेति शेषः । सः = प्रसिद्धः, मरुत्वान् = प्राणादिवाय्वधीश्वरः, वायव्यलोकपालो वायुदेव इति भावः । विकृतः = मन्दगतिः सन्, बभौ = दीप्यते स्म, वाति स्म इत्यर्थ इति जयमङ्गलः ।

※व्युत्पत्तिः※ विकृतः—विविधं ( वनभङ्गादिकम् ) कृतं येन सः । यद्वा विविधं ( नैकविधम् ) दुष्टं वृत्तं वा कृन्तति (छिनत्ति) इति विकृतः, "इगुपधज्ञाप्रीकिरः कः" इति कः। समुद्रः—मुद्रया सहितः। मरुत्वान्—मरुत् ( वायुः ) पितृत्वेन अस्याऽस्तीति, "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुप्, "झयः" इति मस्य वः। "तसौ मत्वर्थे" इति भत्वात् "झलां जशोऽन्ते" इति जश्त्वस्य अभावः । समुद्रः—मुद्राभिः ( अप्सरोभिः ) सहितः। मरुत्वान्=म तः (देवाः) अनुजीवित्वेन सन्ति यस्य सः,

पूर्ववत् व्याकरणप्रक्रिया ज्ञेया। मुद्रः—मुदं रातीति, मुत्पूर्वकात् "रा दाने" इति धातोः "आतोऽनुपसर्गे क" इति कः। अत्र चतुर्णामपि पादानां सदृशत्वात् सर्वयमकम्। अत्र उपेन्द्रवज्रा वृत्तम्—"उपेन्द्रवज्रा जतजास्ततो गौ" इति तल्लक्षणम्।

❀भाषाऽर्थः❀ वनभङ्ग आदिकर्म करनेवाले और सीताजीके अभिज्ञान चूडामणिको लेनेवाले वायुपुत्र हनूमान्जी शोभित हुए। रावणके परिभवसे विकारयुक्त और अप्सराओंसे युक्त देवराज इन्द्र शोभित हो गये। हनूमान्जीके उछलनेसे वायुगतिसे युक्त अतः मर्यादाको उल्लङ्घित करनेवाला समुद्र शोभित हुआ। हर्ष देनेवाले, प्रसिद्ध और प्राण आदि वायुवर्गके अधिपति लोकपाल वायुदेव मन्दगतिवाले होते हुए शोभित हुए ॥ १९ ॥

**अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः।**
**कर्कशं प्रथितं धाम ससत्त्वं पुष्करेक्षणम् ॥ २० ॥**

**अन्वयः**—( हनूमान् ) वरं तुङ्गं रुचिरं पुरः कर्कशं प्रथितं धाम ससत्त्वं पुष्करेक्षणां भूभृतम् अभियाता।

**व्याख्या**—( हनूमान् = वायुपुत्रः ) वरं = श्रेष्ठं, तुङ्गम् = उन्नतं, महाकुलप्रसूतत्वात्सर्वेषामुपरि स्थितमिति भावः। रुचिरं = सुन्दरं, पुरः = अग्रतः, वक्षःस्थल इति भावः। कर्कशं = कठोरं, प्रथितं = प्रख्यातं, धाम = स्थानं, वर्णाश्रमधर्माणामिति शेषः। ससत्त्वं = सबलं सत्त्वगुणोपेतं वा, पुष्करेक्षणं = पद्मलोचनं, भूभृतं = राजानं, रामचन्द्रमित्यर्थः। अभियाता = आभिमुख्येन यास्यति।

❀व्युत्पत्तिः❀ रुचिरं—"सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्" इत्यमरः। पुष्करेक्षणं—पुष्करे इव ईक्षणी यस्य स पुष्करेक्षणस्तम्। भूभृतं—भुवं बिभर्तीति भूभृत्तम्, क्विप्। अभियाता = अभिपूर्वकात् याधातोर्लुट्।

❀भाषाऽर्थः❀ हनूमान्जी श्रेष्ठ, उन्नत, कठोर छातीवाले, प्रख्यात, वर्ण और आश्रमोंके धर्मोंके स्थान ( आधार ), बलसम्पन्न वा सत्त्वगुणी कमलके तुल्य नेत्रों वाले रामके संमुख जायंगे ॥ २० ॥

**अभियाऽताऽऽवरं तुङ्गं भूभृतं रुचिरं पुरः।**
**कर्कशं प्रथितं धाम ससत्त्वं पुष्करे क्षणम् ॥ २१ ॥**

**अन्वयः**—पुरः भूभृतम् अभिया ( हनूमता ) अताऽऽवरं तुङ्गं रुचिरं कर्कशं ससत्त्वं धाम पुष्करे क्षणं प्रथितम्।

**व्याख्या**—पुरः = नगर्याः, लङ्काया इत्यर्थः। भूभृतं = पर्वतम्, अङ्गदाद्यधिष्ठितं महेन्द्रमिति भावः। अभिया = अभिगच्छता, हनूमतेति शेषः। अताऽऽवरं = वायुरोधकं, सूर्यरोधकं वा, तुङ्गम् = उन्नतं, रुचिरं = सुन्दरं, कर्कशं = कठोरं, सस-

रवं = प्राणियुक्तं, धाम = तेजः, पुष्करे=आकाशे, क्षणं=मुहूर्तं, प्रथितं=विस्तारितम्।

ॐव्युत्पत्तिःॐ अभिया—अभियातीति अभियास्तेन, अभिपूर्वकात् 'या' धातोः "अन्येभ्योऽपि दृश्यते" इति क्विप्। तृतीयैकवचने "यचि भम्" इति भसंज्ञत्वात् "आतो धातोः" इत्याकारलोपः। अताऽऽवरम्—अततीति अतः वायुरादित्यो वा "अत सातत्यगमने" इति धातोः पचाद्यच्। आवृणोतीति आवरः, "ग्रहवृदृनिश्चिगमश्च" इत्यप्। अतस्याऽऽवरम्। पुष्करे—"द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्।" इत्यमरः। क्षणं—"कालाऽध्वनोरत्यन्तसंयोगे" इति द्वितीया। पूर्वोत्तरश्लोकद्वयस्य एकरूपेण यमितत्वान्महायमकम्।

ॐभाषाऽर्थःॐ लङ्कासे महेन्द्र पर्वतको जानेवाले हनूमान्‌जीने वायु अथवा सूर्यको रोकनेवाला अत एव उन्नत, सुन्दर, कठोर, प्राणियुक्त तेजको आकाशमें कुछ समय तक फैलाया ॥ २१ ॥

**चित्रं चित्रमिवाऽऽयातो विचित्रं तस्य भूभृतम्।**
**हरयो वेगमासाद्य संत्रस्ता मुमुहुर्मुहुः ॥ २२ ॥**

**अन्वयः**—चित्रं चित्रम् इव भूभृतम् आयातः तस्य विचित्रं वेगम् आसाद्य हरयः संत्रस्ताः ( सन्तः ) मुहुः मुमुहुः।

**व्याख्या**—चित्रं = शबलं, गैरिकाभिरिति शेषः। अत एव चित्रम् इव=आलेख्यम् इव, भूभृतं = पर्वतम्, आयातः = आगच्छतः, तस्य = हनूमतः, विचित्रम् = अद्भुतं, वेगं = जवम्, आसाद्य = प्राप्य, हरयः = वानराः, संत्रस्ताः = भीताः सन्तः, मुहुः = वारंवारम्, मुमुहुः = मोहं प्रापुः, इदं किमिति विमृश्येति भावः।

ॐव्युत्पत्तिःॐ चित्रं—"चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे।" इत्यमरः। चित्रम्—"आलेख्याऽऽश्चर्ययोश्चित्रम्" इत्यमरः। श्लोकस्यादावन्ते च यमितत्वात् श्लोकाद्यन्तयमकम्।

ॐभाषाऽर्थःॐ गैरिक आदि धातुओंसे विचित्र अत एव चित्रके सदृश पर्वतको आनेवाले हनूमान्‌जीके अद्भुत वेगको प्राप्तकर वानरलोग डरते हुए वारंवार मोहको प्राप्त हो गये ॥ २२ ॥

समाप्ता यमकभेदाः।

अवसिताः शब्दाऽलङ्काराः।

**गच्छन् स वारीण्यकिरत्पयोधेः कूलस्थितांस्तानि तरूनधुन्वन्।**
**पुष्पाऽऽस्तरांस्तेऽङ्गसुखानतन्वंस्तान् किन्नरा मन्मथिनोऽध्यतिष्ठन्॥२३॥**

**अन्वयः**—गच्छन् स पयोधेः वारीणि अकिरत्, तानि कूलस्थितान् तरून् अधुन्वन्, ते अङ्गसुखान् पुष्पाऽऽस्तरान् अतन्वन्, तान् मन्मथिनः किन्नरा अध्यतिष्ठन्।

**व्याख्या**—गच्छन् = व्रजन्, वेगेनेति शेषः। सः = हनूमान्, पयोधेः = समुद्रस्य, वारीणि=जलानि, अकिरत्=निक्षिप्तवान्, वेगेनेति शेषः। तानि = पयोधिवारीणि, कूलस्थितान् = तटस्थितान्, तरून् = वृक्षान्, अधुन्वन्=कम्पितवन्ति। ते=कूलस्थितास्तरवः, अङ्गसुखान्=शरीरसुखहेतून्, कोमलस्पर्शित्वादिति शेषः। पुष्पाऽऽस्तरान्=कुसुमसमूहान्, अतन्वन्-विस्तारितवन्तः, तान् = अङ्गसुखान् पुष्पाऽऽस्तरान्, मन्मथिनः=कामवन्तः, किन्नराः = किम्पुरुषाः, अध्यतिष्ठन्=अध्यासितवन्तः।

※व्युत्पत्तिः※ पयोधेः—पयांसि धीयन्ते अस्मिन् इति पयोधिस्तस्य, "कर्मण्यधिकरणे च" इति किप्रत्ययः। अधुन्वन्—"धुञ् कम्पने" इति स्वादिस्थधातोर्लङ्। तान्—"अध्यतिष्ठन्" इति अधिपूर्वकस्य स्थाधातोः प्रयोगे "अधिशीङ्स्थाऽऽसां कर्म"ेति अधिकरणस्य कर्मसंज्ञा।

अर्थाऽलङ्कारस्तु दीपकरूपकादिभेदेनाऽनेकप्रकारः। तत्र वाक्यार्थप्रकाशनाद्दीपकमुच्यते। तदादिमध्याऽन्त्यभेदात्त्रिविधम्। तत्रेदमादिदीपकस्योदाहरणम्। "क्रियापदस्यादौ श्रूयमाणत्वादादिदीपकम्। द्विविधं ह्यादिदीपकम्। एकतिङनेकतिङ्सहितं च। तत्र यत्पूर्वं तदेकमप्यनेकार्थप्रकाशकम्।........यत्तु द्वितीयं तत्समस्तवाक्याऽर्थप्रकाशकं यथेदमेव। तत्र ह्युत्तरेषां वाक्याऽर्थानामाद्येनैव दीपनात्। तस्मिन्नसति शेषाणामस्फुटत्वात्।........" इति जयमङ्गलः। नव्यालङ्कारिकमते त्विदमेकावल्युदाहरणम्। "यथा—गृहीतमुक्तरीत्यर्थश्रेणिरेकावलीवता। नेत्रे कर्णाऽन्तविश्रान्ते कर्णौ दोर्मूलदोलिनौ॥" इति।

※भाषाऽर्थः※ जाते हुए हनूमान्जीने वेगसे समुद्रके जलको फेंक दिया, जलने किनारेपर स्थित पेड़ोंको कम्पित किया, पेड़ोंने अङ्गोंके सुखजनक पुष्पसमूहोंको फैलाया और उन पुष्पसमूहोंपर कामुक किन्नर बैठ गये॥ २३॥

**स गिरिं तरुखण्डमण्डितं समवाप्य त्वरया लतामृगः।**
**स्मितदर्शितकार्यनिश्चयः कपिसैन्यैर्मुदितैरमण्डयत्॥ २४॥**

**अन्वयः**—स्मितदर्शितकार्यनिश्चयः स लतामृगः तरुखण्डमण्डितं गिरिं त्वरया समवाप्य मुदितैः कपिसैन्यैः अमण्डयत्।

**व्याख्या**—स्मितदर्शितकार्यनिश्चयः = मन्दहास्यज्ञापितसीतोपलब्धिकृतनिर्णयः, सः=पूर्वोक्तः, लतामृगः = वानरः, हनूमानित्यर्थः। तरुखण्डमण्डितं = वृक्षकदम्बभूषितं, गिरिं = पर्वतं, त्वरया = संभ्रमेण, समवाप्य = संप्राप्य, मुदितैः = प्रसन्नैः, कपिसैन्यैः = वानरसैनिकैः, अमण्डयत् = अभूषयत्।

※व्युत्पत्तिः※ स्मितदर्शितकार्यनिश्चयः—स्मितदर्शितः कार्यनिश्चयो येन सः। तरुखण्डमण्डितं—तरुखण्डेन मण्डितम्। "कदम्बे खण्डमस्त्रियाम्" इत्यमरः।

अमण्डयत्—णिजन्तात् "मडि भूषायाम्" इति भौवादिकाद्धातोः लङ्। चौरादिके तु कपिसैन्यैः करणभूतैरिति योज्यम्। अमण्डयदिति क्रियापदस्याऽन्ते निर्दिष्टत्वादन्तदीपकमिति जयमङ्गलः। अत्र सुन्दरीवृत्तं, तद्यथा—"अयुजोर्यदि सौ जगौ युजोः, सभरा ल्गौ यदि सुन्दरी तदा।" इति

ॐभाषाऽर्थःॐ मन्दहास्यसे सीताप्राप्तिको जताते हुए हनूमान्जीने वृक्षसमूहोंसे अलङ्कृत पर्वतको वेगसे प्राप्तकर प्रसन्न वानरसैनिकोंसे अलङ्कृत कराया ॥ २४ ॥

**गरुडाऽनिलतिग्मरश्मयः पततां यद्यपि संमता जवे।**
**अचिरेण कृताऽर्थमागतं तममन्यन्त तथाप्यतीव ते ॥ २५ ॥**

**अन्वयः**—यद्यपि पततां गरुडाऽनिलतिग्मरश्मयः जवे संमताः, तथापि ते तम् अतीव अचिरेण कृतार्थम् आगतम् अमन्यन्त।

**व्याख्या**—यद्यपि, पततां = गच्छतां मध्ये, गरुडाऽनिलतिग्मरश्मयः = वैनतेयवायुसूर्याः, जवे = वेगविषये, संमताः = अभिमताः, तथाऽपि ते = वानराः, तं = हनूमन्तम्, अतीव=साऽतिशयम्, अचिरेण = अल्पेनैव कालेन, कृताऽर्थं=कृतकृत्यम्, आगतम् = आयातम्, अमन्यन्त ज्ञातवन्तः।

ॐव्युत्पत्तिःॐ गरुडाऽनिलतिग्मरश्मयः—तिग्माः (तीक्ष्णाः) रश्मयो यस्य सः तिग्मरश्मिः। गरुडश्च अनिलश्च तिग्मरश्मिश्चेति द्वन्द्वः। अमन्यन्त—मन्यतेर्लङ्। क्रियापदस्य मध्ये निर्दिष्टत्वान्मध्यदीपकमिति जयमङ्गलः। अत्राऽपि सुन्दरी वृत्तम्।

ॐभाषाऽर्थःॐ यद्यपि चलनेवालोंमें गरुड, वायु और सूर्य वेगके विषयमें प्रमुख माने गये हैं, तथापि वानरोंने हनूमान्जीको अतिशय अल्प समयसे ही कृतकृत्य होकर आये हुए विचार किया ॥ २५ ॥

**व्रणकन्दरलीनशस्त्रसर्पः पृथुवक्षःस्थलकर्कशोरुभित्तिः।**
**च्युतशोणितबद्धधातुरागः शुशुभे वानरभूधरस्तदाऽसौ ॥ २६ ॥**

**अन्वयः**—तदा व्रणकन्दरलीनशस्त्रसर्पः पृथुवक्षःस्थलकर्कशोरुभित्तिः च्युतशोणितबद्धधातुरागः असौ वानरभूधरः शुशुभे।

**व्याख्या**—तदा = तस्मिन्काले, व्रणकन्दरलीनशस्त्रसर्पः = ईर्मगह्वरस्थिताऽस्त्रभुजगः, पृथुवक्षःस्थलकर्कशोरुभित्तिः = विस्तीर्णोरःस्थलकठोरविपुलकुड्यः, च्युतशोणितबद्धधातुरागः=पतितरक्तश्लिष्टगैरिकादिरागः, असौ=अयं, वानरभूधरः = कपिपर्वतः, शुशुभे=शोभते स्म।

ॐव्युत्पत्तिःॐ व्रणकन्दरलीनशस्त्रसर्पः—व्रणानि (शस्त्रकृतानि) एव कन्दराणि व्रणकन्दराणि, "मयूरव्यंसकादयश्च"ति समासः। शस्त्राणि एव सर्पाः शस्त्रसर्पाः, पूर्ववत्समासः। व्रणकन्दरेषु लीनाः शस्त्रसर्पाः यस्य सः। पृथुवक्षःस्थलकर्कशोरु-

भित्तिः—वक्षःस्थलमेव कर्कशोरुभित्तिः वक्षःस्थलकर्कशोरुभित्तिः। पृथ्वी वक्षःस्थलकर्कशोरुभित्तिर्यस्य सः। च्युतशोणितबद्धधातुरागः—शोणितमेव बद्धधातुरागः शोणितबद्धधातुरागः, च्युतः शोणितबद्धधातुरागो यस्य सः। वानरभूधरः—वानर एव भूधरः। अत्र उपमेये उपमानारोपाद्रूपकं, तल्लक्षणं यथा—

"रूपकं रूपिताऽऽरोपाद्विषये निरपह्नवे।" इति।

तत्राऽपि परम्परितरूपकं, तल्लक्षणं च यथा—

"यत्र कस्यचिदारोपः परारोपणकारणम्। तत्परम्परितम्" इति।

अत्र औपच्छन्दसिकं वृत्तं, तल्लक्षणं यथा—

"पर्यन्ते र्यौ तथैव शेषं त्वौपच्छन्दसिकं सुधीभिरुक्तम्।" इति। अत्र तथैवेत्यनेन "षड् विषमेऽष्टौ समे कला" इति पूर्वस्थवैतालीयलक्षणस्य परामर्शः।

॥भाषाऽर्थः॥ उस समय जिसके व्रणरूप गुफामें शस्त्ररूप सर्प छिपे हैं, विस्तीर्ण वक्षःस्थलरूप कठोर और महान् कुड्य ( दीवाल ) से युक्त, चूनेवाले रुधिर ही जिनमें गैरिक आदि धातुराग प्रतीत हो रहे हैं, ऐसे वानररूप पर्वत ( हनूमान्जी ) शोभित हुए॥ २६॥

**चलपिङ्गकेशरहिरण्यलताः स्फुटनेत्रपङ्क्तिमणिसंहतयः।**
**कलधौतसानव इवाऽथ गिरेः कपयो बभुः पवनजाऽऽगमने॥२७॥**

अन्वयः—अथ पवनजागमने कपयः चलपिङ्गकेशरहिरण्यलताः स्फुटनेत्रपङ्क्तिमणिसंहतयः गिरेः कलधौतसानव इव बभुः।

**व्याख्या**—अथ—हनूमद्भूधरशोभनाऽनन्तरं, कपयः = अङ्गदादयो वानराः, चलपिङ्गकेशरहिरण्यलताः = चञ्चलपीतसटासुवर्णलताः, स्फुटनेत्रपङ्क्तिमणिसंहतयः = उज्ज्वलनयनावलीरत्नसमूहाः, गिरेः = पर्वतस्य, कलधौतसानव इव = सुवर्णप्रस्था इव, बभुः = शुशुभिरे।

॥व्युत्पत्तिः॥ पवनजाऽऽगमने—पवनाज्जातः पवनजः, "पञ्चम्यामजातौ" इति डः। पवनजस्यागमने। चलपिङ्गकेशरहिरण्यलताः—पिङ्गकेशरा एव हिरण्यलताः पिङ्गकेशरहिरण्यलताः, रूपकसमासः। चलाः पिङ्गकेशरहिरण्यलता येषां ते। स्फुटनेत्रपङ्क्तिमणिसंहतयः—नेत्रपङ्क्तिरेव मणिसंहतिर्नेत्रपङ्क्तिमणिसंहतिः, स्फुटा नेत्रपङ्क्तिमणिसंहतिर्येषां ते। कलधौतसानवः—कलधौतस्य सानवः। "कलधौतं रूप्यहेम्नोः" इत्यमरः। एतदपि पिङ्गकेशराणां हिरण्यलतात्वेन नेत्रपङ्क्तेर्मणिसंहतित्वेन रूपणात् रूपकमेव, किन्तु कलधौतत्वेन सानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तं कमलकं नाम रूपकमिति जयमङ्गलः। प्रमिताक्षरा वृत्तम्।

॥भाषाऽर्थः॥ अनन्तर हनूमान्जीके आगमनमें वानरलोग चञ्चल पीतजटारूप सुवर्णलताओंसे युक्त और उज्ज्वल नेत्रपङ्क्तिरूप मणिसमूहसे संपन्न होते हुए पर्वतके सुवर्णप्रस्थोंके सदृश शोभित हुए॥ २७॥

**कपितोयनिधीन् प्लवङ्गमेन्दुर्मदयित्वा मधुरेण दर्शनेन ।**
**वचनाऽमृतदीधितीर्वितन्वन्नकृताऽऽनन्दपरीतनेत्रवारीन् ॥ २८ ॥**

**अन्वयः**—प्लवङ्गमेन्दुः कपितोयनिधीन् मधुरेण दर्शनेन मदयित्वा वचनाऽमृतदीधितीः वितन्वन् आनन्दपरीतनेत्रवारीन् अकृत ।

**व्याख्या**—प्लवङ्गमेन्दुः = वानरचन्द्रः, हनूमानित्यर्थः, कपितोयनिधीन्=वानरसमुद्रान्, अङ्गदादीनित्यर्थः, मधुरेण = मनोहरेण, दर्शनेन=विलोकनेन, मदयित्वा= हर्षयित्वा, वचनाऽमृतदीधितीः = वाक्यपीयूषमयकिरणान्, वितन्वन् = विस्तारयन्, आनन्दपरीतनेत्रवारीन् = हर्षसंजातनयनजलान्, कपितोयनिधीनिति शेषः । अकृत= कृतवान् । यथा चन्द्र उदयेन समुद्रान्मदयित्वा पीयूषमयकिरणान् विस्तार्य तज्जलवृद्धिं करोति तथैव हनूमानपि स्वागमनेनाऽङ्गदादीन्वानरान्प्रमोद्य वचनानि वितत्य तदानन्दाऽश्रुवृद्धिं चकारेति भावः ।

❀व्युत्पत्तिः❀ प्लवङ्गमेन्दुः—प्लवङ्गम एवेन्दुः, "मयूरव्यंसकादयश्च" इति रूपकसमासः । कपितोयनिधीन्—कपय एव तोयनिधयस्तान् । मदयित्वा—"मदी हर्षग्लेपनयोः" इति धातोः क्त्वा, घटादित्वान्मित्वे ह्रस्वत्वम् । वचनाऽमृतदीधितीः—वचनान्येव अमृतदीधितयो वचनाऽमृतदीधितयस्ताः । आनन्दपरीतनेत्रवारीन्—आनन्देन परीतं ( सञ्जातम् ) नेत्रवारि येषां ते आनन्दपरीतनेत्रवारयस्तान् । अकृत—"डुकृञ् करणे" इति धातोरात्मनेपदे लुङ्, "ह्रस्वादङ्गात्" इति सिचो लुक् । एतद्रूपकं शेषाऽर्थाऽन्ववसितम् । रूपितादन्यो योऽर्थः "आनन्दपरीतनेत्रवारीन्" इति स शेषः, तेनाऽन्ववसितं युक्तमवतंसकं नाम विसदृशस्याऽर्थस्य रूपितत्वात् । तदेवाऽन्यैः खण्डरूपकमित्युच्यते इति जयमङ्गलः । औपच्छन्दसिकं वृत्तम् ।

❀भाषाऽर्थः❀ वानररूप चन्द्र ( हनूमान्‌जी ) ने अङ्गदादि वानररूप समुद्रोंको मनोहर दर्शनसे प्रसन्नकर वचनरूप अमृतमय किरणोंको फैलाते हुए इनको आनन्दाश्रुसे पूर्ण नेत्रसे युक्त बनाया ॥ २८ ॥

**परिखेदितविन्ध्यवीरुधः परिपीताऽमलनिर्झराऽम्भसः ।**
**दुधुवुर्मधुकाननं ततः कपिनागा मुदिताऽङ्गदाऽऽज्ञया ॥ २९ ॥**

**अन्वयः**—ततो मुदिताऽङ्गदाज्ञया परिखेदितविन्ध्यवीरुधः परिपीताऽमलनिर्झराऽम्भसः कपिनागाः मधुकाननं दुधुवुः ।

**व्याख्या**—ततः = अनन्तरं, मुदिताऽङ्गदाऽऽज्ञया = प्रीताऽङ्गदाऽऽदेशेन, परिखेदितविन्ध्यवीरुधः = परिमृदितविन्ध्याऽद्रिप्रतानिलताः, परिपीताऽमलनिर्झराम्भसः = आचान्तनिर्मलझरजलाः, कपिनागाः = वानरहस्तिनः । मधुकाननं = मधुवनं, तदाख्यं सुग्रीवस्य क्रीडोद्यानमिति भावः । दुधुवुः=कम्पितवन्तः ।

ॐव्युत्पत्तिःॐ परिखेदितविन्ध्यवीरुधः—णिजन्तात् परिपूर्वकात् "खिद् परिघाते" इति धातोः क्तप्रत्यये परिखेदितपदसिद्धिः। परिखेदिता विन्ध्यवीरुधो यैस्ते, "लता प्रतानिनी वीरुत्" इत्यमरः। परिपीताऽमलनिर्झराऽम्भसः—परिपीतममलं निर्झराऽम्भो यैस्ते, "वारिप्रवाहो निर्झरो झरः" इत्यमरः। कपिनागाः—कपय एव नागाः, रूपकसमासः। पश्चिमार्द्धे कपिनागा इति रूपितत्वादर्धरूपकमिति जयमङ्गलः। ललितं वृत्तम्।

ॐभाषाऽर्थःॐ अनन्तर प्रसन्न अङ्गदकी आज्ञासे विन्ध्यपर्वतकी फैलनेवाली लताओंको मर्दित करनेवाले और निर्मल झरनेके जलको पीनेवाले हाथियोंके सदृश वानरोंने सुग्रीवके मधुवनको कम्पित किया॥ २९॥

विटपिमृगविषादध्वान्तनुद्वानराऽर्कः
प्रियवचनमयूखैर्बोधिताऽर्थाऽरविन्दः।
उदयगिरिमिवाऽद्रिं सम्प्रमुच्याऽभ्यगात् खं
नृपहृदयगुहास्थं घ्नन् प्रमोहाऽन्धकारम्॥ ३०॥

अन्वयः—विटपिमृगविषादध्वान्तनुत् प्रियवचनमयूखैः बोधिताऽर्थाऽरविन्दः नृपहृदयगुहास्थं प्रमोहाऽन्धकारं घ्नन् वानराऽर्कः उदयगिरिम् इव अद्रिं सम्प्रमुच्य खम् अभ्यगात्।

व्याख्या—विटपिमृगविषादध्वान्तनुत् = वानरखेदाऽन्धकारनाशकः, प्रियवचनमयूखैः = अभीष्टवाक्यकिरणैः, बोधिताऽर्थारविन्दः=विकासितवाच्यकमलः, नृपहृदयगुहास्थं = राजहृद्गह्वरस्थितं, प्रमोहाऽन्धकारं = विषादतिमिरं, घ्नन्=हनिष्यन्, वानराऽर्कः=कपिसूर्यः, हनूमानित्यर्थः। उदयगिरिम् इव = पूर्वपर्वतम् इव, अद्रिं = महेन्द्रपर्वतं, सम्प्रमुच्य=संत्यज्य, खम् = आकाशम्, अभ्यगात् = अभिगतः।

ॐव्युत्पत्तिःॐ विटपिमृगविषादध्वान्तनुत्—विटपिचारिणो मृगा विटपिमृगाः (वानराः), मध्यमपदलोपी समासः। विषादः (सीता कथमन्वेषणीयेत्याकारकः खेदः) एव ध्वान्तं विषादध्वान्तम्। "अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः।" इत्यमरः। विटपिमृगाणां विषादध्वान्तं नुदतीति, सोपपदात् "णुद प्रेरणे" इति धातोः क्विप्। प्रियवचनमयूखैः—प्रियवचनान्येव मयूखास्तैः। बोधिताऽर्थाऽरविन्दः—अर्थ एव अरविन्दमर्थाऽरविन्दं, बोधितम् अर्थाऽरविन्दं येन सः। नृपहृदयगुहास्थं—नृपहृदयमेव गुहा नृपहृदयगुहा, तस्यां तिष्ठतीति नृपहृदयगुहास्थं, तत्। प्रमोहाऽन्धकारं—प्रमोह एव अन्धकारं प्रमोहाऽन्धकारं, तत्। घ्नन्—हन्तीति, "वर्तमानसमीप्ये वर्तमानवद्वा" इति भविष्यति लटः शत्रादेशः। वानराऽर्कः—वानर एवाऽर्कः। उदयगिरिम्—उदेत्यस्मादिति उदयः, "अकर्तरि च कारके" इत्यधिकृत्य "एरच्"

इत्यच् । "उदयः पूर्वपर्वतः" इत्यमरः । एतद्रूपकमन्वर्थयोपमया युक्तं ललाम नाम । यत उदेत्यस्मादित्युदयः स चाऽसौ गिरिश्चेति अनुगताऽर्थता । इति जयमङ्गलः । मालिनी वृत्तम् ।

ॐभाषाऽर्थःॐ वानरोंके विषादरूप अन्धकारको हटानेवाले, प्रियवचनरूप किरणोंसे अर्थरूप कमलको विकसित करनेवाले और राजा रामके हृदयरूप गुहा में स्थित विषादरूप अन्धकारको नष्ट करनेवाले सूर्यके सदृश हनूमानूजी उदय पर्वतके सदृश महेन्द्र पर्वतको छोड़कर आकाशके अभिमुख चले ॥ ३० ॥

**रघुतनयमगात्तपोवनस्थं विधृतजटाऽजिनवल्कलं हनूमान् ।**
**परमिव पुरुषं नरेण युक्तं समशमवेशसमाधिनाऽनुजेन ॥ ३१ ॥**

**अन्वयः**—हनूमान् तपोवनस्थं विधृतजटाऽजिनवल्कलम् अनुजेन समशमवेशसमाधिना नरेण युक्तं परं पुरुषम् इव रघुतनयम् अगात् ।

**व्याख्या**—हनूमान् = पवनतनूजः, तपोवनस्थं = नियमाश्रमस्थं, विधृतजटाऽजिनवल्कलं = धृतसटाचर्मवल्कम्, अनुजेन = कनीयसा भ्रात्रा, समशमवेशसमाधिना = तुल्यशान्तिनेपथ्यैकाग्र्येण, नरेण = नारायणाऽनुजेन, युक्तं=योगवन्तं, परम् पुरुषम् इव = पुरुषोत्तमम् इव, नारायणमिवेत्यर्थः, रघुतनयं = रामचन्द्रम्, अगात् = प्राप्तवान् । हनूमान् बदरिकाश्रमे अनुजेन नरेण युक्तं नारायणमिवाऽवरजेन लक्ष्मणेन सह वर्तमानं रामं सम्प्रापेति भावः ।

ॐव्युत्पत्तिःॐ विधृतजटाऽजिनवल्कलं—विधृतानि जटाऽजिनवल्कलानि येन तम् । समशमवेशसमाधिना—समाः शमवेशसमाधयो यस्य तेन । अत्रोपमाऽलङ्कारस्तल्लक्षणं यथा—

"साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः" । इति ।

उपमेयोपमानयोः रामनारायणयोर्वैधर्म्यरहितस्य साम्यस्यैकेन वाक्येन वाच्यत्वादुपमा ज्ञेया। तथा च औपम्यवाचकेन इवपदेन साम्यस्य द्योत्यत्वादत्र इवोपमेति जयमङ्गलः । अत्र पुष्पिताग्रा वृत्तम् ।

ॐभाषाऽर्थःॐ हनूमानूजी तपोवनमें विद्यमान, जटा, मृगचर्म और वल्कलको धारण करनेवाले एवम् छोटे भाई लक्ष्मणसे युक्त अत एव अपने सदृश शान्ति, वेश और समाधिसे युक्त छोटे भाई नरके साथ वर्तमान नारायणके सदृश रामचन्द्रजीके पास चले गये ॥ ३१ ॥

**करपुटनिहितं द धत्स रत्नं परिविरलाऽङ्गुलि निर्गताऽल्पदीप्ति ।**
**तनुकपिलघनस्थितं यथेन्दुं नृपमनमत् परिभुग्नजानुमूर्धा ॥ ३२ ॥**

**अन्वयः**—करपुटनिहितं परिविरलाऽङ्गुलिनिर्गताऽल्पदीप्ति रत्नं दधत् स परिभुग्नजानुमूर्धा ( सन् ) तनुकपिलघनस्थितम् इन्दुं यथा नृपम् अनमत् ।

**व्याख्या**—करपुटनिहितं = हस्तयुग्मन्यस्तं, परिविरलाऽङ्गुलिनिर्गताऽल्पदीप्ति= सच्छिद्रकरशाखानिःसृतस्वल्पकिरणं, रत्नं=सीताऽभिज्ञानं चूडामणिं, दधत् = धारयन्, सः = हनूमान्, परिभुग्नजानुमूर्धा = अवनतोरुपर्वमस्तकः सन्, तनुकपिलघनस्थितं = कृशपिङ्गमेघस्थम्, इन्दुं यथा = चन्द्रमिव, नृपं = राजानं, रामचन्द्रमित्यर्थः, अनमत् = प्रणतवान् ।

॥व्युत्पत्तिः॥ करपुटनिहितं—करपुटे निहितम् । परिविरलाऽङ्गुलिनिर्गताऽल्पदीप्ति—परिविरलाश्च ता अङ्गुलयस्ताभ्यो निर्गता अल्पा दीप्तयो यस्य, तत् । परिभुग्नजानुमूर्धा = जानुनी च मूर्धा च जानुमूर्धं, "द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्" इति प्राण्यङ्गत्वात्समाहारद्वन्द्वः । "जानूरुपर्वाष्ठीवदस्त्रियाम्" इत्यमरः । परिभुग्नं जानुमूर्धं यस्य स । तनुकपिलघनस्थितं—तनुश्चाऽसौ कपिलः, स चाऽसौ घनस्तत्र स्थितस्तम् । "कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ।" इत्यमरः । उपमाऽलङ्कारः । अत्र यथाशब्द उपमाद्योतकः इति जयमङ्गलः । अत्र पुष्पिताग्रा वृत्तम् ।

॥भाषाऽर्थः॥ दोनों हाथोंमें रक्खी गई, छेदवाली अङ्गुलियोंसे निकली हुई छोटी किरणोंसे युक्त सीताजीके अभिज्ञान चूडामणिको धारण करते हुए हनूमान्‌जीने जानु ( घुटना ) और शिरको झुकाकर छोटे और पिशङ्गवर्णवाले मेघमें स्थित चन्द्रके सदृश राजा रामचन्द्रजीको नमस्कार किया ॥ ३२ ॥

रुचिरोन्नतरत्नगौरवः परिपूर्णाऽमृतरश्मिमण्डलः ।
समदृश्यत जीविताऽऽशया सह रामेण वधूशिरोमणिः ॥ ३३ ॥

**अन्वयः**—रामेण रुचिरोन्नतरत्नगौरवः परिपूर्णाऽमृतरश्मिमण्डलः वधूशिरोमणिः जीविताशया सह समदृश्यत ।

**व्याख्या**—रामेण = रामचन्द्रेण, रुचिरोन्नतरत्नगौरवः = सुन्दरमहामणिगुरुत्वः, परिपूर्णाऽमृतरश्मिमण्डलः=परिपूरितचन्द्रमण्डलः, वधूशिरोमणिः = सीताचूडामणिः, जीविताऽऽशया सह = तद्दर्शनाज्जीवितोऽस्मीति आशया सार्धं, समदृश्यत = संदृष्टः ।

॥व्युत्पत्तिः॥ रुचिरोन्नतरत्नगौरवः—उन्नतं रत्नगौरवं यस्य स उन्नतरत्नगौरवः, रुचिरश्चासौ उन्नतरत्नगौरवः । परिपूर्णाऽमृतरश्मिमण्डलः—परिपूर्णश्चाऽसौ अमृतरश्मिः ( चन्द्रः ) परिपूर्णाऽमृत रश्मिः, तस्येव मण्डलं यस्य सः, अत्रोपमाऽलङ्कारः । वधूशिरोमणिः—वध्वाः शिरोमणिः । अत्र सहशब्देन जीविताशया उपमाद्योतनात् सहोपमेति जयमङ्गलः । अत्र ललितं वृत्तम् ।

॥भाषाऽर्थः॥ रामचन्द्रजीने सुन्दर और उन्नत रत्न महत्त्वसे संपन्न, पूर्णचन्द्रके सदृश मण्डलसे युक्त सीताजीको जीवनकी आशाके साथ देखा ॥ ३३ ॥

अवसन्नरुचिं वनाऽऽगतं तमनाऽऽमृष्टरजोविधूसरम् ।
समपश्यदपेतमैथिलिं दधतं गौरवमात्रमात्मवत् ॥ ३४ ॥

**अन्वयः**—( सः ) अवसन्नरुचिं वनाऽऽगतम् अनामृष्टरजोविधूसरम् अपेत-
लिं गौरवमात्रं दधतं तम् आत्मवत् अपश्यत् ।

**व्याख्या**—(सः = रामः) अवसन्नरुचिं = मन्दप्रभं, (चूडामणिपक्षे) वेणीबन्ध-
लेनत्वात्, ( रामपक्षे ) सशोकत्वादिति भावः । वनागतम् =( चूडामणिपक्षे )
ोकवनिकाऽऽगतम् ( रामपक्षे ) पित्रादेशाद्वनाऽऽगतम्, अनामृष्टरजोविधूसरम्=
नीतधूल्या ईषत्पाण्डुम्, उभयत्राऽप्येषोऽर्थः । अपेतमैथिलिम्=अपगतसीतं, द्वयोर-
एवाऽर्थः । अत एव गौरवमात्रं = मणिरिति दीप्त्यादिकं, राम इति महत्त्वमात्रं,
ं = धारयन्तं, तं=सीताचूडामणिम्, आत्मवत्=आत्मानमिव, अपश्यत् ।

**ॐव्युत्पत्तिःॐ** अनामृष्टरजोविधूसरम्—अनामृष्टं यद्रजस्तेन विधूसरस्तम् । अपे-
थेलिम्—अपेता मैथिली येन यस्माद्वा अपेतमैथिलिस्तम् "गोस्त्रियोरुपसर्जनस्य"
ह्रस्वत्वम् । आत्मवत्—आत्मना तुल्यं, "तेन तुल्यं क्रिया चेद्वतिः" इति वति-
यः । अत्रोपमाऽलङ्कारः । वतिप्रत्ययेनोपमाद्योतनात् तद्धितोपमेति जयमङ्गलः ।
तं वृत्तम् ।

**ॐभाषाऽर्थःॐ** रामचन्द्रजीने मन्द कान्तिवाले, अशोकवनिकासे लाये गये,
नरहित, धूलिसे धूसर, सीतासे रहित अतएव मणित्वसे गौरवमात्रको धारण
वाले उस चूडामणिको अपने सदृश देखा ॥ ३४ ॥

**ामर्थ्यसंपादितवाञ्छिताऽर्थश्चिन्तामणिः स्यान्न कथं हनूमान् ।**
**लक्ष्मणो भूमिपतिस्तदानीं शाखामृगाऽनीकपतिश्च मेने ॥ ३५ ॥**

**अन्वयः**—तदानीं सलक्ष्मणो भूमिपतिः शाखामृगाऽनीकपतिश्च सामर्थ्यसम्पा-
वाञ्छिताऽर्थो हनूमान् चिन्तामणिः कथं न स्यात् ? ( इति ) मेने ।

**व्याख्या**—तदानीं = सीताचूडामणिप्राप्तिकाले, सलक्ष्मणः=लक्ष्मणयुक्तः, भूमि-
ः=राजा, राम इत्यर्थः । शाखामृगाऽनीकपतिश्च=वानरसेनापतिश्च, सुग्रीवश्चेत्यर्थः ।
र्थ्यसम्पादितवाञ्छिताऽर्थः = शक्तिनिष्पादिताऽभीष्टप्रयोजनः, हनूमान् = पवन-
ः, चिन्तामणिः = इच्छापूरको मणिविशेषः, कथं = केन प्रकारेण, न स्यात् = नो
त्, ( इति = इत्थम् ) मेने=ज्ञातवान् ।

**ॐव्युत्पत्तिःॐ** सलक्ष्मणः—लक्ष्मणेन सहितः । सामर्थ्यसम्पादितवाञ्छितार्थः—
र्थ्येन सम्पादितो वाञ्छितोऽर्थो येन सः । चिन्तामणिः—चिन्तापूरको मणिः,
ामपदलोपी समासः । अत्र चिन्तामणिरित्यत्र इवशब्दाऽभावाल्लुप्तोपमेति जयम-
ः । अत्रेन्द्रवज्रोपेन्द्रवज्रयोः संमिश्रणादुपजातिवृत्तम् ।

**ॐभाषाऽर्थःॐ** उस समय लक्ष्मणके साथ राजा राम और वानराऽधिपति सुग्रीवने

"शक्तिसे अभीष्ट प्रयोजनका सम्पादन करनेवाले हनुमान्जी चिन्तामणि ( तुल्य ) कैसे न होंगे" ऐसा विचार किया ॥ ३५ ॥

'युष्मानचेतन् क्षयवायुकल्पान् सीतास्फुलिङ्गं परिगृह्य जाल्मः ।
लङ्कावनं सिंहसमोऽधिशेते मर्तुं द्विषन्नित्यवदद्धनूमान् ॥ ३६ ॥

**अन्वयः**—"जाल्मो द्विषन् क्षयवायुकल्पान् युष्मान् अचेतन् सीतास्फुलिङ्गं परिगृह्य मर्तुं लङ्कावनम् अधिशेते" इति सिंहसमो हनूमान् अवदत् ।

**व्याख्या**—जाल्मः = असमीक्ष्यकारी, मूर्खं इति भावः । द्विषन् = शत्रुः, रावण इत्यर्थः । क्षयवायुकल्पान् = प्रलयमहावायुसदृशान् , युष्मान्=भवतः, अचेतन्= अजानन्, सीतास्फुलिङ्गं = मैथिल्यग्निकणं, परिगृह्य = आदाय, मर्तुं = मरणमनुभवितुं, लङ्कावनं = लङ्काऽरण्यम् , अधिशेते = अधितिष्ठति, इति=एवम् , सिंहसमः= मृगेन्द्रसदृशः, हनूमान् = पवनसूनुः, अवदत् = अब्रवीत् ।

***व्युत्पत्तिः*** क्षयवायुकल्पान्—ईषदसमाप्ताः क्षयवायवः क्षयवायुकल्पास्तान् , "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पप्प्रत्ययः । अचेतन्—न चेततीति, "चिती संज्ञाने" इति धातोर्लटः शत्रादेशः । सीतास्फुलिङ्गं—सीता स्फुलिङ्ग इवेति सीतास्फुलिङ्गस्तम् , "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति समासः । लङ्कावनं— लङ्का वनमिव लङ्कावनं, तत् , "अधिशेते" इत्यस्य योगे "अधिशीङ्स्थाऽऽसां कर्म" इत्याधारस्य कर्मत्वम् । सिंहसमः—सिंहेन सिंहस्य वा समः "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इति तृतीया षष्ठी वा, ततः समासः । अत्र समशब्देनोपमाया अभिधानात् समोपमा । तत्र च निभसदृशाऽऽद्योऽपि द्रष्टव्या इति जयमङ्गलः । इन्द्रवज्रा वृत्तम् ।

***भाषाऽर्थः*** "मूर्खं शत्रु ( रावण ) प्रलयकालके महावायुके सदृश आपलोगोंको नहीं जानता हुआ स्फुलिङ्गके सदृश सीताजीको लेकर मरनेके लिए वनके तुल्य लङ्कामें सो रहा है" सिंहके समान हनूमान्जीने ऐसा कहा ॥ ३६ ॥

अहृत धनेश्वरस्य युधि यः समेतमायो धनं
तमहमितो विलोक्य विबुधैः कृतोत्तमाऽऽयोधनम् ।
विभवमदेन निह्नुतह्रियाऽतिमात्रसंपन्नकं
व्यथयति सत्पथादधिगताऽथवेह संपन्न कम् ॥ ३७ ॥

**अन्वयः**—समेतमायो यो युधि धनेश्वरस्य धनम् अहृत । विबुधैः कृतोत्तमाऽऽयोधनं निह्नुतह्रिया विभवमदेन अतिमात्रसंपन्नकं तम् अहं विलोक्य इतः; अथवा इह सम्पत् अधिगता ( सती ) कं सत्पथात् न व्यथयति ?

**व्याख्या**—समेतमायः = मायावी, यः=रावणः, युधि=रणे, धनेश्वरस्य=कुबेरस्य, धनं = द्रव्यं, पुष्पकादिकमित्यर्थः । अहृत = हृतवान्, विबुधैः = देवैः सह, कृतोत्तमाऽऽयोधनं = विहितमहासंग्रामं, निह्नुतह्रिया = अपलपितलज्जेन, विभवमदेन = ऐश्वर्यगर्वेण, अतिमात्रसम्पन्नकम् = अत्यर्थयुक्तम्, तं = तादृशं रावणम्, अहं = हनूमान्, विलोक्य = दृष्ट्वा, इतः = प्राप्तः, अत्रेति शेषः । उक्तमर्थमर्थान्तरन्यासेन द्रढयति—व्यथयतीति । अथवा = यस्मात्कारणात्, इह = अस्मिन् लोके, सम्पत् = सम्पत्तिः, अधिगता = प्राप्ता सती, कं = पुरुषं, सत्पथात् = सन्मार्गात्, न व्यथयति = न चलयति ।

***व्युत्पत्तिः*** समेतमायः—समेता ( प्राप्ता ) माया येन सः । अहृत-"हृञ् हरणे" इति धातोर्लुङ् । "ह्रस्वादङ्गात्" इति सिचो लुक् । विबुधैः—विबुध्यन्ते इति विबुधास्तैः, विपूर्वकात् "बुध अवगमने" इति धातोः "इगुपधज्ञाप्रीकिरः कः" इति कः । "सहयुक्तेऽप्रधाने" इति "वृद्धो यूने"त्यादि निर्देशात् विनापि सहार्थकपदयोगं तृतीया । कृतोत्तमाऽऽयोधनं—कृतमुत्तममायोधनं येन तम् । निह्नुतह्रिया—निह्नुता ह्रीर्येन तेन । इतः—"इण् गतौ" इति धातोः क्तप्रत्ययः । सत्पथात्—संश्चाऽसौ पन्थाः सत्पथस्तस्मात्, "ऋक्पूरब्धूःपथामानक्षे" इति समासाऽन्तः अप्रत्ययः । व्यथयति—णिजन्तात् "व्यथ भयचलनयोः" इति धातोः लट् । अत्र विशेषाऽर्थस्य सामान्याऽर्थेन समर्थनादर्थान्तरन्यासोऽलङ्कारः । तल्लक्षणं यथा—

"सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्यं च कारणेनेदं कार्येण च समर्थ्यते ॥
साधर्म्येणेतरेणाऽर्थान्तरन्यासोऽष्टधा ततः ॥" इति ।

अत्र नन्दनं वृत्तम् । तल्लक्षणं यथा—

"शिवतुरगैस्तु नन्दनमिदं नजौ भजौ रद्वयम् ।" इति ।

***भाषाऽर्थः*** मायावी जिस रावणने युद्धमें कुबेरके पुष्पकविमान आदि द्रव्यका हरण किया । देवताओंसे महासंग्राम करनेवाले, लज्जाको छोड़नेवाले, सम्पत्तिके मदसे अतिशयसंपन्न उस रावणको देखकर मैं आया हूँ, अथवा इस लोकमें प्राप्त होती हुई सम्पत्ति किस पुरुषको सन्मार्गसे विचलित नहीं करती है ॥ ३७ ॥

**ऋद्धिमान्राक्षसो मूढश्चित्र नाऽसौ यदुद्धतः ।**
**को वा हेतुरनार्याणां धर्म्ये वर्त्मनि वर्तितुम् ॥ ३८ ॥**

**अन्वयः**—ऋद्धिमान् मूढः असौ राक्षसो यत् उद्धतो न ( तत् ) चित्रम् । अनार्याणां धर्म्ये वर्त्मनि वर्तितुं को वा हेतुः ?

**व्याख्या**—ऋद्धिमान = समृद्धः, मूढः = मूर्खः, असौ = रावणः, राक्षसः =

यातुधानः, यत् = यदि, उद्धतो न = दुश्चरित्रो न भवेत्, ( तत् = तर्हि ) चित्रम् = आश्चर्यं, भवेदिति शेषः। ऋद्धिमत्त्वेन मूढत्वेन राक्षसत्वेन च उद्धत इत्येतदयुक्तमिति प्रतिषेधयन्नाह—को वेति। अनार्याणां = दुर्जनानां, धर्म्ये = धर्मादनपेते, वर्त्मनि= मार्गे, वर्तितुम्=अवस्थातुं, को वा हेतु=किं नाम कारणं, नैव कोऽपि हेतुरित्यर्थः।

॥व्युत्पत्तिः॥ ऋद्धिमान्—प्रशस्ता ऋद्धिरस्ति अस्य सः। प्राशस्त्ये मतुप्। धर्म्ये—"धर्मपथ्यर्थन्यायादनपेते" इति यत्। अत्र आक्षेपाऽलङ्कारः। तल्लक्षणं यथा—

"प्रतिषेध इवेष्टस्य यो विशेषाऽभिधित्सया। आक्षेप इति तं सन्तः शंसन्ति द्विविधो यथा॥

अत्र पूर्वार्धेनोक्तो य इष्टोऽर्थस्तस्य "को वे"त्यादिना विशेषप्रतिपादनेच्छया प्रतिषेध इति। स च आक्षेप उक्तवक्ष्यमाणविषयभेदाद् द्विविधः। अयमुक्तविषय इति जयमङ्गलः। नव्याऽऽलङ्कारिकमतेन तु अयमप्यर्थान्तरन्यास एव। अनुष्टुब्वृत्तम्।

॥भाषाऽर्थः॥ समृद्ध और मूढ यह राक्षस ( रावण ) जो दुर्वृत्त न होता तब आश्चर्य था। दुर्जनोंको धर्मपूर्ण मार्गमें रहनेके लिए क्या कारण है ? ( कुछ भी कारण नहीं है ) ॥ ३८ ॥

**तस्याऽधिवासे तनुरुत्सुकाऽसौ दृष्टा मया रामपतिः प्रमन्युः।**
**कार्यस्य सारोऽयमुदीरितो वः प्रोक्तेन शेषेण किमुद्धतेन ॥ ३९ ॥**

**अन्वयः**—मया तस्य अधिवासे तनुः उत्सुका प्रमन्युः असौ रामपतिः दृष्टा। कार्यस्य अयं सारो व उदीरितः, शेषेण उद्धतेन प्रोक्तेन किम् ?।

**व्याख्या**—मया = हनूमता, तस्य = रावणस्य, अधिवासे = लङ्कायां, तनुः = कृशाङ्गी, उत्सुका = उत्कण्ठोपेता, प्रमन्युः = अधिकशोका, असौ = विप्रकृष्टस्था, रामपतिः=रामपत्नी, सीतेत्यर्थः। दृष्टा=अवलोकिता। कार्यस्य = कृत्यस्य, मदनुष्ठितस्येति शेषः, अयं = सम्प्रति निवेदितः, सारः स्थिरांऽशः, वः = युष्मभ्यम्, उदीरितः = कथितः। शेषेण=अवशिष्टेन, उद्धतेन = अशोकवनिकाभङ्गादिना विक्रान्तियुक्तेन कार्येण, प्रोक्तेन = अभिहितेन, किं = किं प्रयोजनं ? न किमपीति भावः।

॥व्युत्पत्तिः॥ तनुः = "वोतो गुणवचनात्" इति ङीपो विकल्पेन पक्षे तदभावः। प्रमन्युः—प्रकृष्टो मन्युर्यस्याः सा। रामपतिः - रामः पतिर्यस्याः सा, "विभाषा सपूर्वस्य" इति नकाराऽभावपक्षे रूपम्। वः—क्रियाग्रहणाच्चतुर्थी। आक्षेपाऽलङ्कारः, स च वक्ष्यमाणविषयः। अत्र पूर्वार्द्धेनोक्तो य इष्टोऽर्थस्तस्य विशेषाऽभिधित्सया प्रोक्तेनेत्यादिना शेषाऽर्थप्रतिषेध इति जयमङ्गलः। इन्द्रवज्रा वृत्तम्।

॥भाषाऽर्थः॥ मैंने रावणकी वासभूमि लङ्कामें, कृशाङ्गी, उत्कण्ठित, अधिक शोक करनेवाली सीताजीको देखा। अपनेसे किये गये कार्यका यह सार आपलोगोंको कह

ा है, अवशिष्ट उद्धत ( अशोकवनिका-भङ्गादिरूप ) कार्यको कहनेसे ] क्या ोजन है ? ॥ ३९ ॥

**समतां शशिलेखयोपयायादवदाता प्रतनुः क्षयेण सीता ।**
**यदि नाम कलङ्क इन्दुलेखामतिवृत्तो लघयेन्न चाऽपि भावी ॥ ४० ॥**

**अन्वयः**—यदि नाम अतिवृत्तः कलङ्क इन्दुलेखां न लघयेत् भावी च ( कलङ्कः न्दुलेखां न लघयिष्यति । तर्हि ) अवदाता प्रतनुः सीता क्षयेण शशिलेखया समताम् पयायात् ।

**व्याख्या**—यदि नाम = चेन्नाम, अतिवृत्तः = पूर्ववृत्तः, कलङ्कः = लाञ्छनम्, न्दुलेखाम्=चन्द्ररेखां, न लघयेत्=नो न्यूनयेत्, भावी च = आगामी च ( कलङ्कः= ञ्छनम्, इन्दुलेखां = चन्द्ररेखां, न लघयिष्यति = न लघ्वीं करिष्यति । तर्हि= ा ) अवदाता = शुद्धा, प्रतनुः = प्रकर्षेण तन्वी, सीता = मैथिली, क्षयेण = दुर्बल- या, शशिलेखया = चन्द्ररेखया, समतां = तुल्यताम्, उपयायात् = उपगच्छेत् ।

***व्युत्पत्तिः*** कलङ्कः—"कलङ्काऽङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ।" इत्य- रः । शशिलेखया—"तुल्याऽर्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इति तृतीया । त्र उपमेयभूतायाः सीतायाः कलङ्काभावेन उपमानभूताया इन्दुलेखाया न्यून- ाद्व्यतिरेकाऽलङ्कारस्तल्लक्षणं यथा—

"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथ वा । व्यतिरेक" इति ।

अत्र औपच्छन्दसिकं वृत्तम् ।

***भाषाऽर्थः*** यदि पूर्ववृत्त कलङ्क चन्द्ररेखाको न्यून नहीं करता और पीछे होने ाला कलङ्क भी चन्द्ररेखाको न्यून नहीं करेगा तो शुद्ध और बहुत ही पतली सीता र्बलता के कारण चन्द्ररेखासे तुल्यताको प्राप्त कर लेतीं ॥ ४० ॥

**अपरीक्षितकारिणा गृहीतां त्वमनासेवितवृद्धपण्डितेन ।**
**अविरोधितनिष्ठुरेण साध्वीं दयितां त्रातुमलं घटस्व राजन् ॥ ४१ ॥**

**अन्वयः**—हे राजन् ! त्वम् अपरीक्षितकारिणा अनासेवितवृद्धपण्डितेन अवि- ाधितनिष्ठुरेण गृहीतां साध्वीं दयितां त्रातुम् अलं घटस्व ।

**व्याख्या**—हे राजन् !=हे भूप !, त्वम्, अपरीक्षितकारिणा = अविमृश्यका- ्णा, अनासेवितवृद्धपण्डितेन = अपर्युपासितवृद्धेन तथाऽपि विदुषा, अविरोधितनि- ठुरेण = अनपकृतकठोरेण, रावणेनेति भावः । गृहीताम् = उपात्तां, साध्वीं = पति- ्तां, दयितां = प्रियां, सीतामिति भावः । त्रातुं = रक्षितुम्, अलं = पर्याप्तं यथा, था, घटस्व = यतस्व ।

***व्युत्पत्तिः*** अपरीक्षितकारिणा—अपरीक्षितं करोतीति तच्छीलस्तेन । अना-

सेवितवृद्धपण्डितेन—अनासेवितो वृद्धो येन सः, स चाऽसौ पण्डितस्तेन। अविरोधित-निष्ठुरेण—अविरोधितश्चाऽसौ निष्ठुरस्तेन। अत्र परीक्षा सेवा विरोधनं चेति तिस्रः-क्रियास्तासां यः प्रतिषेधो नञा तेन अपरीक्षापूर्वकं यत्करणं तथाऽवृद्धसेवापूर्वकं यत्प-ण्डितत्वं यच्चाऽविरोधपूर्वकं निष्ठुरत्वं तस्य क्रियाफलस्य विभावनात्—प्रकाश-नात्। यथोक्तं—

"क्रियायाः प्रतिषेधेन तत्फलस्य विभावनात्।
ज्ञेया विभावनैवाऽसौ साऽन्वर्थं कथ्यते यथा॥" इति।

इति जयमङ्गलः। अत्राऽप्यौपच्छन्दसिकं वृत्तम्।

※भाषाऽर्थः※ हे राजन्! आप विना परीक्षाके कार्य करनेवाले, ज्ञान-वृद्धकी सेवा किये विना भी पण्डित और अपकार नहीं किये जानेपर भी निष्ठुर रावणसे गृहीत, पतिव्रता, प्रिया सीताजीकी रक्षाके लिए पर्याप्त रूपमें यत्न करें॥ ४१॥

**स च विह्वलसत्त्वसंकुलः परिशुष्यन्नभवन्महाह्रदः।**
**परितः परितापमूर्च्छितः पतितं चाऽम्बु निरभ्रमीप्सितम्॥ ४२॥**

**अन्वयः**—स च महाह्रदो विह्वलसत्त्वसङ्कुलः परिशुष्यन् परितः परितापमूर्च्छितः अभवत्। ईप्सितम् अम्बु च निरभ्रं पतितम्।

**व्याख्या**—स च = रामः, महाह्रदः अगाधजलकासारसमः, विह्वलसत्त्वस-ङ्कुलः = आकुलचेतोव्याप्तः, सीताविरहेणेति शेषः। ह्रदपक्षे—विक्लवमत्स्यादिजन्तु-व्याप्तः, परिशोषणेनेति शेषः, परिशुष्यन् = शोषमुपगच्छन्। परितः = सर्वतः, परि-तापमूर्च्छितः=शोकतापमूर्च्छाऽन्वितः, ह्रदपक्षे—अर्कतापाऽतिशययुक्तः, अभवत्= संवृत्तः। ईप्सितम् = अभीष्टम्, अम्बु = जलं, सीतावार्ताश्रवणरूपमिति भावः। ह्रदपक्षे—जलं चेत्यर्थः। निरभ्रम्=अभ्ररहितम्, आकस्मिकमिति भावः, ह्रदपक्षे—निर्मेघमित्यर्थः। पतितं = निष्पन्नम्। यथा परिशुष्यति महाह्रदे जातुचिन्निरभ्रवर्षं भवति तथैव सीताविरहेण परिशुष्यति रामचन्द्रे आकस्मिकरूपेण सीतावार्ताश्रवणं सञ्जातमिति समष्टयर्थः।

※व्युत्पत्तिः※ विह्वलसत्त्वसङ्कुलः—रामपक्षे-विह्वलसत्त्वेन सङ्कुलः। ह्रदपक्षे—विह्वलसत्त्वैः सङ्कुलः। अत्र समासोक्तिरलङ्कारः। यथोक्तम्—

"यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः।
सा समासोक्तिरुदिता संक्षिप्ताऽर्थतया तथा॥" इति।

एवं च कृत्वाऽयं श्लेषान्द्रियते, श्लेषे हि द्वयोरपि श्रूयमाणत्वादिति जयमङ्गलः। नव्यालङ्कारिकमते तु श्लेषोऽयम्। अत्र औपच्छन्दसिकं वृत्तम्।

※भाषाऽर्थः※ विह्वल जन्तुओंसे युक्त, अतिशय सूर्यतापसे सम्पन्न अतः सूखते

हुए महाह्रदके सदृश रामचन्द्रजी सीताजीके विरहसे विह्वल चित्तसे युक्त सूखते हुए सन्तापसे मूर्च्छित हो गये। इसी अवसरमें जैसे उस प्रकारके महाह्रदमें बिना मेघके वृष्टि होती है, उसी तरह अभीष्ट सीतावार्ताका श्रवणरूप वृष्टि हो गई ॥ ४२ ॥

**अथ लक्ष्मणतुल्यरूपवेशं गमनाऽऽदेशविनिर्गताऽग्रहस्तम् ।**
**कपयोऽनुययुः समेत्य रामं नतसुग्रीवगृहीतसादराज्ञम् ॥ ४३ ॥**

**अन्वयः**—अथ समेत्य कपयो लक्ष्मणतुल्यरूपवेशं गमनादेशविनिर्गताऽग्रहस्तं नतसुग्रीवगृहीतसादराज्ञं रामम् अनुययुः ।

**व्याख्या**—अथ = वार्ताश्रवणाऽनन्तरं, समेत्य = मिलित्वा, कपयः=वानराः, लक्ष्मणतुल्यरूपवेशं = लक्ष्मणसमसौन्दर्यनेपथ्यं, गमनादेशविनिर्गताऽग्रहस्तं = प्रयाणाज्ञाविनिःसृताग्रकरं, नतसुग्रीवगृहीतसादराज्ञं=प्रणतसुग्रीवस्वीकृतससम्मानादेशं, रामं = रामचन्द्रम्, अनुययुः = अनुजग्मुः ।

**॥व्युत्पत्तिः॥** लक्ष्मणतुल्यरूपवेशं—लक्ष्मणतुल्यौ रूपवेशौ यस्त तम् । गमनाऽऽदेशविनिर्गताऽग्रहस्तं—गमनाय आदेशो गमनाऽऽदेशस्तदर्थं विनिर्गतोऽग्रहस्तो यस्य तम् । नतसुग्रीवगृहीतसादराऽऽज्ञं—नतो यः सुग्रीवस्तेन गृहीता सादरं यथा तथा आज्ञा यस्य तम् । अत्र अतिशयाऽभिधानात् अतिशयोक्तिः । अत्र सुष्ठ्वपि नामाऽसौ लक्ष्मणेन तुल्यरूपवेशः स्यान्न तु प्रत्यक्षप्रमाणपरिच्छेद्य इति लोकाऽतिक्रान्तवचनमेतद्वचनम् । अवश्यं च कश्चिद्विशेषोऽस्ति । यथोक्तं—

"निमित्ततो यत्र वचो लोकातिक्रान्तगोचरम् । मन्यतेऽतिशयोक्तिं तामलङ्कारतया यथा ॥"

इति जयमङ्गलः । नव्याऽऽलङ्कारिकमते तु नाऽत्र कश्चिदलङ्कारो वैचित्र्याऽभावात् । औपच्छन्दसिकं वृत्तम् ।

**॥भाषाऽर्थः॥** सीताजीकी वार्ता सुननेके अनन्तर वानरलोगोंने इकट्ठे होकर लक्ष्मणके सदृश रूप और वेशसे युक्त, यात्राकी आज्ञाके लिए हाथके अग्रभागको बाहर करनेवाले और प्रणाम करनेवाले सुग्रीवने आदरपूर्वक जिनकी आज्ञाको ग्रहण किया है, ऐसे रामचन्द्रजीका अनुगमन किया ॥ ४३ ॥

कुलकम् ४४-४९

**कपिपृष्ठगतौ ततो नरेन्द्रौ कपयश्च ज्वलिताऽग्निपिङ्गलाक्षाः ।**
**मुमुचुः प्रययुर्द्रुतं समीयुर्वसुधां व्योम महीधरं महेन्द्रम् ॥ ४४ ॥**

**अन्वयः**—ततः कपिपृष्ठगतौ नरेन्द्रौ ज्वलिताऽग्निपिङ्गलाऽक्षाः कपयश्च वसुधां मुमुचुः, व्योम प्रययुः, महेन्द्रं महीधरं द्रुतं समीयुः ।

**व्याख्या**—ततः =अनन्तरं, कपिपृष्ठगतौ = हनूमन्तमारूढौ, नरेन्द्रौ = रामलक्ष्मणौ, ज्वलिताऽग्निपिङ्गलाऽक्षाः = प्रदीप्ताऽनलपिङ्गनेत्राः, कपयश्च =वानराश्च,

वसुधां = पृथिवीं, मुमुचुः = त्यक्तवन्तः, व्योम=आकाशं, प्रययुः = गतवन्तः, महेन्द्रं= महेन्द्रनामकं, महीधरं = पर्वतम्, द्रुतं=शीघ्रं, समीयुः = संप्रापुः ।

※व्युत्पत्तिः※ कपिपृष्ठगतौ—कपिपृष्ठं गतौ, "द्वितीया श्रिताऽतीतपतितगताऽत्यस्तप्राप्ताऽऽपन्नैः" इति द्वितीयातत्पुरुषः । ज्वलिताऽग्निपिङ्गलाऽक्षाः—ज्वलिताऽग्नी इव पिङ्गले ज्वलिताग्निपिङ्गले, "उपमानानि सामान्यवचनैः" इति समासः । ज्वलिताग्निपिङ्गले अक्षिणी येषां ते, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समासाऽन्तः षच् । समीयुः—संपूर्वकात् "इण् गतौ" इति धातोर्लिट् । 'असंयोगाल्लिट् कित्" इति कित्त्वे गुणाऽभावाद्धातोरियङ् । अत्र यथासंख्याऽलङ्कारस्तल्लक्षणं यथा—

"यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ।" इति ।

औपच्छन्दसिकं वृत्तम् ।

※भाषाऽर्थः※ अनन्तर हनूमान्‌जीके पीठपर चढ़े राम और लक्ष्मणने तथा जलती हुई अग्निके सदृश पीली आंखोंवाले वानरोंने भी पृथ्वी को छोड़ा, आकाशमें गमन किया और महेन्द्र नामके पर्वत को शीघ्र प्राप्त किया ॥ ४४ ॥

**स्थितमिव परिरक्षितुं समन्तादुदधिजलौघपरिप्लवाद् धरित्रीम् ।**
**गगनतलवसुन्धराऽन्तराले जलनिधिवेगसहं प्रसार्य देहम् ॥ ४५ ॥**

अन्वयः—उदधिजलौघपरिप्लवात् समन्तात् धरित्रीं परिरक्षितुम् इव गगनतलवसुन्धराऽन्तराले जलनिधिवेगसहं देहं प्रसार्य स्थितम् ( महेन्द्रं समीयुः ) ।

व्याख्या—उदधिजलौघपरिप्लवात् = समुद्राऽम्बुसमूहविनाशात्, समन्तात् = परितः, धरित्रीं = पृथ्वीं, परिरक्षितुम् इव = परित्रातुम् इव, गगनतलवसुन्धराऽन्तराले = आकाशपृथिव्यभ्यन्तरे, जलनिधिवेगसहं = समुद्रजवमर्षकं, देहं = शरीरं प्रसार्य=विस्तार्य, स्थितम् = अवस्थितं, महेन्द्रं समीयुः इति पूर्वश्लोकस्थाभ्यां पदाभ्यां सम्बन्धः, महेन्द्रपर्वतं संप्रापुरित्यर्थः ।

※व्युत्पत्तिः※ उदधिजलौघपरिप्लवात्—उदधेर्यो जलौघस्तस्मात् परिप्लवात् । परिरक्षितुमिवेत्यत्रोत्प्रेक्षाऽलङ्कारः । गगनतलवसुन्धराऽन्तराले—गगनतलवसुन्धरयोरन्तराले, "अभ्यन्तरं त्वन्तरालम्" इत्यमरः । जलनिधिवेगसहं—जलनिधिवेगं सहत इति जलनिधिवेगसहस्तं, कप्रकरणे "मूलविभुजादिभ्यः क उपसंख्यानम्" इति कः । अत्र पुष्पिताग्रा वृत्तम् ।

※भाषाऽर्थः※ समुद्रके जलसमूहसे होनेवाले विनाशसे चारों ओर पृथ्वीकी रक्षा करते हुएके सदृश, आकाश और पृथ्वीके मध्यभागमें समुद्रके वेगको सहनेवाले शरीरको फैलाकर अवस्थित महेन्द्र पर्वतको राम, लक्ष्मण और वानरोंके वृन्दने प्राप्त किया ॥ ४५ ॥

**विषधरनिलये निविष्टमूलं शिखरशतैः परिमृष्टदेवलोकम् ।**
**घनविपुलनितम्बपूरिताशं फलकुसुमाऽऽचितवृक्षरम्यकुञ्जम् ॥४६॥**

**अन्वयः**—( रामादयः ) विषधरनिलये निविष्टमूलं शिखरशतैः परिमृष्टदेवलोकं घनविपुलनितम्बपूरिताऽऽशं फलकुसुमाऽऽचितवृक्षरम्यकुञ्जम् ( महेन्द्रं समीयुः ) ।

**व्याख्या**—( रामादयः ) विषधरनिलये = पाताले, निविष्टमूलं = प्रविष्टमूलं, शिखरशतैः=कूटशतैः करणभूतैः, परिमृष्टदेवलोकं=संमृष्टसुरलोकं, घनविपुलनितम्बपूरिताऽऽशं=निरन्तरविस्तीर्णमेखलांशव्याप्तदिशं, फलकुसुमाऽऽचितवृक्षरम्यकुञ्जं= शस्यपुष्पव्याप्ततरुसुन्दरनिकुञ्जं, ( महेन्द्रं समीयुः ) ।

**॥व्युत्पत्तिः॥ परिमृष्टदेवलोकं**—परिमृष्टो देवलोको येन तम् । घनविपुलनितम्बपूरिताऽऽशं—घना विपुला ये नितम्बाः, तैः पूरिता आशा येन तम् । फलकुसुमाऽऽचितवृक्षरम्यकुञ्जम्—फलकुसुमैराचिता ये वृक्षास्तैः रम्याः कुञ्जाः यस्मिन् तम् । अत्र तत्त्वाऽर्थकथनाद्वार्ताऽलङ्कारः । सा द्विविधा, विशिष्टा निर्विशिष्टा च । तत्र या पूर्वा स्वभावोक्तिरुदिता । यथेयमेव । तथा चोक्तम्—

"स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षते ।
अर्थस्य तादवस्थ्ये च स्वभावोऽभिहितो यथा ॥" इति ।

इति जयमङ्गलः । पुष्पिताग्रा वृत्तम् ।

भाषाऽर्थः—राम, लक्ष्मण और वानरोंने जिसका मूल पातालमें घुसा है, ऐसे तथा सैकड़ों शिखरोंसे देवलोकको स्पर्श करनेवाले, निरन्तर विस्तीर्ण मध्यभागोंसे दिशाओंको व्याप्त करनेवाले, और फल तथा फूलोंसे व्याप्त वृक्षोंसे सुन्दर कुञ्जोंसे युक्त महेन्द्र पर्वतको प्राप्त किया ॥ ४६ ॥

**मधुकरविरुतैः प्रियाध्वनीनां सरसिरुहैर्दयिताऽऽस्यहास्यलक्ष्म्याः ।**
**स्फुटमनुहरमाणमादधानं पुरुषपतेः सहसा परं प्रमोदम् ॥४७॥**

**अन्वयः**—प्रियाध्वनीनां मधुकरविरुतैः दयिताऽऽस्यहास्यलक्ष्म्याः सरसिरुहैः स्फुटम् अनुहरमाणं पुरुषपतेः सहसा परं प्रमोदम् आदधानम् ( महेन्द्रं समीयुः ) ।

**व्याख्या**—प्रियाध्वनीनां = सीताजल्पितानां, मधुकरविरुतैः = भ्रमरझङ्कारैः, दयिताऽऽस्यहास्यलक्ष्म्याः=सीतामुखहासशोभायाः, सरसिरुहैः=कमलैः, स्फुटं=स्पष्टम्, अनुहरमाणम् = अनुकुर्वन्तं, सादृश्यमिति शेषः । तत्र पद्मैरास्यलक्ष्म्याः, कुमुदैः हासलक्ष्म्याः सादृश्यमिति यथायथं बोध्यम् । अथ वा सरसिरुहैः अनुहरमाणम् = सदृशीभवन्तमित्यर्थः । दयिताऽऽस्यहास्यलक्ष्म्या इत्यत्र "तुल्याऽर्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इति षष्ठी । एवं च पुरुषपतेः=रामस्य, सहसा = तत्क्षणमाग-

तमात्रस्येत्यर्थः। परम्=उत्कृष्टं प्रमोदं=हर्षम्, आदधानं = जनयन्तं, महेन्द्रं, समीयुः संप्रापुः, रामादय इति शेषः।

॥व्युत्पत्तिः॥ मधुकरविरुतैः—मधुकराणां विरुतानि, तैः। दयिताऽऽस्यहास्य-लक्ष्म्याः—आस्यं च हास्यं च आस्यहास्ये, दयिताया आस्यहास्ये, तयोर्लक्ष्म्याः। सरसिरुहैः—सरसि रोहन्तीति सरसिरुहाणि, तैः। "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः। "हलदन्तात्सप्तम्याः संज्ञायाम्" इति अलुक्। अनुहरमाणम्—अनुहरत इति अनुहरमाणस्तं, लटः शानच्। अत्र प्रियतमवस्त्वभिधानात्प्रेयोऽलङ्कार इति जयमङ्गलः। पुष्पिताग्रा वृत्तम्।

॥भाषाऽर्थः॥ सीताजीके शब्दोंका भौरोंके झङ्कारोंसे, सीताजीकी मुखलक्ष्मीका पद्मोंसे, हास्यलक्ष्मीका कुमुदोंसे सादृश्यका स्पष्ट रूपसे अनुकरण (नकल) करनेवाले और रामचन्द्रजीके हर्षको सहसा प्रकट करनेवाले महेन्द्र पर्वत को राम, लक्ष्मण और वानरोंने प्राप्त किया ॥ ४७ ॥

**ग्रहमणिरसनं दिवो नितम्बं विपुलमनुत्तमलब्धकान्तियोगम्।**
**च्युतघनवसनं मनोऽभिरामं शिखरकरैर्मदनादिव स्पृशन्तम् ॥४८॥**

अन्वयः—( रामादयः ) ग्रहमणिरसनं विपुलम् अनुत्तमलब्धकान्तियोगं च्युतघनवसनं मनोऽभिरामं दिवो नितम्बं मदनात् इव शिखरकरैः स्पृशन्तं ( महेन्द्रं समीयुः )।

व्याख्या—( रामादयः ) ग्रहमणिरसनं = रत्नमेखलासदृशग्रहयुक्तं, विपुलं = विस्तीर्णम्, अनुत्तमलब्धकान्तियोगम्=अत्युत्कृष्टप्राप्तशोभासम्बन्धं, च्युतघनवसनम्= अपसृतवस्त्रोपममेघं, मनोऽभिरामं = चित्तसुन्दरं, दिवः = आकाशस्य, नितम्बं = मध्यभागं, मदनात् इव = कामात् इव, शिखरकरैः = हस्तसदृशशृङ्गैः, स्पृशन्तम्= आमृशन्तं 'महेन्द्रं=तदाख्यं पर्वतं, समीयुः = संप्रापुः'।

॥व्युत्पत्तिः॥ ग्रहमणिरसनं—मणिखचिता रसना मणिरसना, मध्यमपदलोपी समासः। ग्रहरूपा मणिरसना यस्य तम्। अनुत्तमलब्धकान्तियोगम्—अविद्यमान-उत्तमो यस्मात्सोऽनुत्तमः—अत्युत्कृष्टः। 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति नञ्बहुव्रीहिः। लब्धः कान्त्या योगो येन स लब्धकान्तियोगः। अनुत्तमश्चाऽसौ लब्धकान्तियोगस्तम्। च्युतघनवसनं—घनो वसनमिवेति घनवसनम्, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति समासः। च्युतं घनवसनं यस्मात्तम्। नितम्बं—"पश्चान्नितम्बः स्त्रीकट्याः" इत्यमरः। शिखरकरैः—शिखराणि करा इव शिखरकरास्तैः, पूर्वसूत्रेणैव समासः। अत्र दिवो गिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसाऽभिधानात् रसवदलङ्कारः। तथा चोक्तं—

"रसवद्दर्शितं स्पष्टं शृङ्गारादिरसं यथा।" इति।

इति जयमङ्गलः । नव्याऽऽलङ्कारिकमते तु अत्र प्रस्तुते महेन्द्रपर्वते अप्रस्तुतस्य नायकरूपाऽर्थस्य परिस्फूर्तेः समासोक्तिरलङ्कारः। तल्लक्षणं सोदाहरणं यथा चन्द्रालोके—

"समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥" इति ।

पुष्पिताग्रा वृत्तम् ॥

※भाषाऽर्थः※ राम आदिने ग्रहरूप रत्नखचित मेखलासे युक्त, विस्तीर्ण, अतिशय उत्कृष्ट और कान्तिसम्पन्न, जिससे वस्त्रसदृश मेघ हट गये हैं और मनोहर आकाशके नितम्ब ( मध्यभाग ) को कामाविष्टके सदृश होकर हस्तरूप शिखरोंसे स्पर्श करनेवाले महेन्द्र पर्वतको प्राप्त किया ॥ ४८ ॥

**प्रचपलमगुरुं भराऽसहिष्णुं जनमसमानमनूर्जितं विवर्ज्य ।**
**कृतवसतिमिवाऽर्णवोपकण्ठे स्थिरमतुलोन्नतिमूढतुङ्गमेघम् ॥४९॥**

अन्वयः—( रामादयः ) प्रचपलम् अगुरुं भराऽसहिष्णुम् असमानम् अनूर्जितं जनं विवर्ज्य इव अर्णवोपकण्ठे कृतवसतिं स्थिरम् अतुलोन्नतिम् ऊढतुङ्गमेघम् ( महेन्द्रं समीयुः ) ।

व्याख्या—प्रचपलम् = अस्थिरम्, अगुरुं=लघुम्, अतएव भराऽसहिष्णुं = भारधारणाऽसमर्थम्, असमानम्=असदृशम्, अनूर्जितम्=अहङ्काररहितं, जनं = लोकं, विवर्ज्य इव = परित्यज्य इव, अर्णवोपकण्ठे = समुद्रसमीपे, कृतवसतिं=विहिताऽवस्थानं, तदेवाऽसमानत्वं दर्शयन्नाह—स्थिरम्=अचलम्, अतुलोन्नतिम्=असाधारणोच्छ्रायम्, ऊढतुङ्गमेघम् = उद्धृतमहामेघम्, आश्रयणीयत्वादिति भावः । एतादृशं महेन्द्रपर्वतं, समीयुः = संप्रापुः ।

※व्युत्पत्तिः※ कृतवसतिं—वसनं वसतिः, "स्त्रियां क्तिन्" इति क्तिन् । कृता वसतिर्येन तम् । अतुलोन्नतिम्—अविद्यमाना तुला ( उपमा ) यस्याः सा अतुला, नञ्बहुव्रीहिः । अतुला उन्नतिर्यस्य तम् । अत्र साऽहङ्कारवस्त्वभिधानात् ऊर्जस्व्यलङ्कार इति जयमङ्गलः । पुष्पिताग्रा वृत्तम् ।

※भाषाऽर्थः※ राम आदि ने अस्थिर, लघु अत एव भारधारण करनेके लिए असमर्थ, असदृश और अहङ्काररहित लोकको छोड़नेवालेके सदृश होकर समुद्रके समीप वास करनेवाले, स्थिर, बेजोड़की ऊंचाईवाले और उन्नत मेघको ऊपर धारण करनेवाले महेन्द्रपर्वतको प्राप्त किया ॥ ४९ ॥

**स्फटिकमणिगृहैः सरत्नदीपैः प्रतरुणकिन्नरगीतनिस्वनैश्च ।**
**अमरपुरमतिं सुराङ्गनानां दधतमदुःखमनल्पकल्पवृक्षम् ॥ ५० ॥**

अन्वयः—(रामादयः) सरत्नदीपैः स्फटिकमणिगृहैः प्रतरुणकिन्नरगीतनिस्वनैश्च

सुराऽङ्गनानाम् अमरपुरमतिं दधतम् अदुःखम् अनल्पकल्पवृक्षम् (महेन्द्रपर्वतं समीयुः)।

**व्याख्या**—( रामादयः ) सरत्नदीपैः = रत्नदीपयुक्तैः, स्फटिकमणिगृहैः = स्फटिकरत्नभवनैः, प्रतरुणकिन्नरगीतनिस्वनैश्च = युवककिंपुरुषगानशब्दैश्च, सुराङ्गनानां = देवललनानाम्, अमरपुरमतिं = स्वर्गबुद्धिं, दधतं = जनयन्तमिति भावः। अदुःखं=दुःखरहितं, सुखहेतुमित्यर्थः। अनल्पकल्पवृक्षं=बहुकल्पतरुयुक्तं, ( महेन्द्रपर्वतं, समीयुः=संप्रापुः । )

**॥व्युत्पत्तिः॥** सरत्नदीपैः—रत्नदीपैः सहितानि सरत्नदीपानि, तैः। प्रतरुणकिन्नरगीतनिस्वनैः—प्रतरुणा ये किन्नरास्तेषां गीतनिस्वनैः, हेतुभूतैः। "हेतौ" इति उभयत्र हेत्वर्थे तृतीया। "गीतं गानमिमे समे" इत्यमरः। अदुःखम्—अविद्यमानं दुःखं यस्मिंस्तम्। अनल्पकल्पवृक्षम्—अनल्पाः कल्पवृक्षा यस्मिंस्तम्। अत्र अमरपुरमतिं दधतमित्यनेन पर्यायेण वचनगत्या तदेवाऽमरपुरमिति प्रतिपादनात्पर्यायोक्तिः। तथा चोक्तं—

"पर्यायोक्तं यदन्येन प्रकारेणाऽभिधीयते।" इति।

इति जयमङ्गलः। पुष्पिताग्रा वृत्तम् ॥

**॥भाषाऽर्थः॥** राम आदिने रत्नदीपोंसे युक्त स्फटिकमणिगृहोंसे और युवक किन्नरोंके गानशब्दोंसे भी देवाङ्गनाओंको "यह स्वर्ग है" ऐसी बुद्धिको उत्पन्न करने वाले, दुःखरहित और अधिक कल्पवृक्षोंसे सम्पन्न महेन्द्रपर्वतको प्राप्त किया ॥५०॥

कालापकम् ५१—५४।

**अथ ददृशुरुदीर्णधूमधूम्रां दिशमुदधिव्यवधिं समेतसीताम् ।**
**सहरघुतनयाः प्लवङ्गसेनाः पवनसुताऽङ्गुलिदर्शितामुदक्षाः ॥ ५१ ॥**

**अन्वयः**—अथ सहरघुतनयाः प्लवङ्गसेनाः पवनसुताऽङ्गुलिदर्शिताम् उदीर्णधूमधूम्राम् उदधिव्यवधिं समेतसीतां दिशम् उदक्षाः ( सत्यः ) ददृशुः ।

**व्याख्या**—अथ = महेन्द्रपर्वतप्राप्त्यनन्तरं, सहरघुतनयाः=रामलक्ष्मणसहिताः, प्लवङ्गसेनाः=वानरपृतनाः, पवनसुताऽङ्गुलिदर्शितां=हनूमत्करशाखाप्रदर्शिताम् , उदीर्णधूमधूम्रां = महाधूमाऽस्पष्टाम् , उदधिव्यवधिं=समुद्रव्यवहितां, समेतसीतां=सङ्गतजानकीं, सीतायुक्तामिति भावः। एतादृशीं दिशं = काष्ठां, दक्षिणामिति भावः। उदक्षाः = ऊर्ध्वीकृतनेत्राः सत्यः, ददृशुः = दृष्टवन्तः ।

**॥व्युत्पत्तिः॥** सहरघुतनयाः—रघुतनयाभ्यां सहिताः, "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः। "वोपसर्जनस्य" इत्यस्य वैकल्पिकत्वात्सहशब्दस्य समावाऽभावः। पवनसुताऽङ्गुलिदर्शितां—पवनसुतस्याऽङ्गुल्या दर्शिताम्। उदीर्णधूमधूम्राम्—उदीर्णो यो धूमस्तेन धूम्राम्। उदधिव्यवधिम्—उदकानि धीयन्तेऽस्मिन्निति उदधिः,

"कर्मण्यधिकरणे च" इति किप्रत्ययः "उदकस्योदः संज्ञायाम्" इत्युदकस्योदभावः । व्यवधानं व्यवधिः, व्यवपूर्वकात् "डुधाञ् धारणपोषणयोः" इति धातोः "उपसर्गे घोः किः" इति किप्रत्ययः । उदधिर्व्यवधिर्यस्याः सा, ताम् । समेतसीतां—समेता सीताऽनया, ताम् । उदक्षाः—ऊर्ध्वीकृते अक्षिणी याभिस्ताः "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति समासाऽन्तः षच् । षित्त्वाण्णो ङीष् न भवति, तस्याऽनित्यत्वात् । तेन-दंष्ट्रेत्युपपन्नं भवति इति जयमङ्गलः । अत्राऽनन्यमनस्कतया दिशोऽवलोकनात् समाहिताऽलङ्कारः इति जयमङ्गलः । पुष्पिताग्रा वृत्तम् ।

ॐभाषाऽर्थःॐ महेन्द्र पर्वतपर पहुँचनेके अनन्तर राम और लक्ष्मणसे युक्त वानरोंकी सेनाओंने हनूमानकी उँगलीसे दिखाई गई, बढ़े हुए धूएँसे अस्पष्ट, समुद्रसे व्यवहित और सीतासे संबद्ध दक्षिण दिशाको नेत्रोंको ऊँचाकर देखा ॥ ५१ ॥

जलनिधिमगमन्महेन्द्रकुञ्जात्प्रचयतिरोहिततिग्मरश्मिभासः ।
सलिलसमुदयैर्महातरङ्गैर्भुवनभरक्षममप्यभिन्नवेलम् ॥ ५२ ॥

अन्वयः—( सहरघुतनयाः प्लवङ्गसेनाः ) महातरङ्गैः सलिलसमुदयैः भुवनभरक्षमम् अपि अभिन्नवेलं जलनिधिं प्रचयतिरोहिततिग्मरश्मिभासः महेन्द्रकुञ्जात् अगमन् ।

व्याख्या—( सहरघुतनयाः = रामलक्ष्मणसहिताः, प्लवङ्गसेनाः=वानरपृतनाः ) महातरङ्गैः = बृहद्भङ्गयुक्तैः, सलिलसमुदयैः = जलसमूहैः, भुवनभरक्षमम् अपि=लोकभरणसमर्थम् अपि, अभिन्नवेलम् = अनतिक्रान्ततीरभूमिं, जलनिधिं = समुद्रं, प्रचयतिरोहिततिग्मरश्मिभासः = उच्छ्रायाच्छादितसूर्यकिरणात् । महेन्द्रकुञ्जात् = महेन्द्रपर्वतनिकुञ्जात् , अगमन् = गतवत्यः ।

ॐव्युत्पत्तिःॐ प्रचयतिरोहिततिग्मरश्मिभासः—प्रचयेन तिरोहिताः तिग्मरश्मेः भासो येन स प्रचयतिरोहिततिग्मरश्मिभाः, तस्मात् । अगमन्—गम्लृधातोर्लुङ्, लृदित्वाच्च्लेरङ् । अत्र महानुभावताप्रतिपादनात् उदात्ताऽपरपर्याय उदाराऽलङ्कारः । यतो महातरङ्गैर्जलसमूहैर्भुवनभरक्षममपि अभिन्नवेलमिति । उदारो द्विविधो महानुभावतया विविधरत्नयोगाच्चेति । इयं महानुभावता दर्शितेति जयमङ्गलः । पुष्पिताग्रा वृत्तम् ।

ॐभाषाऽर्थःॐ राम और लक्ष्मणके साथ वानरोंकी सेना महान् तरङ्गोंसे युक्त जलसमूहसे लोकका भरण करनेको समर्थ होकर भी तीरभूमिका अतिक्रमण नहीं करनेवाले समुद्रको ऊँचाईसे सूर्यकिरणोंको आच्छादित करनेवाले महेन्द्रपर्वतके निकुञ्जसे चली गई ॥ ५२ ॥

पृथुगुरुमणिशुक्तिगर्भभासा ग्लपितरसातलसंभृताऽन्धकारम् ।
उपहतरविरश्मिवृत्तिमुच्चैः प्रलघुपरिप्लवमानवज्रजालैः ॥ ५३ ॥

**अन्वयः**—( सहरघुतनयाः प्लवङ्गसेनाः ) पृथुगुरुमणिशुक्तिगर्भभासा ग्लपित-रसातलसंभृताऽन्धकारम् उच्चैः प्रलघुपरिप्लवमानवज्रजालैः उपहतरविरश्मिवृत्तिम् ( समुद्रं महेन्द्रकुञ्जात् अगमन् )।

**व्याख्या**—( सहरघुतनयाः = रामलक्ष्मणसहिताः, प्लवङ्गसेनाः=वानरपृतनाः ) पृथुगुरुमणिशुक्तिगर्भभासा = महाऽपरिच्छेद्यमौक्तिकमुक्तास्फोटमध्यभागकान्त्या, ग्लपि-तरसातलसंभृताऽन्धकारं = क्षयितपातालोपचिततिमिरम्, उच्चैः = उपरि, प्रलघुपरि-प्लवमानवज्रजालैः = अल्पसन्तरद्धीरकसमूहैः, उपहतरविरश्मिवृत्तिम्=संताडितसूर्यकि-रणवृत्तिम् ( समुद्रं महेन्द्रकुञ्जात् अगमन् )।

❀व्युत्पत्तिः❀ पृथुगुरुमणिशुक्तिगर्भभासा—पृथवो गुरवो मणयो यासां ताः पृथुगु-रुमणयः, ताश्च ताः शुक्तयः, तासां गर्भस्य भासा। "मुक्तास्फोटः स्त्रियां शुक्तिः" इत्यमरः। ग्लपितरसातलसंभृताऽन्धकारं—ग्लपितं रसातले संभृतमन्धकारं येन तम्। प्रलघुपरिप्लवमानवज्रजालैः—प्रलघूनि परिप्लवमानानि यानि वज्राणि, तेषां जालैः। उपहतरविरश्मिवृत्तिम्—उपहता रविरश्मिवृत्तयो यस्मिन् तम्। यद्वज्रं वारिणि तरति तत्प्रशस्तमित्युक्तम्। उदाराऽलङ्कारस्य द्वितीयभेदोऽयं, तल्लक्षणं यथा—

"एतदेवाऽपरेऽन्येन वाक्याऽर्थेनाऽन्यथा विदुः।
नानारत्नवियुक्तं यत्तत्किलोदारमुच्यते॥" इति।

इति जयमङ्गलः। नव्याऽऽलङ्कारिकमते तूदात्ताऽलङ्कारस्तल्लक्षणं यथा—

"लोकाऽतिशयसम्पत्तिवर्णनोदात्तमुच्यते।
यद्वाऽपि प्रस्तुतस्याऽङ्गं महतां चरितं भवेत्॥" इति।

पुष्पिताग्रा वृत्तम्॥

❀भाषाऽर्थः❀ राम और लक्ष्मणके साथ वानरोंकी सेना बड़े और अपरिच्छेद्य मोतियोंसे युक्त सीपियोंके गर्भकी कान्तिसे पातालमें बढ़े हुए अन्धकारको नष्ट करने वाले और ऊपर छोटे छोटे तैरनेवाले हीराके समूहसे सूर्यकिरणको ताडित करनेवाले समुद्रको महेन्द्रपर्वतके कुञ्जसे चली गई॥ ५३॥

**समुपचितजलं विवर्धमानैरमलसरित्सलिलैर्विभावरीषु।**
**स्फुटमवगमयन्तमूढवारीन् शशधररत्नमयान्महेन्द्रसानून्॥ ५४॥**

**अन्वयः**—( सहरघुतनयाः प्लवङ्गसेनाः ) विभावरीषु विवर्धमानैः अमलसरि-त्सलिलैः समुपचितजलं महेन्द्रसानून् शशधररत्नमयान् ऊढवारीन् स्फुटम् अवगमय-न्तम् ( समुद्रं महेन्द्रकुञ्जात् अगमन् )।

**व्याख्या**—( सहरघुतनयाः = रामलक्ष्मणसहिताः, प्लवङ्गसेनाः=वानरपृतनाः ) विभावरीषु = रात्रिषु, विवर्धमानैः = विवृद्धिं प्राप्नुवद्भिः, अमलसरित्सलिलैः = निर्म-

लनदीजलैः, समुपचितजलं = संवृद्धनीरम् , अतएव—महेन्द्रसानून् = महेन्द्रपर्वतप्रस्थान्, शशधररत्नमयान् = चन्द्रकान्तमणिप्रचुरान् , अतः ऊढवारीन् = धृतजलान् स्फुटं = स्पष्टम् , अवगमयन्तं = बोधयन्तं, ( समुद्रं महेन्द्रकुञ्जात् अगमन् ) ।

❀व्युत्पत्तिः❀ अमलसरित्सलिलैः—अमलानि च तानि सरित्सलिलानिन्तैः । ऊढवारीन्—ऊढं वारि यैस्ते ऊढवारयस्तान् । अन्यथा कथं संवर्द्धते जलं यदि चन्द्रकान्तसानवो न स्युः । रत्नयोगादयमप्युदारालङ्कार इति जयमङ्गलः । पुष्पिताग्रा वृत्तम् ।

❀भाषाऽर्थः❀ राम और लक्ष्मणके साथ वानरोंकी सेना रात्रियोंमें बढ़नेवाले निर्मल नदीजलोंसे जिसका जल बढ़ गया है एवम् महेन्द्र पर्वतके प्रस्थोंको प्रचुर चन्द्रकान्तमणिवाले अतः जलको धारण करनेवाले जताते हुए समुद्रको महेन्द्र पर्वतके कुञ्जसे चली गई ॥ ५४ ॥

**भुवनभरसहानलङ्घ्यधाम्नः पुरुरुचिरत्नभृतो गुरूरुदेहान् ।**
**श्रमविधुरविलीनकूर्मनक्रान् दधतमुदूढभुवो गिरीनहींश्च ॥५५॥**

**अन्वयः**—( सहरघुतनयाः प्लवङ्गसेनाः ) भुवनभरसहान् अलङ्घ्यधाम्नः पुरुरुचिरत्नभृतः गुरूरुदेहान् श्रमविधुरविलीनकूर्मनक्रान् उदूढभुवो गिरीन् अहींश्च दधतम् ( समुद्रं महेन्द्रकुञ्जात् अगमन् ) ।

**व्याख्या**—( सहरघुतनयाः=रामलक्ष्मणसहिताः, प्लवङ्गसेनाः = वानरपृतनाः ) भुवनभरसहान् = लोकभारधारणसमर्थान् , अलङ्घ्यधाम्नः = गिरिपक्षे—अलङ्घनीयदेहान् , अहिपक्षे—अनभिभवनीयतेजसः, पुरुरुचिरत्नभृतः = प्रचुरसुन्दरमणिधारकान्, गुरूरुदेहान् = सगौरवविशालशरीरान्, श्रमविधुरविलीनकूर्मनक्रान् = परिश्रमपीडितगुप्तकच्छपग्राहान् , उदूढभुवः = धृतभूमीन् , एतादृशान् गिरीन् = पर्वतान् , अहींश्च = सर्पांश्च, दधतं = धारयन्तं, ( समुद्रं महेन्द्रकुञ्जात् अगमन् ) ।

❀व्युत्पत्तिः❀ पुरुरुचिरत्नभृतः—पुरूणि यानि रुचिरत्नानि तानि बिभ्रति, तान् । क्विप्प्रत्ययः, "ह्रस्वस्य पिति कृति तुक्" इति तुक् । "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु । पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ॥" इत्यमरः । गुरूरुदेहान्—गुरव उरवो देहा येषां तान् । श्रमविधुरविलीनकूर्मनक्रान्—गिरिपक्षे—श्रमविधुरा विलीनाः कूर्मा नक्राश्च येषु, तान् । अहिपक्षे—श्रमविधुराः विलीनाः कूर्मा नक्राश्च यैस्तान् । उदूढभुवः—उदूढा भूर्यैः, तान् । अहींश्च—"नश्छव्यप्रशान्" इति रुः "अनुनासिकात्परोऽनुस्वार" इत्यनुस्वारपक्षे रूपम् । "अत्राऽनुनासिकः पूर्वस्य तु वा" त्यनुनासिकपक्षे तु अहींश्चेति रूपम् । अत्र श्लेषाऽलङ्कारः, तत्र शाब्दस्तत्र च पदश्लेषोऽभङ्गरूपस्तल्लक्षणं यथा—

"वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि ।
श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः ॥" इति ।

पुष्पिताग्रा वृत्तम् ॥

❀भाषाऽर्थः❀ राम और लक्ष्मण के साथ वानरों की सेना पृथ्वी का भार सहने वाले, ( पर्वतपक्षमें ) अलंघनीय शरीरवाले ( सर्पपक्षमें ) अभिभवके अविषय, तेजसे युक्त, प्रचुर सुन्दर रत्नोंको धारण करनेवाले, गुरु और विशाल शरीरवाले, ( पर्वतपक्षमें ) परिश्रमसे पीडित और छिपे हुए कछुए और ग्राहोंसे युक्त (सर्पपक्षमें) श्रमसे पीडित कछुवे और ग्राह जिनमें छिपे हुए हैं, पृथ्वीको धारण करनेवाले पर्वत और सर्पोंको धारण करते हुए समुद्र को महेन्द्र पर्वतके कुञ्जसे चली गई ॥ ५५ ॥

**प्रददृशुरुरुमुक्तशीकरौघान् विमलमणिद्युतिसंभृतेन्द्रचापान् ।**
**जलमुच इव धीरमन्द्रघोषान् क्षितिपरितापहृतो महातरङ्गान् ॥ ५६ ॥**

अन्वयः—( सहरघुतनयाः प्लवङ्गसेनाः ) उरुमुक्तशीकरौघान् विमलमणिद्युतिसंभृतेन्द्रचापान् धीरमन्द्रघोषान् क्षितिपरितापहृतो जलमुच इव महातरङ्गान् प्रददृशुः ।

व्याख्या—( सहरघुतनयाः प्लवङ्गसेनाः ) उरुमुक्तशीकरौघान् = महाप्रकीर्णाऽम्बुकणसमूहान्, विमलमणिद्युतिसंभृतेन्द्रचापान् = निर्मलरत्नकान्तिसन्ततेन्द्रायुधान्, धीरमन्द्रघोषन् = मधुरगम्भीरध्वनीन्, क्षितिपरितापहृतः = पृथ्वीसन्तापहारिणः जलमुच इव = मेघान् इव, महातरङ्गान् = विशालभङ्गान्, प्रददृशुः = अवलोकयन् ।

❀व्युत्पत्तिः❀ उरुमुक्तशीकरौघान्—जलमुक्पक्षे—उरवो मुक्ताः शीकरौघा यैस्तान्। महातरङ्गपक्षे—उरवो मुक्ताः शीकरौघा येषु तान् । विमलमणिद्युतिसंभृतेन्द्रचापान्—जलमुक्पक्षे—विमलमणीनामिव द्युतयो येषां ते विमलमणिद्युतयः, ते संभृताः (सन्तताः ) इन्द्रचापा येषु तान् । महातरङ्गपक्षे—विमलमणिद्युतय एव संभृता इन्द्रचापा येषु तान् । अत्र श्लेषसङ्कीर्णोपमा । पुष्पिताग्रा वृत्तम् ।

❀भाषाऽर्थः❀ राम और लक्ष्मणके साथ वानरोंकी सेनाने बड़े बड़े जलकणसमूह को छोड़नेवाले, ( मेघपक्षमें )-निर्मल मणियोंके सदृश कान्तिवाले इन्द्रधनुषोंसे युक्त, ( महातरङ्ग पक्षमें )—निर्मलमणिकान्तिरूप इन्द्रधनुषोंसे सम्पन्न, मधुर और गम्भीर शब्दवाले पृथ्वीके सन्तापको हरनेवाले मेघोंके सदृश महान् तरङ्गोंको देखा ॥ ५६ ॥

कुलकम् ५७—६० ।

**विद्रुममणिकृतभूषा मुक्ताफलनिकररञ्जिताऽऽत्मानः ।**
**बभुरुदकनागभग्ना वेलातटशिखरिणो यत्र ॥ ५७ ॥**

अन्वयः—यत्र विद्रुममणिकृतभूषा मुक्ताफलनिकररञ्जिताऽऽत्मानः उदकनागभग्ना वेलातटशिखरिणो बभुः ( सहरघुतनयाः प्लवङ्गसेना तम् ईयुः ) ।

व्याख्या—यत्र = जलनिधौ, विद्रुममणिकृतभूषाः = प्रवालरत्नविहिताऽलङ्काराः

मुक्ताफलनिकररञ्जिताऽऽत्मानः=मौक्तिकफलसमूहोपरञ्जितस्वरूपाः, उदकनागभग्नाः= जलहस्तिरुग्णाः, वेलातटशिखरिणः = समुद्रतीराणि पर्वताश्च, बभुः = शोभन्ते स्म, जलनिधिं मायामिव सहरघुतनयाः प्लवङ्गसेनाः तम् ईयुः इति वक्ष्यमाणपदैः सम्बन्धः ।

ॐव्युत्पत्तिःॐ विद्रुममणिकृतभूषाः—विद्रुमाश्च मणयश्च विद्रुममणयस्तैः कृता भूषा यैस्ते । तत्र वेलातटानां विद्रुमकृतभूषत्वं शिखरिणां च मणिकृतभूषत्वं बोध्य-मतो यथासंख्याऽलङ्कारश्च । एवमुत्तरत्राऽपि । मुक्ताफलनिकररञ्जितात्मानः—मुक्ताश्च फलानि च तेषां निकरास्तै रञ्जित आत्मा यैस्ते । तत्र वेलातटानां मुक्तानिकैरञ्जि-ताऽऽत्मत्वं शिखरिणां च फलनिकररञ्जिताऽऽत्मत्वम् । उदकनागभग्नाः—उदकानि च नागाश्च उदकनागास्तैर्भग्नाः । वेलातटानामुदकभग्नत्वं शिखरिणां च नागभग्नत्वं यथायथं बोध्यम् । वेलातटशिखरिणः—वेलातटानि च शिखरिणश्च । अत्र हेतुश्लेषः, हेतुद्वारेण विशेषणानां निर्देशात् । विद्रुममणिकृतभूषात्वाज्जलहस्तिभग्नत्वाच्च बभुरिति जयमङ्गलः । अत्राऽऽर्यावृत्तम् ।

ॐभाषाऽर्थःॐ जहाँपर प्रवाल और मणियोंसे अलङ्कार धारण करनेवाले मोती और फलोंके समूहोंसे अपनेको उपरञ्जित करनेवाले, और जल और हाथियोंसे भग्न होनेवाले समुद्रतट और पर्वत शोभित हुए थे, राम और लक्ष्मणके साथ वानरोंकी सेनाने समुद्रको मायाकी तरह जाना ॥ ४७ ॥

**भृतनिखिलरसातलः सरत्नः शिखरिसमोर्मितिरोहिताऽन्तरीक्षः ॥**
**कुत इह परमाऽर्थतो जलौघो जलनिधिमीयुरतः समेत्य मायाम् ॥४८॥**

अन्वयः—भृतनिखिलरसातलः सरत्नः शिखरिसमोर्मितिरोहितान्तरीक्षः ज-लौघ इह परमाऽर्थतः कुतः ? अतः समेत्य ( सहरघुतनयाः प्लवङ्गसेनाः ) जल-निधिं मायाम् ईयुः ।

व्याख्या—भृतनिखिलरसातलः=पूरितसमस्तपातालः, सरत्नः = रत्नैः सहितः, शिखरिसमोर्मितिरोहिताऽन्तरीक्षः = पर्वतसदृशतरङ्गाच्छादिताऽऽकाशः, जलौघः = सलिलसमूहः, इह=अस्मिन् प्रदेशे, कुतः=कस्मात् , संभवतीति शेषः । अतः=अस्मा-त्कारणात् , समेत्य = समागत्य, सहरघुतनयाः = रामलक्ष्मणसहिताः, प्लवङ्गसेनाः= वानरपृतनाः, जलनिधिं = समुद्रं, मायां = शाम्बरीम् , ईयुः = ज्ञातवत्यः । सर्वेषां गत्यर्थानां धातूनां ज्ञानाऽर्थत्वात् अत्र इण् धातुर्ज्ञानाऽर्थकः ।

ॐव्युत्पत्तिःॐ भृतनिखिलरसातलः—भृतं निखिलं रसातलं येन सः । शिखरिस-मोर्मितिरोहिताऽन्तरीक्षः—शिखरिभिः समा ये ऊर्मयस्तैस्तिरोहितमन्तरीक्षं येन सः । कुतः—कस्मादिति, "पञ्चम्यास्तसिल्" इति तसिल्, "कु तिहोः" इति किमः कुः । अत्र मायामित्यन्तर्गतोपमारूपतया निर्देशात् अपह्नुतिरिति । विद्यमानाऽर्थस्य च

अपह्नवात् । तथा चोक्तम्—

"अपह्नुतिरितीष्टाऽत्र किञ्चिदन्तर्गतोपमा ।
भूताऽर्थाऽपह्नवादेषा क्रियतेऽस्या भिदा यथा ॥" इति ।

इति जयमङ्गलः । पुष्पिताग्रा वृत्तम् ।

※भाषाऽर्थः※ संपूर्ण पातालको पूर्ण करनेवाला, रत्नोंसे युक्त, पर्वतोंके सदृश तरङ्गोंसे आकाशको आच्छादित करनेवाला जलसमूह ( समुद्र ) यहाँ वास्तवमें कैसे हो सकता है ? इस कारणसे वहां आकर राम और लक्ष्मणके साथ वानरोंकी सेनाने समुद्रको माया जान ली ॥ ५८ ॥

**शशिरहितमपि प्रभूतकान्तिं विबुधहृतश्रियमप्यनष्टशोभम् ॥**
**मथितमपि सुरैर्दिवं जलौघैः समभिभवन्तमविक्षतप्रभावम् ॥ ५९ ॥**

**अन्वयः**—( सहरघुतनयाः प्लवङ्गसेनाः ) शशिरहितम् अपि प्रभूतकान्तिं विबुधहृतश्रियम् अपि अनष्टशोभं, सुरैः मथितम् अपि जलौघैः दिवं समभिभवन्तम् अविक्षतप्रभावम् ( जलनिधिम् ईयुः ) ।

**व्याख्या**—( सहरघुतनयाः प्लवङ्गसेनाः ) शशिरहितम् अपि = चन्द्रवियुक्तम् अपि, प्रभूतकान्तिं = प्रचुरच्छविं, पद्मरागादिरत्नैरवभासितत्वादिति भावः । विबुधहृतश्रियम् अपि = देवहृतलक्ष्मीकम् अपि, अनष्टशोभम् = अतिरोहितकान्तिं, सुरैः= देवैः, मथितम् अपि = कृतमथनम् अपि, जलौघैः = अम्बुसमूहैः, दिवम् = आकाशं, समभिभवन्तं = जयन्तम्, अत एव अविक्षतप्रभावम् = अखण्डितमहत्त्वम् ( जलनिधिं = समुद्रम् , ईयुः = ज्ञातवत्यः ) ।

※व्युत्पत्तिः※ विबुधहृतश्रियम्—विबुधैः हृता श्रीर्यस्मात्तम् । अत्र शशिरहितत्वादिहेतौ सत्यपि कान्त्याद्यभावरूपफलाऽभावात् विशेषोक्तिरलङ्कारस्तल्लक्षणं यथा—
"सति हेतौ फलाऽभावो विशेषोक्तिस्तथा द्विधा ।" इति । द्विधेति उक्तनिमित्ताऽनुक्तनिमित्ता च । अत्र अविक्षतप्रभावस्वरूपनिमित्तस्य उक्तत्वादुक्तनिमित्तेयम् । पुष्पिताग्रा वृत्तम् ।

※भाषाऽर्थः※ राम और लक्ष्मणके साथ वानरोंकी सेनाने चन्द्रसे रहित होकर भी प्रचुर कान्तिवाले, देवताओंसे लक्ष्मीका हरण किये जानेपर भी जिसकी शोभा नष्ट नहीं हुई है, देवताओंसे मथित होकर भी जलके समूहोंसे आकाशको जीतनेवाले और अखण्डित महत्त्वसे युक्त समुद्रको जान लिया ॥ ५९ ॥

**क्षितिकुलगिरिशेषदिग्गजेन्द्रान् सलिलगतामिव नावमुद्वहन्तम् ॥**
**धृतविधुरधरं महावराहं गिरिगुरुपोत्रमपीहितैर्जयन्तम् ॥ ६० ॥**

**अन्वयः**—( सहरघुतनयाः प्लवङ्गसेनाः ) क्षितिकुलगिरिशेषदिग्गजेन्द्रान्

सलिलगतां नावम् इव उद्वहन्तं, धृतविधुरधरं गिरिगुरुपोत्रं महावराहम् अपि ईहितैः जयन्तम् ( जलनिधिम् ईयुः ) ।

**व्याख्या**—( सहरघुतनयाः प्लवङ्गसेनाः ) क्षितिकुलगिरिशेषदिग्गजेन्द्रान्= पृथिवीकुलपर्वताऽनन्तैरावतादीन्, सलिलगतां = जलप्राप्तां, नावम् इव = तरिम् इव, उद्वहन्तं = धारयन्तम् , अतएव धृतविधुरधरम् = उद्धृढविह्वलभूमिं, गिरिगुरुपोत्रं = पर्वतगुरुमुखं, महावराहम् अपि = आदिवराहम् अपि, वराहाऽवतारधारिणं भगवन्तमपीत्यर्थः । ईहितैः = चेष्टितैः, जयन्तम् = अभिभवन्तं, जलनिधिं = समुद्रम्, ईयुः = ज्ञातवत्यः ।

❀व्युत्पत्तिः❀ क्षितिकुलगिरिशेषदिग्गजेन्द्रान्—क्षितिश्च कुलगिरयश्च शेषश्च दिग्गजेन्द्राश्च, तान् । धृतविधुरधरं—धृता विधुरा धरा येन स धृतविधुरधरस्तम् । गिरिगुरुपोत्रं—गिरिरिव गुरु गिरिगुरु, तादृशं पोत्रं यस्य तम् । "हलसूकरयोः पुव" इति "पूञ् पवने" इति धातोः करणे ष्ट्रन् । "मुखाऽग्रे क्रोडहलयोः पोत्रम्" इत्यमरः । अत्र क्षित्यादिधारणादधिकगुणस्य जलनिधेस्तोत्रव्यपदेशेन वराहेण तुल्यत्वात् । तमपि महावराहं जयन्तमिति किंचिद्विधातुमिच्छया निन्दनात् । तथा चोक्तं—

"दूराऽधिकगुणस्तोत्रव्यपदेशेन तुल्यता ।
किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ यथा॥" इति ।

इति जयमङ्गलः । पुष्पिताग्रा वृत्तम् ।

❀भाषाऽर्थः❀ राम और लक्ष्मणके साथ वानरोंकी सेनाओंने पृथ्वी, कुलपर्वत, शेषनाग और ऐरावत आदि दिग्गजोंको जलप्राप्त नौकाके सदृश धारण करनेवाले और पीडित पृथ्वीको धारण करनेवाले अत एव पर्वतके सदृश गुरु थूथने (मुख) वाले महावराहको भी चेष्टाओंसे जीतनेवाले समुद्रको जाना ॥ ६० ॥

**गिरिपरिगतचञ्चलाऽऽपगाऽन्तं जलनिवहं दधतं मनोऽभिरामम् ॥**
**गलितमिव भुवो विलोक्य रामं धरणिधरस्तनशुक्लचीनपट्टम् ॥६१॥**

**अन्वयः**—( सहरघुतनयाः प्लवङ्गसेनाः ) रामं विलोक्य भुवो गलितं धरणिधरस्तनशुक्लचीनपट्टम् इव गिरिपरिगतचञ्चलाऽऽपगान्तं मनोऽभिरामं जलनिवहं दधतम् ( जलनिधिम् ईयुः ) ।

**व्याख्या**—( सहरघुतनयाः प्लवङ्गसेनाः )रामं = रामचन्द्रं भर्तारमिति ध्वनिः । विलोक्य=दृष्ट्वा, भुवः=पृथिव्याः, नायिकाया इति ध्वनिः । दृष्टाया इति शेषः । गलितं= स्रस्तं, धरणिधरस्तनशुक्लचीनपट्टम् इव=पर्वतकुचशुभ्रचीनदेशीयपट्टवस्त्रम् इव, गिरिपरिगतचञ्चलाऽऽपगाऽन्तं = पर्वतसंश्लिष्टविलोलनद्यवयवं, मनोऽभिरामं = चेतःसुन्दरं, जलनिवहं=सलिलसमूहं, दधतं=धारयन्तम् , जलनिधिम् ईयुः ।

॥व्युत्पत्तिः॥ धरणिधरस्तनशुक्लचीनपट्टं—धरणिधरौ एव स्तनौ धरणिधरस्तनौ, तयोः शुक्लचीनपट्टम्। गिरिपरिगतचञ्चलाऽऽपगान्तं—गिरिभिः परिगताः चञ्चला आपगान्ता यस्मिंस्तम्। अत्रोपमारूपकं, तल्लक्षणं यथा—
"उपमानस्य तद्भावमुपमेयस्य रूपयन्। यो वक्त्युपमाभेदमुपमारूपकं यथा॥" इति।
इति जयमङ्गलः। नव्याऽऽलङ्कारिकमते तु रूपकोपमयोः सङ्करः। पुष्पिताग्रावृत्तम्।

॥भाषाऽर्थः॥ राम और लक्ष्मणके साथ वानरोंकी सेनाओंने रामको देखकर पृथ्वीके गलित पर्वतरूप स्तनोंके शुभ्र चीनदेशीय पट्टवस्त्रके सदृश, पर्वतोंसे संसर्गयुक्त चञ्चल नदीके एकदेशोंसे युक्त मनोहर जलसमूहको धारण करनेवाले समुद्रको जाना॥

**अपरिमितमहाऽद्भुतैर्विचित्रश्च्युतमलिनः शुचिभिर्महानलङ्घ्यैः।**
**तरुमृगपतिलक्ष्मणक्षितीन्द्रैः समधिगतो जलधिः परं बभासे॥ ६२॥**

अन्वयः—अपरिमितमहाऽद्भुतैः शुचिभिः अलङ्घ्यैः तरुमृगपतिलक्ष्मणक्षितीन्द्रैः समधिगतो विचित्रः च्युतमलिनो महान् जलधिः परं बभासे।

व्याख्या—अपरिमितमहाद्भुतैः = अपरिमाणाऽत्यर्थाश्चर्यरूपैः, शुचिभिः = निर्मलैः, अलङ्घ्यैः = अनभिभवनीयैः, तरुमृगपतिलक्ष्मणक्षितीन्द्रैः = सुग्रीवलक्ष्मणरामचन्द्रैः, समधिगतः = संप्राप्तः, विचित्रः = अद्भुतरूपः, च्युतमलिनः = निर्मलः, महान् = विशालः, जलधिः = समुद्रः, परम् = अत्यर्थं, बभासे = शोभते स्म, एवं च कृत्वा समुद्रेणाऽपि संप्राप्तास्ते परं बभासिरे इति शेषः।

॥व्युत्पत्तिः॥ तरुमृगपतिलक्ष्मणक्षितीन्द्रैः—तरुचारिणो मृगास्तरुमृगाः, तत्पतिश्च लक्ष्मणश्च क्षितीन्द्रश्च, तैः। अत्र अनेकेषां रामादीनामपरिमितमहाद्भुतत्वादिगुणैः भासनक्रियया च तुल्यतायास्तुल्ययोगिताऽलङ्कारस्तल्लक्षणं यथा—
"क्रियादिभिरनेकस्य तुल्यता तुल्ययोगिता।" इति।
पुष्पिताग्रा वृत्तम्।

॥भाषाऽर्थः॥ अपरिमित और अतिशय अद्भुत, निर्मल तथा अलङ्घनीय सुग्रीव, लक्ष्मण और रामचन्द्रजीसे संप्राप्त, विचित्र, निर्मल और विशाल समुद्र अतिशय शोभित हुआ॥ ६२॥

**न भवति महिमा विना विपत्तेरवगमयन्निव पश्यतः पयोधिः।**
**अविरतमभवत् क्षणे क्षणेऽसौ शिखरिपृथुप्रथितप्रशान्तवीचिः॥६३॥**

अन्वयः—महिमा विपत्तेः विना न भवति (इति) पश्यतः अवगमयन् इव असौ पयोधिः क्षणे क्षणे अविरतं शिखरिपृथुप्रथितप्रशान्तवीचिः अभवत्।

व्याख्या—महिमा = महत्त्वं, विपत्तेर्विना = आपत्तिं विना, न भवति = नो संजायते, (इति = इत्थम्) पश्यतः = विलोकयतः, रामादीनित्यर्थः। अवगमयन्

इव = बोधयन् इव, असौ, पयोधिः = समुद्रः, क्षणे क्षणे = प्रतिक्षणम्, अविरतम् = अविच्छेदं यथा तथा, शिखरिपृथुप्रथितप्रशान्तवीचिः = पर्वतोपमविशालविस्तीर्णशान्ततरङ्गः, अभवत् = भूतवान्।

**ॐव्युत्पत्तिःॐ** महिमा—महतो भावः, "पृथ्वादिभ्य इमनिज्वा" इति इमनिच्प्रत्ययः। विपत्तेः—विनापदेन योगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति पञ्चमी, पक्षे तृतीया द्वितीया च। शिखरिपृथुप्रथितप्रशान्तवीचिः—शिखरिणा इव पृथवः शिखरिपृथवः, तादृशाः प्रथिताः प्रशान्ताः वीचयो यस्य सः। अत्र निदर्शनाऽलङ्कारः। तत्राऽपि सम्भवद्वस्तुसम्बन्धनिदर्शना। तल्लक्षणं यथा—

"सम्भवन्वस्तुसम्बन्धोऽसम्भवन्वाऽपि कुत्रचित्।
यत्र बिम्बाऽनुबिम्बत्वं बोधयेत्सा निदर्शना।" इति।

पुष्पिताग्रा वृत्तम्।

**ॐभाषाऽर्थःॐ** "महिमा विपत्ति के विना नहीं होती है" इस बातको देखनेवाले राम आदिको जताते हुएके सदृश समुद्र प्रतिक्षण लगातार पर्वतके सदृश महान् और विस्तीर्ण प्रशान्त तरङ्ग वाला हो गया॥ ६३॥

**मृदुभिरपि बिभेद पुष्पबाणैश्चलशिशिरैरपि मारुतैर्ददाह।**
**रघुतनयमनर्थपण्डितोऽसौ, न च मदनः क्षतमाततान नाऽर्चिः॥६४॥**

**अन्वयः**—अनर्थपण्डितः असौ मदनः रघुतनयं मृदुभिरपि पुष्पबाणैः बिभेद, क्षतं न आततान, जलशिशिरैरपि मारुतैः ददाह, अर्चिः न आततान।

**व्याख्या**—अनर्थपण्डितः = निष्प्रयोजनकुशलः, असौ, मदनः = कामदेवः, रघुतनयं = रामचन्द्रं, मृदुभिरपि=कोमलैरपि, पुष्पबाणैः कुसुमशरैः, बिभेद=भिन्नवान्, परं, क्षतं=खण्डनं, न आततान=नो जनितवान्, एवं च—जलशिशिरैरपि=सलिलशीतलैरपि, मारुतैः=वायुभिः, ददाह=दग्धवान्, परम्, अर्चिः=ज्वालां, न आततान=नो जनितवान्।

**ॐव्युत्पत्तिःॐ** बिभेद—"भिदिर् विदारणे" इति धातोर्लिट्। अत्र मृदुपुष्परूपद्रव्याणां भेदनक्रियायां तथा जलशिशिरमारुतरूपद्रव्याणां च दाहनक्रियायामनुपपत्तेर्विरोधाऽलङ्कारः। सोदाहरणं तल्लक्षणं यथा—

"विरोधोऽनुपपत्तिश्चेद्गुणद्रव्यक्रियादिषु।
अमन्दचन्दनस्यन्दः स्वच्छन्दं दन्दहीति माम्॥" इति।

पुष्पिताग्रा वृत्तम्॥

**ॐभाषाऽर्थःॐ** अनर्थपण्डित कामदेवने रामचन्द्रजीको कोमल फूलके बाणोंसे भी भेदन किया परन्तु खण्डन नहीं किया, एवम् जलसे ठण्डे वायुओं से भी तप्त किया परन्तु ज्वाला नहीं फैलाई॥ ६४॥

**अथ मृदुमलिनप्रभौ दिनाऽन्ते जलधिसमीपगतावतीतलोकौ ।**
**अनुकृतिमितरेतरस्य मूर्त्योर्दिनकरराघवनन्दनावकार्ष्टाम् ॥ ६५ ॥**

**अन्वयः**—अथ मृदुमलिनप्रभौ जलधिसमीपगतौ अतीतलोकौ दिनकरराघवनन्दनौ दिनान्ते इतरेतरस्य मूर्त्योः अनुकृतिम् अकार्ष्टाम् ।

**व्याख्या**—अथ = अनन्तरं, दिनाऽन्ते = सायङ्काले, मृदुमलिनप्रभौ = कोमलमलीमसकान्ती, जलधिसमीपगतौ = समुद्रनिकटप्राप्तौ, अतीतलोकौ = त्यक्तलोकौ, दिनकरराघवनन्दनौ = सूर्यरामौ, दिनाऽन्ते = सायङ्काले, इतरेतरस्य = अन्योन्यस्य, मूर्त्योः = देहयोः, अनुकृतिम्=अनुकरणम् , अकार्ष्टां=कृतवन्तौ ।

**ॐव्युत्पत्तिःॐ** **मृदुमलिनप्रभौ**—मृद्वी मलिना प्रभा ययोस्तौ। दिनकरराघवनन्दनौ—रघोरपत्यं पुमान् राघवः, "तस्याऽपत्यम्" इत्यण् । दिनकरश्च राघवनन्दनश्च । मूर्त्योः—"मूर्तिः काठिन्यकाययोः" इत्यमरः । अत्र पर्यायेण सूर्यरामयोरुपमानोपमेयत्वात् उपमेयोपमाऽलङ्कारस्तल्लक्षणं यथा—

"पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता ।
धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ।" इति ।

पुष्पिताग्रा वृत्तम् ॥

**ॐभाषाऽर्थःॐ** अनन्तर कोमल और मलिन कान्तिवाले, समुद्रके समीप प्राप्त, लोकका त्याग करनेवाले सूर्य और रामचन्द्रने एकने दूसरेके शरीरका अनुकरण किया॥

**अपहरदिव सर्वतो विनोदान् दयितगतं दधदेकधा समाधिम् ।**
**घनरुचि ववृधे ततोऽन्धकारं सह रघुनन्दनमन्मथोदयेन ॥ ६६ ॥**

**अन्वयः**—ततो विनोदान् सर्वतः अपहरत् इव, दयितगतं समाधिम् एकधा दधत् , घनरुचि अन्धकारं रघुनन्दनमन्मथोदयेन सह ववृधे ।

**व्याख्या**—ततः=अनन्तरं, विनोदान्=दिवा चेतःसंस्थापकानुपायान्, सर्वतः= सर्वैः प्रकारैः, अपहरत् इव = अपनयत् इव, दयितगतं = प्रियजनगतं, समाधिं = चित्तैकाग्रताम्, एकधा = एकप्रकारेण, दधत् = धारयत् , घनरुचि = मेघकान्ति, अन्धकारं = तिमिरं, रघुनन्दनमन्मथोदयेन = राममदनोद्गमेन, सह = समं, ववृधे = वर्धते स्म ।

**ॐव्युत्पत्तिःॐ** सर्वतः—"आद्यादिभ्य उपसंख्यानम्" इति तसिः । अत्राऽन्धकारस्य रघुनन्दनमन्मथोदयस्य च वर्धनक्रियायां सहभावात्सहोक्तिरलङ्कारः । सोदाहरणं तल्लक्षणं यथा—

"सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः ।
दिगन्तमगमद्यस्य कीर्तिः प्रत्यर्थिभिः सह ॥" इति ।

पुष्पिताग्रा वृत्तम् ।

❀भाषाऽर्थः❀ तब दिलबहलावके उपायोंको सब प्रकारोंसे अपहरण करते हुएके सदृश, प्रियजनमें गई हुई चित्तकी एकाग्रताको एकप्रकारसे धारण करता हुआ मेघ-तुल्य कान्तिवाला अन्धकार रामचन्द्रजीके कामोदयके साथ बढ़ा ॥ ६६ ॥

**अधिजलधि तमः क्षिपन् हिमांशुः परिददृशेऽथ दृशां कृताऽवकाशः ।**
**विदधदिव जगत् पुनः प्रलीनम् भवति महान् हि पराऽर्थ एव सर्वः॥६७॥**

**अन्वयः**—अथ हिमांऽशुः अधिजलधि तमः क्षिपन् दृशां कृताऽवकाशः प्रलीनं जगत् पुनः विदधत् इव परिददृशे, हि सर्वो महान् पराऽर्थ एव भवति ।

**व्याख्या**—अथ = अन्धकारवर्धनाऽनन्तरं, हिमांऽशुः = चन्द्रः, अधिजलधि= समुद्रे, तमः = अन्धकारं, क्षिपन् = अपनयन्, अत एव—दृशां = दृष्टीनां, कृताऽवकाशः = दत्ताऽवसरः, एवं च प्रलीनं = तिरोभूतं, प्राक्तिमिरोपचयादिति भावः, जगत् = लोकं, पुनः = भूयः, विदधत् इव = सृजन् इव, परिददृशे = दृष्टः, उक्तमर्थ-मर्थान्तरन्यासेन द्रढयति—भवतीति । हि = यतः । सर्वः = निखिलः, महान्=महापुरुषः, पराऽर्थ एव = अन्यहितकारक एव, भवति = विद्यते ।

❀व्युत्पत्तिः❀ अधिजलधि—जलधौ इति, "अव्ययं विभक्ती"त्यादिना विभक्त्यर्थेऽव्ययीभावः । परिददृशे—कर्मणि लिट् । तत्र अर्थान्तरन्यासवती परिवृत्तिरिति जयमङ्गलः । नव्यालङ्कारिकमते तु उत्प्रेक्षासङ्कीर्णोऽर्थान्तरन्यासः । पुष्पिताग्रा वृत्तम् ।

❀भाषाऽर्थः❀ अन्धकार बढ़नेके अनन्तर चन्द्र समुद्रमें अन्धकारको हटाते हुए, दृष्टिको अवसर देते हुए और पहले अन्धकारके कारण तिरोभूत जगत्को फिर सृष्टि करते हुएके सदृश दिखाई पड़े, क्योंकि सब महापुरुष दूसरेके लिए ही होता है ॥६७॥

**अशनिरयमसौ कुतो निरभ्रे शितशरवर्षमसत् तदप्यशार्ङ्गम् ।**
**इति मदनवशो मुहुः शशाऽङ्के रघुतनयो न च निश्चिकाय चन्द्रम्॥६८॥**

**अन्वयः**—"अयम् अशनिः, असौ निरभ्रे कुतः ? शितशरवर्षम्, तदपि अशार्ङ्गम्, ( अतः ) असत्" इति मदनवशो रघुतनयः शशाऽङ्के मुहुः( व्यमृशत् ) चन्द्रं न निश्चिकाय ।

**व्याख्या**—अयं = दृश्यमानः, अशनिः = वज्रम्, असौ = अशनिः, निरभ्रे= मेघरहित आकाशे, कुतः = कस्माद्भवति, यतोऽशनिर्मेघादुत्पद्यत इति भावः । शित-शरवर्षं = तीक्ष्णबाणवृष्टिः, तदपि = शितशरवर्षमपि, अशार्ङ्गं=धनूरहितं, यतो धनुष एव शरवर्षं भवति, ( अतः = अस्मात् कारणात् ) असत्=अविद्यमानं, शितशरवर्षं नेत्यर्थः । इति = इत्थं, मदनवशः = कामाऽभिभूतः, रघुतनयः = रामः, शशाऽङ्के =

चन्द्रमसि विषये, मुहुः = वारं वारं, व्यमृशदिति शेषः । ( व्यमृशत् = चिन्तितवानित्यर्थः ) चन्द्रं = हिमांऽशुं, न निश्चिकाय = न निश्चितवान् ।

❀व्युत्पत्तिः शितशरवर्षं—शितशराणां वर्षम् । निश्चिकाय—"विभाषा चेः" इति कुत्वम् । अत्र ससन्देहाऽलङ्कार इति जयमङ्गलः । नव्यालङ्कारिकमते तु सन्देहाऽलङ्कारः, प्रकृते चन्द्रमसि अप्रकृतयोरशनिशितशरवर्षयोः प्रतिभोत्थितसंशयोत्पत्तेः । तत्राऽप्ययं शुद्धसन्देहस्तल्लक्षणं यथा—

"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।
शुद्धो निश्चयगर्भोऽसौ निश्चयाऽन्त इति त्रिधा ॥" इति ।

पुष्पिताग्रा वृत्तम् ।

❀भाषाऽर्थः❀ "यह वज्र है, वह भी मेघरहित आकाशमें कैसे हो सकता है ? यह तीक्ष्णशरवृष्टि है, वह भी विना धनुके कैसे हो सकती है ?" कामसे अभिभूत रामचन्द्रजीने चन्द्रके विषयमें बारंबार ऐसी तर्कना की, परन्तु चन्द्रका निश्चय नहीं किया ॥ ६८ ॥

**कुमुदवनचयेषु कीर्णरश्मिः क्षततिमिरेषु च दिग्वधूमुखेषु ।**
**वियति च विललास तद्वदिन्दुर्विलसति चन्द्रमसो न यद्वदन्यः ॥६९॥**

अन्वयः—इन्दुः कुमुदवनचयेषु क्षततिमिरेषु दिग्वधूमुखेषु वियति च कीर्णरश्मिः ( सन् ) तद्वत् विललास, यद्वत् चन्द्रमसः अन्यः न विलसति ।

व्याख्या—इन्दुः = चन्द्रमाः, कुमुदवनचयेषु = कैरवकाननसमूहेषु, क्षततिमिरेषु = खण्डिताऽन्धकारेषु, दिग्वधूमुखेषु = दिशानारीवक्त्रेषु, वियति च = आकाशे च, कीर्णरश्मिः = क्षिप्तमयूखः सन् , तद्वत् = तेन प्रकारेण, विललास = शुशुभे, यद्वत् = येन प्रकारेण, चन्द्रमसः = इन्दोः, अन्यः = भिन्नः, न विलसति=न शोभते ।

❀व्युत्पत्तिः❀ दिग्वधूमुखेषु—दिशो वध्व इव दिग्वध्वस्तासां मुखेषु । तद्वत्—तेन तुल्यं, "तेन तुल्यं क्रिया चेद्वतिः" इति वतिः, एवं यद्वदित्यत्राऽपि । चन्द्रश्चन्द्र इव विललास इति भावाऽर्थस्तेन एकस्यैव चन्द्रस्योपमानोपमेयत्वादनन्वयाऽलङ्कारस्तल्लक्षणं सोदाहरणं यथा—

"उपमानोपमेयत्वे यत्रैकस्यैव जाग्रतः । इन्दुरिन्दुरिवेत्यादौ भवेदेवमनन्वयः ॥" इति ।

पुष्पिताग्रा वृत्तम् ॥

❀भाषाऽर्थः❀ चन्द्रदेव कुमुदवनोंके समूहोंमें, खण्डित अन्धकारवाले दिग्वधुओंके मुखोंमें और आकाशमें भी किरणोंको फैलाते हुए, उस प्रकारसे शोभित हुए जिस प्रकारसे उनसे अन्य शोभित नहीं होता है ॥ ६९ ॥

**शरणमिव गतं तमो निकुञ्जं विटपिनिराकृतचन्द्ररश्म्यरातौ ।**
**पृथुविषमशिलाऽन्तरालसंस्थं सजलघनद्युति भीतवत् ससाद ॥ ७० ॥**

**अन्वयः**—पृथुविषमशिलाऽन्तरालसंस्थं सजलघनद्युति तमो भीतवत् विटपिनिराकृतचन्द्ररश्म्यरातौ निकुञ्जे शरणं गतम् इव ससाद ।

**व्याख्या**—पृथुविषमशिलाऽन्तरालसंस्थं = विशालाऽसमप्रस्तराऽभ्यन्तरस्थितं, सजलघनद्युति = जलपूर्णमेघकान्ति, तमः = अन्धकारं, भीतवत् = त्रस्तवत्, विटपिनिराकृतचन्द्ररश्म्यरातौ = वृक्षनिरस्तहिमांऽशुकिरणशत्रौ, निकुञ्जे=कुञ्जे, शरणं=रक्षकं, गतम् इव = प्राप्तम् इव, ससाद = विलीनम् । यथा कश्चिद्भीतो दुर्गे निलीयते तथैव अन्धकारमपि कुञ्जे निलीनमिति भावः ।

❀व्युत्पत्तिः❀ पृथुविषमशिलाऽन्तरालसंस्थं—पृथवो विषमा याः शिलाः, तासामन्तराले संस्था (स्थितिः) यस्य तत् । सजलघनद्युति—सजलघनस्येव द्युतिर्यस्य तत् । विटपिनिराकृतचन्द्ररश्म्यरातौ—विटपिभिः निराकृताः चन्द्ररश्मय एव अरातयो यस्मात्तस्मिन् । अत्रोत्प्रेक्षावयवस्तल्लक्षणं यथा—

"श्लिष्टस्यार्थेन संयुक्तः किंचिच्चोत्प्रेक्षयाऽन्वितः ।
रूपकाऽर्थेन च पुनरुत्प्रेक्षाऽवयवो यथा ॥" इति ।

इति जयमङ्गलः । नव्यालङ्कारिकमते तु उपमारूपकसंकीर्णोत्प्रेक्षा । पुष्पिताग्रा वृत्तम् ।

❀भाषाऽर्थः❀ विशाल और विषम पत्थरोंके मध्य भागमें अवस्थित और जलपूर्ण मेघकी सदृश कान्तिसे युक्त अन्धकार डरे हुएके सदृश होकर वृक्षोंसे हटाये गये चन्द्रके किरणरूप शत्रुओंसे युक्त निकुञ्जमें रक्षकको प्राप्त हुएके सदृश होकर छिप गया ।

**अथ नयनमनोहरोऽभिरामः स्मर इव चित्तभवोऽप्यवामशीलः ।**
**रघुसुतमनुजो जगाद वाचं सजलघनस्तनयित्नुतुल्यघोषः ॥ ७१ ॥**

**अन्वयः**—अथ नयनमनोहरः अभिरामः स्मर इव चित्तभवोऽपि अवामशीलः सजलघनस्तनयित्नुतुल्यघोषः अनुजः रघुसुतं वाचं जगाद ।

**व्याख्या**—अथ = चन्द्रदर्शनाऽनन्तरं, नयनमनोहरः = लोचनमानसहरः, अभिरामः=सुन्दरः, स्मर इव = कामदेव इव, चित्तभवोऽपि = चेतःस्थितोऽपि, अवामशीलः = अप्रतिकूलस्वभावः, सजलघनस्तनयित्नुतुल्यघोषः = सलिलपूर्णनिविडमेघसमशब्दः, अनुजः = अवरजः, लक्ष्मण इति भावः । रघुसुतं = रामचन्द्रं, ज्येष्ठभ्रातरम् । वाचं = वाणीं, वक्ष्यमाणप्रकारामिति भावः । जगाद = अकथयत् ।

❀व्युत्पत्तिः❀नयनमनोहरः—नयने च मनश्च नयनमनांसि, तानि हरतीति, "हरतेरनुद्यमनेऽच्" इत्यच्प्रत्ययः । अवामशीलः—अवामं शीलं यस्य सः । सजलघनस्तनयित्नुतुल्यघोषः—सजलो घनश्च यः स्तनयित्नुः, तेन तुल्यः घोषो यस्य सः । अत्र स्मर इव इत्यत्र उपमा चित्तभवोऽपीत्यत्र श्लेषः, चित्तभवोऽपि अवामशील इत्यत्र विरोधस्तथा चैतेषां त्रयाणामलङ्काराणां तिलतण्डुलन्यायेन मिथोऽनपेक्षया स्थितेः संसृष्टिस्तल्लक्षणं यथा—

"मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ।" इति । पुष्पिताग्रा वृत्तम् ।

❀भाषाऽर्थः❀ चन्द्रदर्शनके अनन्तर सुन्दर, कामदेवके सदृश चित्तभव ( चित्तमें स्थित ) होकर भी अप्रतिकूल स्वभाववाले, जलपूर्ण निबद्ध मेघके सदृश शब्दसे युक्त लक्ष्मणजीने रामचन्द्रजीको ऐसी वाणी कही ॥ ७१ ॥

**पतिवधपरिलुप्तलोलकेशीर्नयनजलाऽपहृताऽञ्जनौष्ठरागाः ।**
**कुरु रिपुवनिता जहीहि शोकं क्व च शरणं जगतां भवान् क्व मोहः ७२**

**अन्वयः**—"( हे आर्य ! ) रिपुवनिताः पतिवधपरिलुप्तलोलकेशीः नयनजलाऽपहृताञ्जनौष्ठरागाः कुरु, शोकं जहीहि । जगतां शरणं भवान् क्व, मोहश्च क्व ? ।

**व्याख्या**—( हे आर्य ! = हे पूज्य ! ) रिपुवनिताः = शत्रुस्त्रियः, पतिवधपरिलुप्तलोलकेशीः = भर्तृहत्याऽपगतचञ्चलकुन्तलाः, एवं च—नयनजलाऽपहृताऽञ्जनौष्ठरागाः = अश्रुप्रमृष्टकज्जलाऽधररागाः, कुरु=विधेहि, शत्रूञ्जहीति भावः । शोकं = मन्युं सीतावियोगमूलमिति भावः । जहीहि = त्यज । जगतां = लोकानां, शरणं = रक्षकः, भवान् = त्वं, क्व = कुत्र; मोहश्च=वैचित्यं च, क्व=कुत्र, उभयोर्महदन्तरमिति भावः ।

❀व्युत्पत्तिः❀ पतिवधपरिलुप्तलोलकेशीः—पतिवधेन परिलुप्ता लोलाः केशा यासां ताः, "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति वा ङीष् । नयनजलाऽपहृताऽञ्जनौष्ठरागाः—अञ्जनं च ओष्ठरागश्च अञ्जनौष्ठरागौ । नयनजलेन अपहृतौ अञ्जनौष्ठरागौ यासां, ताः । शरणं—"शरणं गृहरक्षित्रोः" इत्यमरः । अत्र इष्टस्याशंसनादाशीःरलङ्कारः । तथा चोक्तम्—"आशीरिति च केषांचिदलङ्कारतया मता ।
सौहृदस्याऽविरोधोक्तौ प्रयोगोऽस्याश्च तद्यथा ॥" इति ।

इति जयमङ्गलः । इयमाशीर्नव्यालङ्कारिकैरनभिमता । तन्मते तु—"क्व च शरणं जगतां भवान्, क्व मोह" इत्यत्र विषमाऽलङ्कारः । सोदाहरणं तल्लक्षणं यथा—

"विषमं यद्यनौचित्यादनेकाऽन्वयकल्पनम् ।
क्वाऽतितीव्रविषाः सर्पाः, क्वासौ चन्दनभूरुहः ॥" इति । पुष्पिताग्रा वृत्तम् ॥

❀भाषाऽर्थः❀ "हे आर्य ! शत्रुओंकी पत्नियोंको पतिकी हत्यासे चञ्चल केशोंसे रहित तथा आँसूसे कज्जल और ओष्ठरागसे शून्य कीजिए । शोकको छोड़िए, लोकोंके रक्षक आप कहाँ और मोह कहाँ ? ॥ ७२ ॥

**अधिगतमहिमा मनुष्यलोके बत सुतरामवसीदति प्रमादी ।**
**गजपतिरुरुशैलशृङ्गवर्ष्मा गुरुरवमज्जति पङ्कभाङ् न दारु ॥ ७३ ॥**

**अन्वयः**—मनुष्यलोके अधिगतमहिमा प्रमादी ( सन् ) सुतराम् अवसीदति, बत ! उरुशैलशृङ्गवर्ष्मा गुरुः गजपतिः पङ्कभाक् ( सन् ) अवमज्जति, दारु न ।

**व्याख्या**—मनुष्यलोके=नरलोके, अधिगतमहिमा = प्राप्तमहत्त्वः, प्रमादी = अनवधानतोपेतः सन्, सुतराम् = अत्यर्थम्, अवसीदति=ग्लायति, कार्यसमर्थो न

भवतीति भावः । बत=कष्टम् । उक्तमर्थमर्थान्तरन्यासेन द्रढयति—गजपतिरिति । ऊरुशैलशृङ्गवर्ष्मा = महापर्वतशिखरप्रमाणशरीरः, गुरुः = गौरवयुक्तः, गजपतिः = करीन्द्रः, पङ्कभाक्=कर्दमाऽवतीर्णः सन्, अवमज्जति=अवसीदति, दारु = काष्ठं, न = न अवसीदति, तस्य अधिगतमहिमत्वाऽभावादिति भावः ।

※व्युत्पत्तिः※ प्रमादी—प्रमादोऽस्याऽस्तीति प्रमादी, "अत इनिठनौ" इतीनिः । "प्रमादोऽनवधानता" इत्यमरः । उरुशैलशृङ्गवर्ष्मा—उरु यत् शैलशृङ्गं, तदिव वर्ष्म यस्य सः । "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।" इत्यमरः । पङ्कभाक्—पङ्कं भजतीति, "भजो ण्विः" इति ण्विप्रत्ययः । अत्र गजपतेर्हेतुद्वारेण निर्देशात् हेत्वलङ्कार इति जयमङ्गलः । वस्तुतस्तु विशेषेण सामान्याऽर्थस्य समर्थनादर्थान्तरन्यासः । दारुणि अवमज्जनक्रियाया निषेधेन गजपतौ नियन्त्रणात्परिसंख्याऽलङ्कारश्च । तथा च द्वयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । परिसंख्यालक्षणं सोदाहरणं यथा—

"परिसंख्या निषिध्यैकमन्यस्मिन्वस्तुयन्त्रणम् ।
स्नेहक्षयः प्रदीपेषु, स्वान्तेषु न नतभ्रुवाम् ॥" इति । अत्र पुष्पिताग्रा वृत्तम् ।

※भाषाऽर्थः※ लोकमें महत्त्वको प्राप्त किया हुआ पुरुष प्रमाद ( गफलत ) करता हुआ सुतराम् कार्यमें असमर्थ हो जाता है, कष्ट है । पर्वतके बड़े शिखरके सदृश शरीरवाला गौरवपूर्ण हाथी कीचड़में फँसा हुआ अवसन्न ( कार्यमें असमर्थ ) हो जाता है, परन्तु लकड़ी नहीं, (महत्त्वके अभावसे कीचड़में पड़कर भी अवसन्न नहीं होती है) ॥

**बोद्धव्यं किमिव हि यत् त्वया न बुद्धं किं वा ते निमिषितमप्यबुद्धिपूर्वम् ।**
**लब्धाऽऽत्मा तव सुकृतैरनिष्टशङ्की स्नेहौघो घटयति मां तथापि वक्तुम् ॥**

**अन्वयः**—यत् त्वया न बुद्धं, ( तत् ) बोद्धव्यं किमिव हि ? किंवा ते अबुद्धिपूर्वं ? निमिषितम् अपि ( अबुद्धिपूर्वं ) न । तथाऽपि सुकृतैः लब्धात्मा तव अनिष्टशङ्की स्नेहौघो मां वक्तुं घटयति ।

**व्याख्या**—यत् = ज्ञानं, त्वया = भवता, न बुद्धं = न ज्ञातं, तत् बोद्धव्यं = ज्ञातव्यं, किमिव = किमस्ति, न किमपीत्यर्थः । हि = निश्चयेन । किं वा = कर्मेति शेषः, ते = तव, अबुद्धिपूर्वम् = अज्ञानपूर्वं ?, यत् निमिषितमपि = त्वदीयमक्ष्णोर्निमीलितमपि, न = अबुद्धिपूर्वं न । यद्येवं किमर्थं मामुपदिशसीत्याह—लब्धात्मेति । तथाऽपि = एतस्यां वस्तुस्थितावपि, सुकृतैः = पुण्यैः, लब्धात्मा = प्राप्तजन्मा, तव= भवतः, अनिष्टशङ्की = अनिष्टशङ्कनशीलः, स्नेहौघः=प्रणयसमूहः, मां = लक्ष्मणम्, असर्वज्ञं, वक्तुं = भाषितुं, घटयति = प्रेरयति । भवदनिष्टशङ्की स्नेह एव सर्वज्ञं भवन्तमुपदेष्टुं मां प्रेरयतीति भावः ।

※व्युत्पत्तिः※ अबुद्धिपूर्वम्—अबुद्धिः पूर्वा यस्मिंस्तत् । अनिष्टशङ्की—अनिष्टं शङ्कते

तच्छीलः। अत्र अर्थावगाढत्वान्निपुणालङ्कारः। अस्य चोदात्तेऽन्तर्भावो द्रष्टव्य इति जयमङ्गलः। वस्तुतस्त्वत्र न कोऽप्यलङ्कारस्तथाविधवैचित्र्याभावात्। प्रहर्षिणी वृत्तम्।

❀भाषाऽर्थः❀ जो आपने नहीं जाना है, ऐसा जाननेके योग्य क्या है? आपका क्या कर्म अमतिपूर्वक हुआ है? आपका पलक मारना भी अमतिपूर्वक नहीं है, तौ भी पुण्योंसे स्वरूपको प्राप्त करनेवाला और आपके अनिष्टकी आशङ्का करने वाला स्नेह-समूह मुझे बोलनेके लिए प्रेरणा करता है ॥ ७४ ॥

**सौमित्रेरिति वचनं निशम्य रामो जृम्भावान् भुजयुगलं विभज्य निद्रान्।**
**अध्यष्ठाच्छिशयिषया प्रवालतल्पं रक्षायै प्रतिदिशमादिशन् प्लवङ्गान्॥**

**अन्वयः**—सौमित्रेः इति वचनं निशम्य रामो जृम्भावान् निद्रान् (सन्) रक्षायै प्रतिदिशं प्लवङ्गान् आदिशन् भुजयुगलं विभज्य शिशयिषया प्रवालतल्पम् अध्यष्ठात्।

**व्याख्या**—सौमित्रेः=लक्ष्मणस्य, इति=उक्तप्रकारं, वचनं = भाषितं, निशम्य= श्रुत्वा, रामः = रामचन्द्रः, जृम्भावान् = जातजृम्भिकः निद्रान् = निद्रां गच्छन् सन्, रक्षायै=रक्षाऽर्थं, प्रतिदिशं = प्रतिकाष्ठं, प्लवङ्गान् = वानरान्, आदिशन् = नियोजयन्, भुजयुगलं=बाहुयुग्मं, विभज्य = विभक्तं कृत्वा, एकं शिरःस्थाने न्यस्य द्वितीयं शरीरस्योपरि प्रसार्येति भावः। शिशयिषया = शयितुमिच्छया, प्रवालतल्पम् = पल्लवशयनीयम्, अध्यष्ठात्=अधिष्ठितवान्, समुद्रदिदृक्षया नियमपूर्वं सुष्वापेति भावः।

❀व्युत्पत्तिः❀ सौमित्रेः—सुमित्राया अपत्यं पुमान् सौमित्रिस्तस्य, "बाह्वादिभ्यश्च" इति इञ्। जृम्भावान्-जृम्भणं जृम्भा, "जृभि गात्रविनामे" इति धातोः "गुरोश्च हलः" इत्यप्रत्ययः, टाप्। जृम्भाऽस्ति अस्य सः, मतुप्। निद्रान्—निद्रातीति, निपूर्वात् "द्रा कुत्सायां गतौ" इत्यादादिकस्य धातोर्लटः शत्रादेशः। प्रतिदिशं—वीप्सार्थे अव्ययीभावः, "अव्ययीभावे शरत्प्रभृतिभ्यः" इति टच् समासाऽन्तः। प्रवालतल्पम्—अधिपूर्वकस्थाधातोर्योगे "अधिशीङ्स्थाऽऽसां कर्म" इत्याधारस्य कर्मत्वम्। अध्यष्ठात्—अधिपूर्वकस्थाधातोर्लुङ्, "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुक्, "प्राक्सितादड्व्यवायेऽपि" इति षत्वम्। अत्राऽपि प्रहर्षिणी वृत्तम्।

❀भाषाऽर्थः❀ लक्ष्मणजीका ऐसा वचन सुनकर रामचन्द्रजी जँमुहाई लेते हुए और निद्रायुक्त होते हुए तथा रक्षाके लिए प्रतिदिशामें वानरोंको आज्ञा देते हुए एक बांहको शिरःस्थान में और दूसरी बांहको शरीरके ऊपर फैलाकर सोनेकी इच्छासे पल्लवोंकी सेजपर अधिष्ठित हुए ॥ ७५ ॥

इति श्रीचन्द्रकलाऽऽख्यया नव्यव्याख्यया मण्डिते श्रीभट्टिकाव्ये तृतीये प्रसन्नकाण्डे लक्षणरूपे प्रथमः परिच्छेदः तथा लक्ष्यरूपे कथानके सीताऽभिज्ञानदर्शनं नाम दशमः सर्गः।



## अथैकादशः सर्गः ।

गुणत्रये माधुर्यमपि "चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।" इत्युक्तेः काव्यस्याऽन्यतमो गुणोऽतस्तत्प्रदर्शनाऽर्थं लङ्कागतप्रभातवर्णनमधिकृत्याह—अथेत्यादि ।

**अथाऽस्तमासेदुषि मन्दकान्तौ पुण्यक्षयेणेव निधौ कलानाम् ।**
**समाललम्बे रिपुमित्रकल्पैः पद्मैः प्रहासः कुमुदैर्विषादः ॥ १ ॥**

**अन्वयः**—अथ मन्दकान्तौ कलानां निधौ पुण्यक्षयेण इव अस्तम् आसेदुषि रिपुमित्रकल्पैः पद्मैः प्रहासः कुमुदैः विषादः समाललम्बे ।

**व्याख्या**—अथ = निशाऽवसानाऽनन्तरं, मन्दकान्तौ=अल्पशोभे, अस्ताऽचलगमनोद्यतत्वादिति भावः । कलानां निधौ=चन्द्रमसि, पुण्यक्षयेण इव = सुकृताऽपचयेन इव, अस्तम्=अस्ताचलम्, आसेदुषि = प्राप्तवति सति, रिपुमित्रकल्पैः = शत्रुसुहृत्सदृशैः, पद्मैः = कमलैः, प्रहासः = विकासः, कुमुदैः = कैरवैः, विषादः = सङ्कोचः, यथासंख्येन पद्मैर्विकासः कुमुदैर्विषादो बोध्यः । समाललम्बे = समालम्बितः ।

***व्युत्पत्तिः*** आसेदुषि—आङ्पूर्वकात् सद्धातोः "भाषायां सदवसश्रुवः" इति लिटः क्वसुरादेशः । रिपुमित्रकल्पैः—ईषदसमाप्तानि रिपुमित्राणि रिपुमित्रकल्पानि, तैः । "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति कल्पप्प्रत्ययः । अत्र पुण्यक्षयेणेवेत्यत्र उत्प्रेक्षा, रिपुमित्रकल्पैरित्यत्रोपमा यथासंख्यं चेत्येतेषां मिथोऽनपेक्षया स्थितेः संसृष्टिः । प्रायेण अस्मिन्सर्गे इन्द्रवज्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिर्वृत्तम् ।

***भाषाऽर्थः*** रात बीतनेके अनन्तर मन्द कान्तिवाले होकर चन्द्रके, मानो पुण्यक्षय होनेसे अस्त पर्वतको प्राप्त होनेपर उनके शत्रुतुल्य कमलोंने विकास का और मित्रतुल्य कुमुदोंने सङ्कोचका अवलम्बन किया ॥ १ ॥

**दूरं समारुह्य दिवः पतन्तं भृगोरिवेन्दुं विहितोपकारम् ।**
**बद्धाऽनुरागोऽनुपपात तूर्णं तारागणः सम्भृतशुभ्रकीर्तिः ॥ २ ॥**

**अन्वयः**—दिवो दूरं समारुह्य भृगोः इव पतन्तं विहितोपकारम् इन्दुं बद्धाऽनुरागः सम्भृतशुभ्रकीर्तिः तारागणः तूर्णम् अनुपपात ।

**व्याख्या**—दिवः = आकाशस्य, दूरं = विप्रकृष्टं भागं, समारुह्य = समारोहणं कृत्वा, पश्चात्ततः भृगोः इव = प्रपातात् इव, पतन्तं = भ्रश्यन्तं, विहितोपकारं = कृतोपकृतिं, चन्द्रोदयेन तारागणाप्यायनादिति भावः । इन्दुं=चन्द्रमसं, बद्धाऽनुरागः = इन्दोरस्तगमने अनुगतरक्तभावः, सम्भृतशुभ्रकीर्तिः=जनितशुक्लयशाः, तारागणः = तारकासमूहः, तूर्णं = सत्वरम्, अनुपपात = अनुपतनं कृतवान् । यथा कस्मिश्चित्

स्वामिनि अधःपतनं गतेऽपि भृत्यास्तमनुसरन्ति तथैव चन्द्रेऽस्तपर्वतं गते सति तारागणास्तमनुसृतवन्त इति भावः ।

❀व्युत्पत्तिः❀ भृगोः—"प्रपातस्त्वतटो भृगुः" इत्यमरः। सम्भृतशुभ्रकीर्तिः—संभृता शुभ्रा कार्तिर्येन सः । अत्रोत्प्रेक्षाऽलङ्कारः ।

❀भाषाऽर्थः❀ आकाशके दूर भागके ऊपर चढ़कर पीछे भृगुके सदृश वहांसे गिरनेवाले, उपकार करनेवाले चन्द्रदेवको अनुराग करनेवाले और सफेद यशको उत्पन्न करनेवाले तारागणने शीघ्र अनुपतन किया ॥ २ ॥

**क्व ते कटाक्षाः क्व विलासवन्ति प्रोक्तानि वा तानि ममेति मत्वा ।**
**लङ्काऽङ्गनानामवबोधकाले तुलामनारुह्य गतोऽस्तमिन्दुः ॥ ३ ॥**

**अन्वयः**—"ते कटाक्षाः क्व ? विलासवन्ति तानि प्रोक्तानि वा मम क्व" इति मत्वा इन्दुः लङ्काऽङ्गनानाम् अवबोधकाले तुलाम् अनारुह्य अस्तं गतः ।

**व्याख्या**—ते = प्रसिद्धाः, कटाक्षाः = विलासोपेतास्तिर्यग्दृष्टयः, क्व = कुत्र, ममेति शेषः । विलासवन्ति = विलासयुक्तानि, तानि = प्रसिद्धानि, प्रोक्तानि = जल्पितानि वा, मम = इन्दोः, क्व = कुत्र, लङ्काऽङ्गनानां तु मुखेन्दवः सकटाक्षाः सविलासाः सजल्पिताश्च, अतस्तासां विबोधात्प्राक् पलायनमुचितम् , इति = एवं, मत्वा=विमृश्य, इन्दुः = चन्द्रः, लङ्काऽङ्गनानां = लङ्कास्थानां सुन्दरीणाम् , अवबोधकाले=प्रबोधक्षणे, तुलाम् = उपमाम् , अनारुह्य = अनुत्तीर्य, अस्तम् = अस्ताऽचलं, गतः = प्राप्तः ।

❀व्युत्पत्तिः❀ विलासवन्ति—विलासोऽस्ति येषु तानि, मतुप्प्रत्ययः । अत्रेन्दोस्तादृशमननस्यासम्बन्धेऽपि सम्बन्धत्ववर्णनादतिशयोक्तिरलङ्कारः ।

❀भाषाऽर्थः❀ लङ्काकी सुन्दरियोंके वैसे कटाक्ष मेरे कहाँ ? अथवा विलासपूर्ण वैसे भाषण मेरे कहाँ ?" ऐसा विचारकर चन्द्रदेव लङ्काकी सुन्दरियोंके जागनेके समयमें उपमाको न पाकर अस्त पर्वतको चले गये ॥ ३ ॥

**मानेन तल्पेष्वयथामुखीना मिथ्या प्रसुप्तैर्गमितत्रियामाः ।**
**स्त्रीभिर्निशाऽतिक्रमविह्वलाभिर्दृष्टेऽपि दोषे पतयोऽनुनीताः ॥ ४ ॥**

**अन्वयः**—मानेन तल्पेषु अयथामुखीनाः मिथ्या प्रसुप्तैः गमितत्रियामाः पतयो दोषे दृष्टेऽपि निशाऽतिक्रमविह्वलाभिः स्त्रीभिः अनुनीताः ।

**व्याख्या**—मानेन = प्रणयकोपेनेति भावः, तल्पेषु = पर्यङ्केषु, अयथामुखीनाः= परावृत्तमुखाः, संमुखत्वे मानतिरोधानभीतेरिति भावः । मिथ्याप्रसुप्तैः = अलीकनिद्राभिः, गमितत्रियामाः = यापितप्रथमाऽऽदिप्रहराः, पतयः = भर्तारः, दोषे = दूषणे, दृष्टेऽपि = ज्ञातेऽपि, नामस्खलितादाविति भावः । निशाऽतिक्रमविह्वलाभिः = रात्रिपर्यवसानविक्लवाभिः, स्त्रीभिः = ललनाभिः, अनुनीताः = प्रसादिताः ।

ॐव्युत्पत्तिःॐ अयथामुखीनाः—मुखस्य सदृशं यथामुखं प्रतिबिम्बं, निपातनात्सा-दृश्येऽव्ययीभावः, यथामुखं दर्शना यथामुखीनाः, "यथामुखसंमुखस्य दर्शनः खः" इति खः । खस्येनः । न यथामुखीनाः । गमितत्रियामाः—गमितास्त्रयो यामा यैस्ते, "द्वौ यामप्रहरौ समौ" इत्यमरः । निशाऽतिक्रमविह्वलाभिः—निशाऽतिक्रमात् (हेतोः) विह्वलाभिः । इन्द्रवज्रा वृत्तम् ।

ॐभाषाऽर्थःॐ प्रणयकोपसे शय्याओंपर मुंह फेरकर लेटे हुए और झूठी निद्राओंसे तीन प्रहर बितानेवाले पतियोंको दोषके देखे जानेपर भी रात बीतनेके भयसे विह्वल स्त्रियोंने मना लिया ॥ ४ ॥

**ईर्ष्याविरुग्णाः स्थिरबद्धमूला निरस्तनिःशेषशुभप्रताना ।**
**आप्यायिता नेत्रजलप्रसेकैः प्रेमद्रुमाः संरुरुहुः प्रियाणाम् ॥ ५ ॥**

**अन्वयः**—प्रियाणां स्थिरबद्धमूलाः प्रेमद्रुमाः ईर्ष्याविरुग्णा निरस्तनिःशेषशुभप्रतानाः नेत्रजलप्रसेकैः आप्यायिताः ( सन्तः ) संरुरुहुः ।

**व्याख्या**—प्रियाणां = वल्लभानां, स्थिरबद्धमूलाः = निश्चलोत्पत्तिकारणाः, प्रेमद्रुमाः = प्रणयवृक्षाः, ईर्ष्याविरुग्णाः = अक्षान्तिभग्नाः, अतएव—निरस्तनिःशेषशुभप्रतानाः = निराकृतसमस्तहसिताऽऽदिकल्याणशाखाः, तादृशाः सन्तोऽपि नेत्रजलप्रसेकैः = नयनसलिलसेचनैः, अप्यायिताः=संवर्द्धिताः सन्तः, संरुरुहुः = संरूढवन्तः । स्थिरबद्धमूलत्वात्पुनर्नवीभूता इति भावः । स्थिरबद्धमूला वृक्षा भग्नत्वेन शाखावर्जिताः सन्तोऽपि जलसेचनेन पुनर्वर्धनेन यथा संरोहन्ति तथैव स्थिरबद्धमूलाः नायिकानां प्रणयवृक्षा अपि ईर्ष्यया भग्नत्वेन हसितादिव्यापाररूपशाखारहिताः सन्तोऽपि अश्रुसेचनेन पुनर्वर्धनेन नवी भवन्तीति तात्पर्यम् ।

ॐव्युत्पत्तिःॐ प्रेमद्रुमाः—प्रेमाणि द्रुमा इव, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति समासः । स्थिरबद्धमूलाः—स्थिरं बद्धं मूलं येषां ते । निरस्तनिःशेषशुभप्रतानाः—निरस्ता निःशेषाः शुभा एव प्रताना येषां ते । उपमाऽलङ्कारः । उपजातिवृत्तम् ।

ॐभाषाऽर्थःॐ प्रियाओंके निश्चल उत्पत्तिकारणवाले प्रणयवृक्ष, ईर्ष्यासे भग्न अतएव संपूर्ण हास्य आदिरूप शुभ शाखाओंसे रहित होते हुए भी नेत्रजलोंके सेचनोंसे संवर्द्धित होकर फिर नवीन हो गये ॥ ५ ॥

**ततः समाशङ्कितविप्रयोगः पुनर्नवीभूतरसोऽवितृष्णः ।**
**स्मरस्य सन्तं पुनरुक्तभावं नाऽऽवर्तमानस्य विवेद लोकः ॥ ६ ॥**

**अन्वयः**—ततः समाशङ्कितविप्रयोगः पुनर्नवीभूतरसः अवितृष्णो लोकः आवर्तमानस्य स्मरस्य सन्तं पुनरुक्तभावं न विवेद ।

**व्याख्या**—ततः = प्रेमद्रुमाऽऽरोहणाऽनन्तरं, समाशङ्कितविप्रयोगः = आशङ्कितविरहः, पुनः = भूयः, नवीभूतरसः = प्रत्यग्रीभूतविषयसुखेच्छः, अवितृष्णः = साऽभिलाषः सन्, लोकः = जनः, आवर्तमानस्य = पर्यटतः, स्मरस्य = कामस्य, सन्तं = विद्यमानमपि, पुनरुक्तभावं = पौनःपुन्यं, न विवेद = न ज्ञातवान् । आशङ्कितविप्रयोगत्वात्कामाऽऽविर्भावमपूर्वमिव ज्ञातवानिति भावः ।

**व्युत्पत्तिः** समाशङ्कितविप्रयोगः—समाशङ्कितो विप्रयोगो येन सः । "विप्रलम्भो विप्रयोग" इत्यमरः । नवीभूतरसः—अनवो नवो यथा संपद्यते तथा भूतो नवीभूतः, "कृभ्वस्तियोगे संपद्यकर्तरि च्विः" इति च्विः । नवीभूतो रसो यस्य सः । अवितृष्णः—विगता तृष्णा यस्य स वितृष्णः, न वितृष्णः ।

**भाषाऽर्थः** प्रेमवृक्षके उगनेके अनन्तर विरहकी आशङ्का करनेवाला, जिसके विषय सुखकी इच्छा फिर नवीन हो गई है ऐसे और अभिलाषयुक्त जनने भ्रमण करनेवाले कामदेवके वारंवार होनेवाले आविर्भावको नहीं जाना ॥ ६ ॥

**वृत्तौ प्रकाशं हृदये कृतायां सुखेन सर्वेन्द्रियसंभवेन ।**
**संकोचमेवाऽसहमानमस्थादशक्तवद्वञ्चितमानि चक्षुः ॥ ७ ॥**

**अन्वयः**—सर्वेन्द्रियसंभवेन सुखेन हृदये प्रकाशं वृत्तौ कृतायां वञ्चितमानि चक्षुः असहमानम् ( सत् ) अशक्तवत् सङ्कोचम् एव अस्थात् ।

**व्याख्या**—सर्वेन्द्रियसंभवेन = समस्तहृषीकोत्पन्नेन, सुरतसमये सर्वेन्द्रियाणां शब्दस्पर्शादिस्वस्वविषयग्रहणात् इति भावः । अथवा सर्वेन्द्रियः = कायः, तदुत्पन्नेन, सुखेन = आनन्देन, हृदये = चेतसि, प्रकाशं = स्फुटरूपं, वृत्तौ = स्थितौ, कृतायां = विहितायां, वञ्चितमानि = वञ्चितमिवात्मानं मन्यमानं, चक्षुः = नेत्रम् , असहमानं = सर्वेन्द्रियसंभवस्य सुखस्य हृदये वृत्तिं सोढुमपारयदिति भावः । अशक्तवत् = असमर्थवत् , सङ्कोचम् एव = निमीलनम् एव, यथा स्यात्तथा । यथा कश्चिदसमर्थोऽन्यस्याऽभ्युदयं सोढुमसहमानः सङ्कोचमनुतिष्ठति, तथैवेति भावः । अस्थात् = स्थितम् ।

**व्युत्पत्तिः** सर्वेन्द्रियसंभवेन—सर्वेन्द्रियेभ्यः संभवः ( उत्पत्तिः ) यस्य तेन । यद्वा—सर्वाणि इन्द्रियाणि यस्मिंस्तत् सर्वेन्द्रियं शरीरं, तत्संभवम् । वञ्चितमानि—वञ्चितमात्मानं मन्यते इति, "आत्ममाने खश्च" इति चाण्णिनिः । अस्थात्—"ष्ठा गतिनिवृत्तौ" इति धातोर्लुङ् "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुक् । सुरताऽन्ते नेत्रनिमीलनस्योत्प्रेक्षेयम् ।

**भाषाऽर्थः** निधुवनमें संपूर्ण इन्द्रियोंसे उत्पन्न सुखके हृदयमें स्फुटरूपसे स्थित किये जाने पर अपनेको वञ्चित माननेवाला नेत्र असहनशील होता हुआ असमर्थके सदृश सङ्कुचित रूपसे ( निमीलित होकर ) रहा ॥ ७ ॥

**पीने भटस्योरसि वीक्ष्य भुग्नांस्तनुत्वचः पाणिरुहान् सुमध्या ।**
**इच्छाविभङ्गाऽऽकुलमानसत्वाद्भर्त्रे नखेभ्यश्च चिरं जुजूरे ॥ ८ ॥**

**अन्वयः**—सुमध्या भटस्य पीन उरसि तनुत्वचः पाणिरुहान् भुग्नान् वीक्ष्य इच्छाविभङ्गाऽऽकुलमानसत्वात् भर्त्रे नखेभ्यश्च चिरं जुजूरे ।

**व्याख्या**—सुमध्या = सुमध्यमा, काचित्सुन्दरीति भावः । भटस्य = योधस्य, स्वप्रणयिनः, पीने=कठिने, उरसि = वक्षःस्थले, तनुत्वचः = शरीरदारकान्, पाणिरुहान् = नखान्, भुग्नान् = कुञ्चितान्, "भग्नान्" इति पाठान्तरे रुग्णानित्यर्थः । वीक्ष्य = दृष्ट्वा । इच्छाविभङ्गाऽऽकुलमानसत्वात् = काङ्क्षाप्रतिघातव्याकुलचित्तत्वात् । भर्त्रे = पत्ये, भटायेत्यर्थः । नखेभ्यश्च = पाणिरुहेभ्यश्च, चिरं = बहुकालपर्यन्तं, जुजूरे = कुप्यति स्म । कथमस्य वक्षःस्थलं कठिनं मम च नखा मृदुला इति हेतुनेति शेषः ।

ॐव्युत्पत्तिःॐ पाणिरुहान्—पाणौ रोहन्तीति पाणिरुहास्तान्, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः । इच्छाविभङ्गाऽऽकुलमानसत्वात्—इच्छाया विभङ्गेन आकुलं मानसं यस्याः सा इच्छाविभङ्गाऽऽकुलमानसा, तस्या भावस्तत्त्वं, तस्मात् । "सामान्ये नपुंसकम्" इति नपुंसकम् । हेतौ पञ्चमी । भर्त्रे, नखेभ्यश्च—"जुजूरे" इति द्रोहार्थकधातोर्योगे "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति चतुर्थी । जुजूरे—"जूरी हिंसावयोहान्योः" इति धातोर्लिट् ।

ॐभाषाऽर्थःॐ कोई सुन्दरी योद्धा अपने पतिके कठोर वक्षःस्थलमें शरीरको दारण करनेवाले अपने नखोंको टेढ़े हुए देखकर इच्छाके प्रतिघातसे आकुल चित होनेसे पति और नखों से बहुत समय तक कुपित हुई ॥ ८ ॥

**स्रस्ताऽङ्गचेष्टो विनिमीलिताऽक्षः स्वेदाऽम्बुरोमोद्गमगम्यजीवः ।**
**अशेषनष्टप्रतिभापटुत्वो गाढोपगूढो दयितैर्जनोऽभूत् ॥ ९ ॥**

**अन्वयः**—दयितैः गाढोपगूढो जनः स्रस्ताऽङ्गचेष्टः विनिमीलिताऽक्षः अशेषनष्टप्रतिभापटुत्वः स्वेदाऽम्बुरोमोद्गमगम्यजीवः अभूत् ।

**व्याख्या**—दयितैः = प्रियैः, गाढोपगूढः = दृढालिङ्गितः, जनः = स्त्रीजनः, स्रस्ताऽङ्गचेष्टः = अपगतशरीरव्यापारः, विनिमीलिताऽक्षः = निमीलितलोचनः, सुखाऽनुभवादिति भावः । एवं च—अशेषनष्टप्रतिभावपटुत्वः = समस्ताऽपगतमतिपाटवः, किं तर्हि संस्थित इत्याह—स्वेदाऽम्बुरोमोद्गमगम्यजीवः = श्रमजलरोमाञ्चभ्यां ज्ञेयचेतनः, अभूत्=संवृत्तः ।

ॐव्युत्पत्तिःॐ गाढोपगूढः—गाढं यथा तथोपगूढः, "सह सुपा" इति समासः ।

स्रस्ताऽङ्गचेष्टः—स्रस्ता अङ्गचेष्टा यस्य सः। विनिमीलिताऽक्षः—विनिमीलिते अक्षिणी यस्य सः, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षच्। अशेषनष्टप्रतिभापटुत्वः—अशेषं नष्टं प्रतिभायाः पटुत्वं यस्य सः। स्वेदाम्बुरोमोद्गमगम्यजीवः—स्वेदाम्बुरोमोद्गमाभ्यां गम्यजीवः।

ॐभाषाऽर्थःॐ प्रियसे दृढताके साथ आलिङ्गित स्त्री, शिथिल अङ्गचेष्टावाली, नेत्रोंको मूंदनेवाली और जिसका संपूर्ण बुद्धिपाटव नष्ट हो गया है अतः केवल श्रमजल और रोमाञ्चसे ज्ञय चेतनासे युक्त हो गई ॥ ९ ॥

**तमः प्रसुप्तं मरणं सुखं नु मूर्च्छा नु माया नु मनोभवस्य।**
**किं तत् कथं वेत्युपलब्धसंज्ञा विकल्पयन्तोऽपि न संप्रतीयुः ॥१०॥**

**अन्वयः**—उपलब्धसंज्ञाः 'तमः नु प्रसुप्तं नु, मरणं नु, सुखं नु, मुर्च्छा नु, मनोभवस्य माया नु ? तत् किं ? कथं वा ?' इति विकल्पयन्तोऽपि न संप्रतीयुः।

**व्याख्या**—उपलब्धसंज्ञाः = प्राप्तचेतनाः, कामुका अपि इति शेषः। तमः नु = अन्धकारं किं, प्रसुप्तं नु = प्रकर्षेण स्वापः किं, मरणं नु = मृतावस्था किं, सुखं नु = आनन्दः किं, मूर्च्छा नु = मोहः किम् ?, आहोस्वित्—मनोभवस्य = कामस्य, माया नु = शाम्बरी किं, तत्, किं, कथं वा = केन प्रकारेण वा, इति = इत्थं, विकल्पयन्तोऽपि = बहून् विकल्पान् कुर्वन्तोऽपि, न संप्रतीयुः = परमाऽर्थं न ज्ञातवन्त इति भावः।

ॐव्युत्पत्तिःॐ उपलब्धसंज्ञाः—उपलब्धा संज्ञा यैस्ते। "संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना।" इत्यमरः। नु—वितर्कद्योतकमव्ययमेतत्। अत्र सन्देहाऽलङ्कारः।

ॐभाषाऽर्थःॐ कामुक लोगोंने भी होशमें आकर यह अन्धकार है क्या? गाढ शयन है क्या? मरण है क्या? सुख है क्या? मूर्च्छा है क्या? अथवा कामदेव की माया है क्या? यह क्या है? वा कैसे है?' ऐसे अनेक प्रकारके विकल्पों को करते हुए भी परमाऽर्थ को नहीं जाना ॥ १० ॥

**वक्षः स्तनाभ्यां मुखमाननेन गात्राणि गात्रैर्घटयन्नमन्दम्।**
**स्मराऽऽतुरो नैव तुतोष लोकः पर्याप्तता प्रेम्णि कुतो विरुद्धा ॥ ११ ॥**

**अन्वयः**—वक्षः स्तनाभ्यां, मुखम् आननेन, गात्राणि गात्रैः अमन्दं घटयन् स्मराऽऽतुरो लोकः नैव तुतोष; पर्याप्तता प्रेम्णि कुतो विरुद्धा ?

**व्याख्या**—वक्षः = उरःस्थलं, स्वकीयमिति शेषः, स्तनाभ्यां = पयोधराभ्यां स्त्रीसम्बधिभ्यामिति शेषः, मुखं = वदनं, स्वस्य, आननेन = मुखेन, स्त्रियाः, एवं च

गात्राणि = स्वीयानि अन्यानि अङ्गानि, गात्रैः = स्वस्त्रीसम्बधिभिः अवयवैः, अमन्दं= दृढम् , घटयन् = संश्लेषयन् , स्मराऽऽतुरः = कामाऽऽतुरः, लोकः = जनः, नैव तुतोष = नैव तुष्टिं जगाम । उक्तमर्थमर्थान्तरन्यासेन द्रढयति—पर्याप्ततेति । पर्याप्तता = पूर्णता, इच्छाविच्छेद इति भावः । प्रेम्णि = प्रणये विषये, कुतः = कस्मात् विरुद्धा = प्रतिकूला, नैव, प्रेम्णोऽविरुद्धत्वादिति भावः ।

ॐव्युत्पत्तिःॐ गात्राणि—"गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।" इत्यमराद्यपि गात्रपदं शरीरवाचकं परमत्र लक्षणया अङ्गवाचकमवसेयम् । लोकः—"लोकस्तु भुवने जने" इत्यमरः । अत्र अर्थान्तरन्यासोऽलङ्कारः ।

ॐभाषाऽर्थःॐ अपने छातीको प्रियाके पयोधरोंसे, मुखको मुखसे और अङ्गोंको अङ्गोंसे दृढतापूर्वक संश्लिष्ट करता हुआ कामाऽऽतुर जन सन्तुष्ट नहीं ही हुआ, क्योंकि प्रेममें इच्छाविच्छेद कहां विरुद्ध होता है ? नहीं होता ॥ ११ ॥

**स्रस्ताऽङ्गयष्टिः परिरभ्यमाणा संदृश्यमानाऽप्युपसंहृताऽक्षी ।**
**अनूढमाना शयने नवोढा परोपकारैकरसैव तस्थौ ॥ १२ ॥**

**अन्वयः**—परिरभ्यमाणा स्रस्ताऽङ्गयष्टिः संदृश्यमाना अपि उपसंहृताऽक्षी नवोढा अनूढमाना शयने परोपकारैकरसा एव तस्थौ ।

**व्याख्या**—परिरभ्यमाणा = आलिङ्ग्यमाना, पत्येति शेषः । स्रस्ताऽङ्गयष्टिः= शिथिलदेहयष्टिः, मुग्धत्वात्प्रतिपरिरम्भणरहिता इति भावः । **संदृश्यमाना अपि** = विलोक्यमाना अपि, मुखमुन्नमय्य पत्येति शेषः, उपसंहृताऽक्षी = निमीलितलोचना, शालीनत्वात्प्रतिसंदर्शनमकुर्वतीति भावः । एतादृशी नवोढा = नवपरिणीता वधूः, अनूढमाना = अकृतप्रणयकोपा सती, परोपकारैकरसा एव = पत्युपकृत्येकाऽनुरागा एव, तस्थौ = स्थिता; नात्मोपकारयेति भावः ।

ॐव्युत्पत्तिःॐ परिरभ्यमाणा—कर्मणि लटि यकि शानच् । स्रस्ताऽङ्गयष्टिः—अङ्गमेव यष्टिरङ्गयष्टिः, अत्र आभासरूपकम् । स्रस्ताऽङ्गयष्टिर्यस्याः सा । उपसंहृताऽक्षी—उपसंहृते अक्षिणी यया सा, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षच् षित्वात् "षिद्गौरादिभ्यश्चे"ति ङीष् । परोपकारैकरसा—परोपकार एव एको रसो यस्याः सा ।

ॐभाषाऽर्थःॐ पतिके आलिङ्गन करनेपर शरीरको शिथिल करती हुई, देखनेपर आंखोंको मूंदनेवाली नवोढा वधू , प्रणयकोपको नहीं करती हुई परोपकारमें ही एक अनुराग करनेवाली ही होकर स्थित हुई ॥ १२ ॥

**आलिङ्गितायाः सहसा त्रपावांस्त्रासाऽभिलाषाऽनुगतो रताऽऽदौ ।**
**विश्वासितायां रमणेन वध्वा विमर्दरम्यो मदनो बभूव ॥ १३ ॥**

**अन्वयः**—मदनो रमणेन सहसा आलिङ्गिताया वध्वाः त्रपावान्, रताऽऽदौ त्रासाऽभिलाषाऽनुगतः, विश्वासितायाः विमर्दरम्यो बभूव ।

**व्याख्या**—मदनः = मन्मथः, रमणेन=कान्तेन, सहसा = तत्क्षणम् , आलिङ्गितायाः = आश्लिष्टायाः, वध्वाः = रमण्याः, रतात्प्रागिति शेषः । त्रपावान् = लज्जावान् , रतादौ = रताऽऽरम्भे, त्रासाऽभिलाषाऽनुगतः = भयतर्षाऽनुयातः, एवं च विश्वासितायाः = शनैर्विश्वासं कारितायाः वध्वाः, रमणेनेति शेषः । विमर्दरम्यः = उपभोगरमणीयः, बभूव = संवृत्तः, त्रासाऽभावादिति भावः ।

**ॐव्युत्पत्तिःॐ** त्रासाऽभिलाषाऽनुगतः—त्रासाऽभिलाषाभ्यामनुगतः ।

**ॐभाषाऽर्थःॐ** कामदेव, पतिसे सहसा आलिङ्गित पत्नीसे लज्जित, रतिके आरम्भमें त्रास और अभिलाषासे अनुगत और पतिसे विश्वास कराई गई स्त्रीके उपभोगसे रमणीय हो गया ॥ १३ ॥

**सामोन्मुखेनाऽऽच्छुरिता प्रियेण दत्तेऽथ काचित्पुलकेन भेदे ।**
**अन्तःप्रकोपाऽपगमाद्विलोला वशीकृता केवलविक्रमेण ॥ १४ ॥**

**अन्वयः**—अथ काचित् सामोन्मुखेन प्रियेण आच्छुरिता पुलकेन भेदे दत्ते अन्तःप्रकोपाऽपगमात् विलोला केवलविक्रमेण वशीकृता ।

**व्याख्या**—अथ = अनन्तरं, काचित् = मानिनी, सामोन्मुखेन = सामपरेण, प्रियेण=रमणेन, आच्छुरिता = आच्छुरिताख्येन नखाघातेन संस्पृष्टा सती, पुलकेन= रोमाञ्चेन, भेदे = उद्गमे, कामस्येति शेषः । दत्ते = प्रतिपादिते सति, अन्तःप्रकोपाऽपगमात् = अन्तःस्थक्रोधाऽपयानाद्धेतोः, विलोला = अतिशयचञ्चला सती, केवलविक्रमेण = हठाद्ग्रहणेनैव, वशीकृता = स्वाऽऽयत्तीकृता, उपभुक्तेति भावः ।

**ॐव्युत्पत्तिःॐ** सामोन्मुखेन—साम्नि उन्मुखेन, "साम सान्त्वम्" इत्यमरः । आच्छुरिता—आच्छुरणमाच्छुरितम् , आङ्पूर्वकात् "छुर छेदने" इति धातोः "नपुंसके भावे क्तः" इति क्तप्रत्ययः । "स्यादाच्छुरितकं हासनखराऽऽघातभेदयोः" इति मेदिनी । आच्छुरितमस्ति अस्याः सा आच्छुरिता, "अर्शआदिभ्योऽच्" इत्यच्प्रत्ययः । अन्तःप्रकोपाऽपगमात्—अन्तः स्थितः प्रकोपः अन्तःप्रकोपस्तस्याऽपगमात्, हेतौ पञ्चमी ।

**ॐभाषाऽर्थःॐ** अनन्तर कोई मानवती स्त्री मेल करनेमें तत्पर प्रियसे नखाऽऽघातसे स्पर्श किये जानेपर और रोमाञ्चके कामका आविर्भाव करनेपर अन्तःस्थित कोप दूर होनेसे अतिशय चञ्चल होकर हठपूर्वक ग्रहणसे ही वशमें की गई ॥ १४ ॥

**गुरुर्दधाना परुषत्वमन्या कान्ताऽपि कान्तेन्दुकराऽभिमृष्टा ।**
**प्रह्लादिता चन्द्रशिलेव तूर्णं क्षोभात् स्रवत्स्वेदजला बभूव ॥ १५ ॥**

**अन्वयः**—गुरुः परुषत्वं दधाना अन्या कान्ता अपि कान्तेन्दुकराऽभिमृष्टा प्रह्लादिता क्षोभात् चन्द्रशिला इव तूर्णं स्रवत्स्वेदजला बभूव ।

**व्याख्या**—गुरुः=धीरा, अत एव परुषत्वं = कठोरत्वं, दधाना = धारयन्ती, अन्या=अपरा, कान्ता अपि = रमण्यपि, कान्तेन्दुकराऽभिमृष्टा = रमणचन्द्रहस्तस्पृष्टा सती, अत एव प्रह्लादिता = सञ्जातसुखा, क्षोभात्=चित्तचाञ्चल्यात्, चन्द्रशिला इव= चन्द्रमणिरिव, तूर्णं = शीघ्रं, स्रवत्स्वेदजला = गलत्स्वेदसलिला, सात्त्विकभावोदयादिति भावः । बभूव = सञ्जाता । चन्द्रकिरणस्पर्शेन यथा चन्द्रकान्तमणिः स्रवज्जला भवति तथैव काचिन्मानवती कान्ता कान्तकरस्पर्शेन सात्त्विकभावोदयात्स्वेदसलिलयुक्ता संजातेति भावः ।

**व्युत्पत्तिः** कान्तेन्दुकराऽभिमृष्टा—कान्त इन्दुरिव इति कान्तेन्दुः, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे "इति समासः । कान्तेन्दोः करेण अभिमृष्टा । स्रवत्स्वेदजला—स्रवत् स्वेदजलं यस्याः सा । अत्रोपमाऽलङ्कारः ।

**भाषाऽर्थः** धैर्ययुक्त अत एव कठोरताको ग्रहण करनेवाली दूसरी रमणी भी चन्द्रके तुल्य प्रियके हाथसे स्पर्श किये जानेपर सुखयुक्त होती हुई चित्तके विकारसे चन्द्रकान्त मणिकी तरह शीघ्र बहनेवाले स्वेदजलसे युक्त हो गई ॥ १५ ॥

**शशाङ्कनाथाऽपगमेन धूम्रां मूर्च्छापरीतामिव निर्विवेकाम् ।**
**ततः सखीव प्रथिताऽनुरागा प्राबोधयद् द्यां मधुराऽरुणश्रीः ॥१६॥**

**अन्वयः**—ततः शशाङ्कनाथाऽपगमेन धूम्रां मूर्च्छापरीताम् इव निर्विवेकां द्यां प्रथिताऽनुरागा सखी इव मधुरा अरुणश्रीः प्राबोधयत् ।

**व्याख्या**—ततः = अनन्तरं, शशाङ्कनाथाऽपगमेन = चन्द्रस्वामिवियोगेन, धूम्रां = धूमवर्णां, मलिनामिति भावः । मूर्च्छापरीताम् इव = मूर्च्छायुक्ताम् इव, निर्विवेकां = विवेक्तुमशक्यां, द्यां = दिवम्, आकाशमित्यर्थः । प्रथिताऽनुरागा = प्रकाशितरक्तभावा, सखी इव = आलिरिव, मधुरा=सौन्दर्यशालिनी, अरुणश्रीः = आदित्यलक्ष्मीः, प्राबोधयत् = प्रकाशितवती । यथा पतिवियोगेन मलिनां मूर्च्छितां काञ्चिन्नायिकां तस्याः सखी प्रबोधयति तथैव चन्द्राऽपगमेन मलिनां विवेक्तुमशक्यां दिवमपि आदित्यलक्ष्मीः प्रकाशितवतीति भावः ।

**व्युत्पत्तिः** शशाङ्कनाथाऽपगमेन—शशाङ्कश्चाऽसौ नाथस्तस्याऽपगमेन, प्राबोधयत्—प्रपूर्वकात् णिजन्तात् "बुध अवगमने" इति धातोर्लङ् । "बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः" इति परस्मैपदम् । अत्रोपमाऽलङ्कारः ।

**भाषाऽर्थः** अनन्तर चन्द्ररूप पतिके वियोगसे मलिन, मूर्च्छितके सदृश

निश्चयके अविषय आकाशको रक्त भावको प्रकाशित करनेवाली सखीकी सदृश सौन्दर्यसम्पन्न सूर्य-लक्ष्मीने प्रकाशित किया ॥ १६ ॥

**अवीततृष्णोऽथ परस्परेण क्षणादिवाऽऽयातनिशाऽवसानः।**
**दुःखेन लोकः परवानिवाऽगात्समुत्सुकः स्वप्ननिकेतनेभ्यः ॥ १७ ॥**

**अन्वयः**—अथ लोकः परस्परेण अवीततृष्णः क्षणात् इव आयातनिशाऽवसानः समुत्सुकः ( सन् ) परवान् इव स्वप्ननिकेतनेभ्यो दुःखेन अगात् ।

**व्याख्या**—अथ=अनन्तरं, लोकः = दयितादयितसमूहः, परस्परेण=अन्योन्येन, दयितो दयितया, दयिता च दयितेन; अवीततृष्णः = अनपगतसम्भोगाऽभिलाषः, अत एव—क्षणात् इव = अल्पकालात् इव, आयातनिशाऽवसानः = आगतरजन्यन्तः, समुत्सुकः = उत्कण्ठितः सन्, परवान् इव = पराधीन इव, स्वप्ननिकेतनेभ्यः=शयनगृहेभ्यः, दुःखेन=कष्टेन, अगात् = निर्गतः ।

**ॐव्युत्पत्तिःॐ** आयातनिशाऽवसानः—आयातं निशाऽवसानं यस्य सः। परवान्—"परतन्त्रः पराऽधीनः परवान्नाथवानपि।" इत्यमरः। अगात्—"इण् गतौ" इति धातोर्लुङ्। "इणो गा लुङि" इति गादेशः "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति सिचो लुक्। उत्प्रेक्षाऽलङ्कारः।

**ॐभाषाऽर्थःॐ** अनन्तर रमणी और रमणोंका समूह एक दूसरेसे तृप्त न होकर अल्पकालमें रात्रिके अन्तका अनुभव करते हुएके सदृश उत्कण्ठित होता हुआ पराधीनके सदृश होकर शयन-गृहोंसे दुःखसे निकला ॥ १७ ॥

**अर्धोत्थिताऽऽलिङ्गितसन्निमग्नो रुद्धः पुनर्यान् गमनेऽनभीप्सुः।**
**व्याजेन निर्याय पुनर्निवृत्तस्त्यक्ताऽन्यकार्यः स्थित एव कश्चित् ॥ १८ ॥**

**अन्वयः**—अर्धोत्थिताऽऽलिङ्गितसन्निमग्नः, पुनः यान् रुद्धः गमने अनभीप्सुः निर्याय व्याजेन पुनः निवृत्तः कश्चित् त्यक्ताऽन्यकार्यः स्थित एव ।

**व्याख्या**—अर्धोत्थिताऽऽलिङ्गितसन्निमग्नः=अर्धोत्थिताऽऽश्लिष्टपतितः, पुनः= भूयः, यान् = निर्गच्छन्, रुद्धः=निवारितः, दयितयेति शेषः । गमने=निर्गमने, अनभीप्सुः=अनिच्छुरपि, निर्याय=निर्गत्य, कार्यवशादिति शेषः। व्याजेन=अपदेशेन, पुनः = भूयः, निवृत्तः=आगतः, कश्चित्=कोऽपि कामी, त्यक्ताऽन्यकार्यः = विमुक्ताऽपरकर्मा सन्, स्थित एव = अवस्थित एव, पुनर्बहिर्न ययाविति भावः ।

**ॐव्युत्पत्तिःॐ** अर्धोत्थिताऽऽलिङ्गितसन्निमग्नः—अर्धं यथा तथा उत्थितः अर्धोत्थितः, सुप्सुपा समासः। प्राक् अर्धोत्थितः पश्चादालिङ्गितः, ( प्रिययेति शेषः ) अर्धोत्थिताऽऽलिङ्गितः, "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाऽधिकरणेन" इति पूर्व-

कालसमासः । अर्धोत्थिताऽऽलिङ्गितश्चाऽसौ सन्निमग्नः । यान्—यातीति, लटः शत्रादेशः । त्यक्ताऽन्यकार्यः—त्यक्तम् अन्यत् कार्यं येन सः । इन्द्रवज्रा वृत्तम् ।

ॐभाषाऽर्थःॐ शयनसे आधा उठनेपर प्रियासे आलिङ्गित हो फिर वहीं पड़ा हुआ, फिर निकलने पर रोका गया, बाहर जानेमें इच्छा न करनेवाला तो भी निकलकर बहानेसे फिर लौटकर कोई कामी और कार्यको छोड़कर वहीं रह गया ॥ १८ ॥

**तालेन सम्पादितसाम्यशोभं शुभाऽवधानं स्वरबद्धरागम् ।**
**पदैर्गताऽर्थं नृपमन्दिरेषु प्रातर्जगुर्मङ्गलवत्तरुण्यः ॥ १९ ॥**

**अन्वयः**—प्रातः तरुण्यो नृपमन्दिरेषु तालेन सम्पादितसाम्यशोभं शुभाऽवधानं स्वरबद्धरागं पदैः गतार्थं मङ्गलवत् जगुः ।

**व्याख्या**—प्रातः = प्रभाते, तरुण्यः = युवतयः, नृपमन्दिरेषु = राजभवनेषु, तालेन = कालक्रियामानेन, चञ्चत्पुटादिनेति शेषः । सम्पादितसाम्यशोभं = निष्पादितलयमाधुर्यं, शुभाऽवधानं=शोभनचित्तैकाग्रतासमन्वं, स्वरबद्धरागं = षड्जादिस्वरनद्धभैरवादिरागं, पदैः=सुप्तिङन्तैः, गताऽर्थं=परिच्छिन्नाऽर्थं, निरर्थकपदरहितमिति भावः । मङ्गलवत् = मङ्गलोपेतं यथा तथेति क्रियाविशेषणम्, एवं पूर्वत्राऽपि । जगुः=गतीवत्यः । अनेन स्वरगतं, पदगतं, लतगतमवधानगतं चेति चतुर्विधं गीतमाख्यातमिति जयमङ्गलः ।

ॐव्युत्पत्तिःॐ सम्पादितसाम्यशोभं—सम्पादिता साम्यशोभा यस्मिन्कर्मणि तद्यथा तथेति क्रियाविशेषणम्, एवं परत्राऽपि । शुभाऽवधानं—शुभम् अवधानं यस्मिंस्तत् । स्वरबद्धरागं—स्वरैः ( षड्जादिभिः ) बद्धा रागा यस्मिंस्तत् । गताऽर्थं गता अर्था यस्मिंस्तत् । मङ्गलवत्—मङ्गलमस्ति अस्मिंस्तत् । जगुः—"गै शब्दे" इति धातोर्लिट् ।

ॐभाषाऽर्थःॐ प्रातःकाल युवतियोंने राजमन्दिरोंमें तालसे लयके माधुर्यका सम्पादनकर एकाग्रतापूर्वक षड्ज आदि स्वरोंसे रागोंको निबद्धकर सुबन्त तिङन्त आदि पदोंसे परिच्छिन्न अर्थवाला और मङ्गलयुक्त गीत गाया ॥ १९ ॥

**दुरुत्तरे पङ्क इवाऽन्धकारे मग्नं जगत् सन्ततरश्मिरज्जुः ।**
**प्रनष्टमूर्तिप्रविभागमुद्यन् प्रत्युज्जहारेव ततो विवस्वान् ॥ २० ॥**

**अन्वयः**—पङ्क इव दुरुत्तरे अन्धकारे मग्नं प्रनष्टमूर्तिप्रविभागं जगत् उद्यन् विवस्वान् सन्ततरश्मिरज्जुः ( सन् ) ततः प्रत्युज्जहार इव ।

**व्याख्या**—पङ्क इव = कर्दम इव, दुरुत्तरे = दुःखोत्तरणीये, अन्धकारे=तिमिरे,

मग्नं = प्रविष्टम्, अतएव प्रनष्टमूर्तिप्रविभागम् = अदृष्टस्थावराऽऽदिशरीरविभक्ति, जगत् = लोकम्, उद्यन् = उद्गच्छन्, विवस्वान् = सूर्यः, सन्ततरश्मिरज्जुः = प्रविततकिरणगुणः सन्, ततः = अन्धकारात्, प्रत्युज्जहार इव = उद्धृतवान् इव ।

ॐव्युत्पत्तिःॐ प्रनष्टमूर्तिप्रविभागं—प्रनष्टो मूर्तीनां प्रविभागो यस्मिंस्तत् । सन्ततरश्मिरज्जुः—सन्तता रश्मय एव रज्जवो येन सः । अत्रोपमोत्प्रेक्षयोः संसृष्टिः ।

ॐभाषाऽर्थःॐ कीचड़के सदृश दुरुत्तर अन्धकारमें प्रविष्ट अतएव जहाँपर स्थावर जङ्गम आदि मूर्तियोंका विभाग नहीं जाना जाता है ऐसे जगत्को उदित होते हुए सूर्य किरणरूप रस्सियोंको फैलाते हुए अन्धकारसे उद्धार करनेवालेके सदृश प्रतीत हुए ॥ २० ॥

**पीतौष्ठरागाणि हृताञ्जनानि भास्वन्ति लोलैरलकैर्मुखानि ।**
**प्रातः कृताऽर्थानि यथा विरेजुस्तथा न पूर्वेद्युरलंकृतानि ॥२१॥**

**अन्वयः**—पीतौष्ठरागाणि हृताञ्जनानि भास्वन्ति लोलैः अलकैः ( उपलक्षितानि ) कृताऽर्थानि मुखानि प्रातः यथा विरेजुः, तथा पूर्वेद्युः अलङ्कृतानि ( अपि ) न विरेजुः ।

**व्याख्या**—पीतौष्ठरागाणि=पीताऽधरलौहित्यानि, कान्तकृतचुम्बनादिति भावः । हृताऽञ्जनानि = अपगतकज्जलानि, नयनयोरपि चुम्बनादिति भावः । भास्वन्ति = दीप्तिमन्ति, मनोरथपूरणादिति तात्पर्यम् । एवं च—लोलैः = आकुलैः, अलकैः = चूर्णकुन्तलैः, उपलक्षितानीति शेषः, केशग्रहाकर्षणादिति भावः । अत एव कृताऽर्थानि= कृतकार्याणि, मुखानि = आननानि, वधूनामिति शेषः । प्रातः = प्रभाते, यथा = येन प्रकारेण, विरेजुः = शुशुभिरे, तथा = तेन प्रकारेण, पूर्वेद्युः=पूर्वस्मिन्दिने, अलङ्कृतानि = भूषितान्यपि, न विरेजुः=न शुशुभिरे, तदानीं तेषामकृतार्थत्वादिति भावः ।

ॐव्युत्पत्तिःॐ पीतौष्ठरागाणि—पीत ओष्ठरागो येषां तानि । हृताऽञ्जनानि—हृतमञ्जनं येभ्यस्तानि । अलकैः—"इत्थम्भूतलक्षणे" इति तृतीया । पूर्वेद्युः—पूर्वस्मिन्नहनीति "सद्यः परुदि"त्यादिना निपातः ।

ॐभाषाऽर्थःॐ पीये हुए अधररागसे युक्त, अञ्जनसे रहित नेत्रोंसे सम्पन्न, दीप्तिशोभित, बिखरे हुए अलकोंसे उपलक्षित अत एव पतिके उपभोगसे कृतार्थ वधुओंके मुख, प्रातःकाल जिस तरहसे शोभित हुए; उस तरह पिछले दिन अलङ्कृत होनेपर भी ( कृताऽर्थ नहीं होनेसे ) शोभित नहीं हुए ॥ २१ ॥

**प्रजागराऽऽताम्रविलोचनाऽन्ता निरञ्जनाऽलक्तकपत्रलेखाः ।**
**तुल्या इवाऽऽसन् परिखेदतन्व्यो वासच्युताः सेवितमन्मथाभिः ॥२२॥**

**अन्वयः**—प्रजागराऽऽताम्रविलोचनाऽन्ताः निरञ्जनाऽलक्तकपत्रलेखाः परिखेदतन्व्यो वासच्युताः सेवितमन्मथाभिः तुल्या इव आसन् ।

**व्याख्या**—प्रजागराऽऽताम्रविलोचनाऽन्ताः = जागरणाऽऽरक्तनेत्राऽन्ताः, एकत्र प्रियस्य अनागमनात् अपरत्र मन्मथसेवनादिति भावः । निरञ्जनाऽलक्तकपत्रलेखाः= वासच्युतापक्षे—नायातः प्रिय इति रोदनात् अपगतकज्जलाः, तत एव शोकात् मुहुर्मुहुः अश्रुपातेन विगताधररागाः, तथैव उद्वर्तनपरिवर्तनात् कपोलादिभ्यो निष्पत्रलेखाः । सेवितमन्मथापक्षे—पतिकृतलोचनचुम्बनात् कज्जलरहिताः, अधरचुम्बनात् अधराऽलक्तकरागरहिताः, रतिविमर्देन पत्रलेखाशून्याः । परिखेदतन्व्यः = एकत्र प्रियाऽप्राप्त्या खेदकृशाङ्ग्यः, अपरत्र पत्युपभोगजनितखेदकृशशरीराः । वासच्युताः= पतिसहवासवञ्चिता ललनाः, सेवितमन्मथाभिः=अनुष्ठितसुरताभिर्ललनाभिः, तुल्याः इव = समरूपा इव, आसन्=सम्भूताः ।

❀व्युत्पत्तिः❀ प्रजागराऽऽताम्रविलोचनाऽन्ताः—प्रजागरेण आताम्रौ विलोचनाऽन्तौ यासां ताः । निरञ्जनाऽलक्तकपत्रलेखाः—अञ्जनं च अलक्तकश्च पत्रलेखाः ( कपोलादिषु केसरादिरचितास्तिलकविशेषाः ) च अञ्जनाऽलक्तकपत्रलेखाः, निर्गता अञ्जनाऽलक्तकपत्रलेखा याभ्यस्ताः । परिखेदतन्व्यः—परिखेदात् तन्व्यः । वासच्युताः—वासात् च्युताः । सेवितमन्मथाभिः—तुल्यपदयोगे "तुल्याऽऽर्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इति तृतीया ।

❀भाषाऽर्थः❀ रातके जागरणसे रक्तवर्णवाले नेत्रप्रान्तोंसे युक्त, नेत्रोंमें कज्जलरहित, अधररागसे शून्य और कपोल आदि अङ्गोंमें तिलकसे परिवर्जित, खेदसे कृशाङ्गी पतिके सहवाससे वञ्चित रमणियां पतिसे उपभुक्त स्त्रियोंके तुल्य थीं ॥ २२ ॥

**आबद्धनेत्राऽञ्जनपङ्कलेशस्ताम्बूलरागं बहुलं दधानः ।**
**चकार कान्तोऽप्यधरोऽङ्गनानां सहोषितानां पतिभिर्लघुत्वम् ॥२३॥**

**अन्वयः**—पतिभिः सह उषितानाम् अङ्गनानाम् अपि आबद्धनेत्राऽञ्जनपङ्कलेशः बहुलं ताम्बूलरागं दधानः कान्तोऽपि अधरः लघुत्वं चकार ।

**व्याख्या**—पतिभिः=भर्तृभिः, सह = समम्, उषितानां = कृतवासानाम्, अङ्गनानाम् अपि = कासांचित्सुन्दरीणाम् अपि, आबद्धनेत्राऽञ्जनपङ्कलेशः = आलग्ननयनकज्जलपङ्कलवः, अभीप्सितसमागमाऽलाभेन रोदनेनेति भावः । बहुलम् = अधिकं, ताम्बूलरागं = नागवल्लीदललौहित्यं, दधानः = धारयन्, अधरे बहुलताम्बूलरागसत्त्वं पतिकृतचुम्बनाऽभावेन बोध्यम् । कान्तोऽपि = मनोरमोऽपि, अधरः = ओष्ठः, लघुत्वं = लाघवं, दौर्भाग्यमित्यर्थः । चकार = कृतवान्, सूचितवानित्यर्थः ।

ॐव्युत्पत्तिःॐ पतिभिः—सहयोगे "सहयुक्तेऽप्रधाने" इति तृतीया। उषितानां—वसधातोः कर्तरि क्तप्रत्यये सम्प्रसारणे च "शासिवसिघसीनां च" इति षत्वम्। आबद्धनेत्राऽञ्जनपङ्कलेशः—आबद्धो नेत्राऽञ्जनपङ्कलेशो यस्य सः। चकार—कृधातोर्लिट्।

ॐभाषाऽर्थःॐ पतिके साथ निवास करनेवाली भी किन्हीं सुन्दरियोंके रोनेसे नेत्रस्थित कज्जलके लेशसे युक्त और पर्याप्त ताम्बूलराग सपन्न एवम् मनोहर होते हुए भी ऐसे अधरने दुर्भाग्यकी सूचना की ॥ २३ ॥

**चक्षूंषि कान्तान्यपि साऽञ्जनानि ताम्बूलरक्तं च सरागमोष्ठम्।**
**कुर्वन् सवासं च सुगन्धि वक्त्रं चक्रे जनः केवलपक्षपातम् ॥ २४ ॥**

**अन्वयः**—जनः कान्तानि अपि चक्षूंषि साऽञ्जनानि, सरागम् ओष्ठं ताम्बूलरक्तं, सुगन्धि वक्त्रं च सवासं कुर्वन् केवलपक्षपातं चक्रे।

**व्याख्या**—जनः = ललनाजनः, कान्तानि अपि = स्वभावसुन्दराणि अपि, विकसितोत्पलकान्तेरिति भावः। चक्षूंषि = नेत्राणि, साऽञ्जनानि = कज्जलसहितानि, सरागं = सलौहित्यं; ओष्ठम् = अधरम्, बिम्बफलाकारत्वादिति भावः। ताम्बूलरक्तं = नागवल्लीदलाऽरुणं; सुगन्धि = स्वभावतः सुगन्धयुक्तं, वक्त्रं च = मुखं च, सवासं = कर्पूरादिवासयुक्तं, कुर्वन् = विदधत्, केवलपक्षपातं = ममत्वं, चक्रे = कृतवान्। अञ्जनादिषु प्रसाधनोपकरणेषु ममत्वबुद्ध्यैव तदुपयोगं चकार ललनाजनः, स्वभावसुन्दरेषु तदङ्गेषु पौनरुक्त्यावहत्वात्तेषां निरर्थकत्वमेवेति भावः।

ॐव्युत्पत्तिःॐ साऽञ्जनानि—अञ्जनेन सहितानि। सुगन्धि—शोभनो गन्धो यस्य तत्, "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इति गन्धस्येकारोऽन्तादेशः। अत्रेन्द्रवज्रा वृत्तम्।

ॐभाषाऽर्थःॐ स्त्रीजनने स्वभावसुन्दर होते हुए भी नेत्रोंको कज्जलसे युक्त, स्वाभाविक लालिमासे युक्त अधरको ताम्बूलसे लाल और सुगन्धि मुखको कर्पूरादि वासद्रव्यसे युक्तकर केवल ममता बुद्धि की ॥ २४ ॥

**क्षतैरसंचेतितदन्तलब्धैः संभोगकालेऽवगतैः प्रभाते।**
**अशङ्कताऽन्योन्यकृतं व्यलीकं वियोगबाह्योऽपि जनोऽतिरागात् ॥ २५ ॥**

**अन्वयः**—संभोगकाले असञ्चेतितदन्तलब्धैः प्रभाते अवगतैः क्षतैः वियोगबाह्योऽपि जनः अतिरागात् अन्योन्यकृतं व्यलीकम् अशङ्कत।

**व्याख्या**—सम्भोगकाले = समागमसमये, असञ्चेतितदन्तलब्धैः = अज्ञातदशनप्राप्तैः, रागान्धतेति भावः। प्रभाते = प्रातःकाले, अवगतैः = दर्शनेन परिज्ञातैः, क्षतैः = व्रणैः, वियोगबाह्योऽपि = विप्रलम्भबहिर्भूतोऽपि, प्रियजनेन समं सुप्तोऽपीति भावः। अतिरागात् = प्रणयाऽतिशयात्, अन्योन्यकृतम् = परस्परेण विहितं,

व्यलीकम् = अपराधम्, अशङ्कत = शङ्कितवान् । अस्याऽन्यया वल्लभया जनितं क्षतमेतदिति शङ्कितवती नारी, नरश्च अस्या अन्येन धूर्तेनेति भावः ।

ॐव्युत्पत्तिःॐ असञ्चतितदन्तलब्धैः—असञ्चेतितानि दन्तेभ्यो लब्धानि, तैः । "चित संचेतने" इति स्वार्थिकण्यन्तस्य धातोर्निष्ठायां क्तप्रत्यये सञ्चेतितपदसिद्धिः । वियोगबाह्यः—बहिर्भवो बाह्यः, "बहिषष्टिलोपो यञ्च" इति यञ् टिलोपश्च । वियोगाद्बाह्यः ।

ॐभाषाऽर्थःॐ समागम समयमें अज्ञात रूपसे दन्तजनित, प्रातःकालमें जाने गये व्रणोंसे समागमशील जन ( स्त्रीजन और पुरुषजन ) ने भी अतिशय राग से परस्परमें एकने दूसरेके अपराधकी आशङ्का की ॥ २५ ॥

**नेत्रेषुभिः संयुतपद्मपत्रैः कर्णाऽन्तकृष्टैरुरुकेशशूलाः ।**
**स्तनोरुचक्रास्ततकर्णपाशाः स्त्रीयोधमुख्या जयिनो विचेरुः ॥२६॥**

**अन्वयः**—संयुतपद्मपत्रैः कर्णाऽन्तकृष्टैः नेत्रेषुभिः ( उपलक्षिताः ) उरुकेशशूलाः स्तनोरुचक्राः ततकर्णपाशाः जयिनः स्त्रीयोधमुख्याः विचेरुः ।

**व्याख्या**—संयुतपद्मपत्रैः = संयुक्ताऽक्षिलोमपत्रैः, कर्णाऽन्तकृष्टैः = श्रोत्राऽन्ताकृष्टैः, नेत्रेषुभिः = नयनबाणैः, उपलक्षिताः, उरुकेशशूलाः = महाकुन्तलशूलाः, स्तनोरुचक्राः = पयोधरविशालचक्राः, ततकर्णपाशाः = विस्तारितश्रोत्रपाशाः, अत एव—जयिनः = जयशीलाः, स्त्रीयोधमुख्याः = ललनाभटमुख्याः, विचेरुः=भ्रान्ताः ।

ॐव्युत्पत्तिःॐ संयुतपद्मपत्रैः—संयुतानि पद्माण्येव पत्राणि येषां ते संयुतपद्मपत्रास्तैः । नेत्रेषुभिः नेत्राणि इषव इव नेत्रेषवस्तैः, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति समासः । "इत्थम्भूतलक्षणे" इति तृतीया । "पत्त्री रोप इषुर्द्वयोः" इत्यमरः । उरुकेशशूलाः—केशाः शूला इव केशशूलाः । पूर्ववत्समासः । उरवः केशशूला येषां ते । स्तनोरुचक्राः—स्तना उरुचक्राणि इव येषां ते । ततकर्णपाशाः—कर्णाः पाशा इव कर्णपाशाः । ततः कर्णपाशा येषां ते । स्त्रीयोधमुख्याः—स्त्रियो योधमुख्या इव । अत्रोपमाऽलङ्कारः ।

ॐभाषाऽर्थःॐ संयुक्त पक्ष्म ( नेत्रलोम ) रूप पत्रोंसे युक्त, कर्णाऽन्तपर्यन्त खींचे गये, बाण तुल्य नेत्रोंसे उपलक्षित, शूलके सदृश महान् केशोंसे युक्त, विशाल चक्रों के सदृश स्तनोंसे सम्पन्न, पाशोंके सदृश विस्तृत कर्णोंसे युक्त जयशील मुख्य योद्धाओंके तुल्य स्त्रियां विचरण करने लगीं ॥ २६ ॥

**पयोधरांश्चन्दनपङ्कदिग्धान् वासांसि चाऽमृष्टमृजानि दृष्ट्वा ।**
**स्त्रीणां सपत्न्यो जहृषुः प्रभाते मन्दायमानाऽनुशयैर्मनोभिः ॥२७॥**

**अन्वयः**—सपत्न्यः प्रभाते स्त्रीणां पयोधरान् चन्दनपङ्कदिग्धान् वासांसि च अमृष्टमृजानि दृष्ट्वा मन्दायमानाऽनुशयैः मनोभिः जहृषुः ।

**व्याख्या**—सपत्न्यः = समानभर्तृकाः स्त्रियः, प्रभाते = प्रातःकाले, स्त्रीणां = नारीणां, सपत्नीनामित्यर्थः । पयोधरान् = स्तनान्, चन्दनपङ्कदिग्धान् = श्रीखण्ड-पङ्कलिप्तान् इत्यर्थः, पतिसमागमाऽभावादिति भावः । पतिसमागमे सति तु चन्दन-पङ्काऽगमः प्रसज्येत इति तात्पर्यम् । एवं च वासांसि च = वस्त्राणि च, अमृष्टमृजा-नि = अनपनीतशुद्धभावानि, कान्तसमागमाऽभावादिति भावः । दृष्ट्वा = विलोक्य, मन्दायमानाऽनुशयैः = तनूभवद्दीर्घद्वेषैः, मदीयसपत्न्याः कान्तेन समागमो नाऽभू-दिति परिज्ञानेनेति भावः । मनोभिः = चित्तैः करणैः, जहृषुः = हृष्टाः ।

❀व्युत्पत्तिः❀ सपत्न्यः—समानः पतिर्यासां ताः, "नित्यं सपत्न्यादिषु" इति निपातः । चन्दनपङ्कदिग्धान्—चन्दनपङ्केन दिग्धान् । "दिह उपचये" इति धातोः निष्ठायां क्तप्रत्ययेन दिग्धपदसिद्धिः । अमृष्टमृजानि—मार्जनं मृजा, "मृजू शुद्धौ" इति धातोः "षिद्भिदादिभ्योऽङ्" इति अङ् प्रत्ययः । "स्यान्मार्ष्टिर्मार्जना मृजा" इत्यमरः । अमृष्टा मृजा येषां, तानि । मन्दायमानाऽनुशयैः—मन्दायमाना अनुशया येषु तानि मन्दायमानाऽनुशयानि, तैः । "अथाऽनुशयो दीर्घद्वेषाऽनुतापयोः" इत्यमरः ।

❀भाषाऽर्थः❀ सपत्नियों ( सौतों ) ने प्रातःकालमें सपत्नी स्त्रियोंके स्तनोंको चन्दन पङ्कसे लिप्त और वस्त्रोंको शुद्धियुक्त देखकर मन्द दीर्घ द्वेषवाले चित्तोंसे वे प्रसन्न हो गईं ॥ २७ ॥

**स्मराऽऽतुरे चेतसि लब्धजन्मा रराज लोलोऽपि गुणाऽपहार्यः ।**
**कुतूहलान्नेत्रगवाक्षसंस्थः पश्यन्निवाऽन्योन्यमुखानि रागः ॥२८॥**

**अन्वयः**—स्मराऽऽतुरे चेतसि लब्धजन्मा नेत्रगवाक्षसंस्थः गुणाऽपहार्यो लोलो-ऽपि रागः कुतूहलात् अन्योन्यमुखानि पश्यन् इव रराज ।

**व्याख्या**—साम्प्रतं प्रातरन्योन्यस्य मुखं पश्यतोर्दम्पत्योरनुरागो वर्ण्यते । स्मरा-ऽऽतुरे = कामाऽऽकुले, चेतसि = चित्ते, लब्धजन्मा = प्राप्तोदयः, उत्पन्न इत्यर्थः । नेत्रगवाक्षसंस्थः = नयनवातायनस्थितः, गुणाऽपहार्यः = तत्प्रतिपक्षशुक्लगुणाऽपनेयः, अत एव—लोलोऽपि = चञ्चलोऽपि, अचिरस्थायी अपि, रागः = रक्तभावः, कुतूहलात् = कौतुकात्, अन्योन्यमुखानि = परस्पराननानि, पश्यन् इव = विलोकयन् इव, कामि-न्या मुखं कीदृशं कामुकस्य वा मुखं कीदृशमिति बुद्ध्या इति शेषः । रराज = शुशुभे ।

❀व्युत्पत्तिः❀ लब्धजन्मा—लब्धं जन्म येन सः । नेत्रगवाक्षसंस्थः—नेत्रे गवाक्षा-विवेति नेत्रगवाक्षौ, तयोः संस्था ( स्थितिः ) यस्य सः । अत्रोत्प्रेक्षाऽलङ्कारः ।

❀भाषाऽर्थः❀ कामसे आकुल चित्तमें उत्पन्न, झरोखोंके सदृश नेत्रोंमें स्थित, प्रतिपक्ष शुक्ल गुणसे हटाये जानेवाला अत एव अचिरस्थायी होता हुआ भी राग

( लौहित्य ) कौतुकसे परस्परमें मुखों को देखते हुए के सदृश शोभित हुआ ॥ २८ ॥

**गतेऽतिभूमिं प्रणये प्रयुक्तानबुद्धिपूर्वं परिलुप्तसंज्ञः ।**
**आत्माऽनुभूतानपि नोपचारान् स्मराऽऽतुरः संस्मरति स्म लोकः ॥२९॥**

**अन्वयः**—स्मराऽऽतुरो लोकः प्रणये अतिभूमिं गते परिलुप्तसंज्ञः ( सन् ) अबुद्धिपूर्वं प्रयुक्तान् आत्माऽनुभूतान् अपि उपचारान् न संस्मरति स्म ।

**व्याख्या**—स्मराऽऽतुरः = कामाऽऽकुलः, लोकः = जनः, प्रणये = प्रेम्णि, अतिभूमिं = प्रकृष्टाऽवस्थां, गते = प्राप्ते, अतएव—परिलुप्तसंज्ञः = अपगतचेतनः, मूढ इत्यर्थः, एतादृशः सन् । अबुद्धिपूर्वम् = अमतिपूर्वं, प्रयुक्तान् = अनुष्ठितान्, आत्माऽनुभूतान् अपि = स्वाऽनुभूतिगोचरान् अपि, उपचारान् = नखदन्तक्षतादीनित्यर्थः । न संस्मरति स्म=नो स्मृतवान्, प्रातरिति शेषः ।

❀व्युत्पत्तिः❀ अबुद्धिपूर्वम्—अबुद्धिः ( अज्ञानम् ) पूर्वा यस्मिन्कर्मणि तद्यथा तथेति प्रयोगक्रियाविशेषणम् । संस्मरति स्म–"लट् स्मे" इति स्मयोगे भूताऽर्थे लट् ।

❀भाषाऽर्थः❀ कामसे आकुल जन प्रेमके उत्कृष्ट अवस्थामें प्राप्त होनेपर ज्ञानशून्य होता हुआ अबुद्धिपूर्वक किये गये अपनेसे अनुभूत भी नखक्षत दन्तक्षत आदि विषयोंका स्मरण नहीं करता था ॥ २९ ॥

**वस्त्रैरनत्युल्बणरम्यवर्णैर्विलेपनैः सौरभलक्षणीयैः ।**
**आस्यैश्च लोकः परितोषकान्तैरसूचयल्लब्धपदं रहस्यम् ॥ ३० ॥**

**अन्वयः**—लोकः अनत्युल्बणरम्यवर्णैः वस्त्रैः, सौरभलक्षणीयैः विलेपनैः परितोषकान्तैः आस्यैश्च लब्धपदं रहस्यम् असूचयत् ।

**व्याख्या**—लोकः = जनः,अनत्युल्बणरम्यवर्णैः=अनतिस्फुटसुन्दरवर्णैः, वस्त्रैः= वसनैः, सौरभलक्षणीयैः = सुरभितया परिच्छेद्यैः, विलेपनैः = वर्णकद्रव्यैः, परितोषकान्तैः = प्रमोदसुन्दरैः, आस्यैश्च = मुखैश्च, ज्ञापकचिह्नभूतैः । लब्धपदं = प्राप्तलक्षणं, रहस्यं = विविक्तभवं, सुरतमित्यर्थः । असूचयत् = सूचितवान्, प्रकाशितवानिति भावः ।

❀व्युत्पत्तिः❀ अनत्युल्बणरम्यवर्णैः—अनत्युल्बणा रम्या वर्णा येषां तानि अनत्युल्बणरम्यवर्णानि, तैः । सौरभलक्षणीयैः – लक्षयितुमर्हाणि लक्षणीयानि, "लक्ष दर्शनाऽङ्कनयोः" इति धातोः अनीयर् । सौरभेण लक्षणीयानि, तैः । परितोषकान्तैः – परितोषेण कान्तानि, तैः । लब्धपदं—लब्धं पदं येन, तत् । "पदं व्यवसितत्राणस्थानलक्ष्माऽङ्घ्रिवस्तुषु" इत्यमरः । रहस्यं—रहो भवम् "दिगादिभ्यो यत्" इति यत् ।

❀भाषाऽर्थः❀ जनने अत्यन्त स्फुटतासे रहित सुन्दर वर्णोंवाले वस्त्रोंसे, सौरभसे,

ज्ञानके विषय विलेपन द्रव्योंसे, हर्षसे सुन्दर मुखोंसे भी लक्षणको प्राप्त सुरत को प्रकाशित किया ॥ ३० ॥

**प्रातस्तरां चन्दनलिप्तगात्राः प्रच्छाद्य हस्तैरधरान् वदन्तः ।**
**शाम्यन्निमेषाः सुतरां युवानः प्रकाशयन्ति स्म निगूहनीयम् ॥३१॥**

**अन्वयः**—युवानः प्रातस्तरां चन्दनलिप्तगात्राः हस्तैः अधरान् प्रच्छाद्य वदन्तः शाम्यन्निमेषाः ( सन्तः ) निगूहनीयं सुतरां प्रकाशयन्ति स्म ।

**व्याख्या**—गुरुजनो नखदशनक्षतं मा द्राक्षीदिति, युवानः=तरुणाः, प्रातस्तराम् अतिशयप्रातःकाले, चन्दनलिप्तगात्राः = श्रीखण्डचर्चितशरीराः, चन्दनलेपनेन शरीरस्थनखक्षतगोपनमनुष्ठितम् । हस्तैः=करैः, अधरान्=ओष्ठान्, प्रच्छाद्य=अपवार्य, दशनक्षतगोपनाऽर्थमिति भावः । वदन्तः = भाषमाणा अपि, शाम्यन्निमेषाः = अनिमिषितनेत्राः सन्तः, निगूहनीयं = गोपनीयं वस्तु, सुरतमिति शेषः । सुतरां = शोभनप्रकारेण, प्रकाशयन्ति स्म = प्रकाशितवन्तः, नूनमेते रतिक्रियया सत्कृता येन एवमाचरन्तीति परेषां ज्ञानमुत्पादितवन्त इति भावः ।

❀व्युत्पत्तिः❀ युवानः—"वयस्थस्तरुणो युवा" इत्यमरः । प्रातस्तराम्—अतिशयेन प्रातः, "द्विवचनविभज्योपपदे तरबीयसुनौ" इति तरबन्तात्प्रातःशब्दात् अद्रव्यप्रकर्षे "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यामुप्रत्ययः । "कृन्मेजन्त" इत्यव्ययत्वम् । चन्दनलिप्तगात्राः—चन्दनेन लिप्तं गात्रं येषां ते । शाम्यन्निमेषाः—शाम्यन्तो निमेषा येषां ते । सुतरां—तरबन्तात्सूपसर्गात्पूर्ववदामुः ।

❀भाषाऽर्थः❀ तरुणलोग बहुत सबेरे चन्दनसे शरीरको लिप्तकर हाथोंसे अधरों को प्रच्छादितकर बोलते हुए भी पलक नहीं मारते हुए गोपनीय विषय ( सुरत ) को भली भांतिसे प्रकाशित करते थे ॥ ३१ ॥

**साम्नैव लोके विजितेऽपि वामे किमुद्यतं भ्रूधनुरप्रसह्यम् ।**
**हन्तुं क्षमो वा वद लोचनेषुर्दिग्धो विषेणेव किमञ्जनेन ॥ ३२ ॥**

**अन्वयः**—"हे वामे ! साम्ना एव लोके विजिते अपि अप्रसह्यं भ्रूधनुः किम् उद्यतम् ? वा हन्तुं क्षमो लोचनेषुः विषेण इव अञ्जनेन किं दिग्धः ? वद ।

**व्याख्या**—कश्चित्कामुकः कामुकीं ब्रूते—हे वामे = हे कुटिले !, साम्ना एव = सान्त्वेन एव अविकृतेन, लोके = जने, मद्विध इति शेषः । विजितेऽपि=वशीकृतेऽपि, अप्रसह्यं = प्रसोढुमशक्यं, भ्रूधनुः = भ्रूकार्मुकं, किं = किमर्थम्, उद्यतम् = उत्क्षिप्तम् ? वा = अथवा, हन्तुं = व्यापादयितुं, क्षमः = समर्थः, स्वयमिति शेषः । लोचनेषुः = नयनशरः, विषेण इव=गरलेन इव, कृष्णवर्णेन, अञ्जनेन = कज्जलेन, किं=किमर्थं, दिग्धः=लिप्तः ?, वद = ब्रूहि, वाक्यार्थः कर्म ।

※व्युत्पत्तिः※ भ्रूधनुः-भ्रूर्धनुरिव । लोचनेषुः-लोचनम् इषुरिव । उपमाऽलङ्कारः ।

※भाषाऽर्थः※ हे कुटिले ! सामसे मेरे ऐसे जनके जीते जानेपर भी नहीं सही जानेवाली धनुके तुल्य भ्रूको क्यों उठाया ? अथवा स्वयम् मारनेको समर्थ बाणके सदृश नेत्रको विषके तुल्य अञ्जनसे क्यों लिप्त किया ? बताओ ॥ ३२ ॥

**दन्तच्छदे प्रज्वलिताऽग्निकल्पे ताम्बूलरागस्तृणभारतुल्यः ।**
**न्यस्तः किमित्यूचुरुपेतभावा गोष्ठीषु नारीस्तरुणीर्युवानः ॥ ३३ ॥**

**अन्वयः**—प्रज्वलिताऽग्निकल्पे दन्तच्छदे तृणभारतुल्यः ताम्बूलरागः किमिति न्यस्तः ? इति युवानः गोष्ठीषु उपेतभावाः तरुणीः नारीः ऊचुः ।

**व्याख्या**—प्रज्वलिताऽग्निकल्पे = प्रोद्दीपिताऽनलतुल्ये, दन्तच्छदे = अधरे, स्वभावलोहित इति भावः । तृणभारतुल्यः = तृणसमूहसदृशः, निष्प्रयोजनत्वादिति भावः । ताम्बूलरागः = नागवल्लीरागः, किमिति = केन हेतुना, न्यस्तः = निक्षिप्तः ?, इति = इत्थं, युवानः = तरुणाः, गोष्ठीषु=सभासु, उपेतभावाः = जाताऽनुरागाः, तरुणीः = युवतीः, नारीः = स्त्रियः, ऊचुः=अकथयन्, प्रातरिति शेषः ।

※व्युत्पत्तिः※ प्रज्वलिताऽग्निकल्पे—ईषदसमाप्तः प्रज्वलिताऽग्निः प्रज्वलिताऽग्निकल्पस्तस्मिन् । उपमाऽलङ्कारः । इन्द्रवज्रा वृत्तम् ।

※भाषाऽर्थः※ प्रज्वलित अग्निके सदृश ओष्ठमें तृण-भारके तुल्य ताम्बूलराग क्यों रक्खा ? इस तरह युवकोंने सभाओंमें प्रेमसे युक्त तरुणी स्त्रियोंको कहा ॥ ३३ ॥

**सुखाऽवगाहानि युतानि लक्ष्म्या शुचीनि संतापहराण्युरूणि ।**
**प्रबुद्धनारीमुखपङ्कजानि प्रातः सरांसीव गृहाणि रेजुः ॥ ३४ ॥**

**अन्वयः**—प्रातः सुखाऽवगाहानि लक्ष्म्या युतानि शुचीनि सन्तापहराणि उरूणि प्रबुद्धनारीमुखपङ्कजानि गृहाणि सरांसि इव रेजुः ।

**व्याख्या**—प्रातः = प्रभाते, सुखाऽवगाहानि = अक्लेशप्रवेश्यानि, निरुपद्रवत्वादिति भावः । लक्ष्म्या=गृहपक्षे-संपत्त्या, सरःपक्षे-शोभया, रमादेव्या वा, सरसिजे लक्ष्म्या निवासात् । युतानि = युक्तानि, शुचीनि = पवित्राणि, सन्तापहराणि = आतपादितापहराणि, उरूणि = महान्ति, प्रबुद्धनारीमुखपङ्कजानि = विनिद्रललनाऽऽननकमलानि, गृहाणि = भवनानि, सरांसि इव=कासारा इव, रेजुः = शुशुभिरे ।

※व्युत्पत्तिः※ सुखऽवगाहानि—सुखयतीति सुखं, "सुख तत्क्रियायाम्" इति धातोः पचाद्यच् । सुखमस्ति अस्मिन्स सुखः, "अर्श आदिभ्योऽच्" इत्यच् । अवगाहनम्—अवगाहः, अवपूर्वकात् "गाहू विलोडने" इति धातोः "भावे" इति घञ् । सुखोऽवगाहो येषु तानि । सन्तापहराणि—सन्तापं हरन्तीति, "हरतेरनुद्यमनेऽच"

इत्यच्प्रत्ययः । प्रबुद्धनारीमुखपङ्कजानि—गृहपक्षे—प्रबुद्धानि नारीमुखान्येव पङ्कजानि येषु तानि । सरःपक्षे—प्रबुद्धानि नारीमुखानीव पङ्कजानि येषु तानि । श्लेषोपमयोः सङ्करः ।

❀भाषाऽर्थः❀ प्रातःकालमें सुखसे प्रवेश किये जानेवाले, लक्ष्मी ( संपत्ति वा शोभा ) से सम्पन्न, पवित्र, आतप आदिके सन्तापका हरण करनेवाले, विशाल, विनिद्र ( निद्रारहित वा विकसित ) स्त्रियोंके मुखरूप कमलोंसे युक्त भवन तालाबों-के सदृश शोभित हुए ॥ ३४ ॥

**संमृष्टसिक्ताऽर्चितचारुपुष्पैरामोदवद्द्रव्यसुगन्धभागैः ।**
**लक्ष्मीर्विजिग्ये भवनैः सभृङ्गैः सेव्यस्य देवैरपि नन्दनस्य ॥ ३५ ॥**

**अन्वयः**—संमृष्टसिक्ताऽर्चितचारुपुष्पैः आमोदवद्द्रव्यसुगन्धभागैः सभृङ्गैः भवनैः देवैः सेव्यस्य नन्दनस्य अपि लक्ष्मीः विजिग्ये ।

**व्याख्या**—संमृष्टसिक्ताऽर्चितचारुपुष्पैः=शोधितोक्षितपूजितरुचिरकुसुमैः, आमोदवद्द्रव्यसुगन्धभागैः = चन्दनाऽऽदिसुरभ्यंशैः, सभृङ्गैः = भ्रमरसहितैः, भवनैः= गृहैः, देवैः=अमरैः, सेव्यस्य=सेवनीयस्य, नन्दनस्य अपि,= इन्द्रोपवनस्य अपि, लक्ष्मीः = शोभा, विजिग्ये = विजिता ।

❀व्युत्पत्तिः❀ संमृष्टसिक्ताऽर्चितचारुपुष्पैः—प्राक् संमृष्टानि ( अपनीतरजांसि ) पश्चात् सिक्तानीति संमृष्टसिक्तानि, "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाऽधिकरणेन" इति पूर्वकालसमासः । अर्चितानि चारूणि पुष्पाणि येषु तानि अर्चितचारुपुष्पाणि । संमृष्टसिक्तानि च तानि अर्चितचारुपुष्पाणि संमृष्टसिक्ताऽर्चितचारुपुष्पाणि, तैः । आमोदवद्द्रव्यसुगन्धभागैः—आमोदोऽस्ति एषां तानि आमोदवन्ति, तानि द्रव्याणि, तैः सुगन्धः भागः ( एकदेशः ) येषां तानि, तः । तदेकान्तत्वाऽभावाद् गन्धस्येत्वं न । विजिग्ये—विपूर्वात् "जि जये" इति धातोः कर्मणि लिट्, 'सँल्लिटोर्जेः" इति कुत्वम् । इन्द्रवज्रा वृत्तम् ।

❀भाषाऽर्थः❀ संमार्जन करनेके अनन्तर सिक्त किये गये और प्रशस्त सुन्दर फूलों-से युक्त, चन्दन आदि द्रव्योंसे सुगन्धपूर्ण एकदेशवाले, भ्रमरोंसे युक्त भवनोंसे देवों-से सेवनीय नन्दन वनकी शोभा भी जीती गई ॥ ३५ ॥

**अक्ष्णोः पतन् नीलसरोजलोभाद् भृङ्गः करेणाऽल्पधिया निरस्तः ।**
**ददंश ताम्राऽम्बुरुहाऽभिसन्धिस्तृष्णाऽऽतुरः पाणितलेऽपि धृष्णुः ॥३६॥**

**अन्वयः**—धृष्णुः भृङ्गः नीलसरोजलोभात् अक्ष्णोः पतन् अल्पधिया करेण निरस्तः ताम्राऽम्बुरुहाऽभिसन्धिः, तृष्णाऽऽतुरः ( सन् ) पाणितले अपि ददंश ।

**व्याख्या**—धृष्णुः = प्रगल्भः, भृङ्गः = भ्रमरः, नीलसरोजलोभात् = इदं नील-

कमलमिति बुद्धया लोलुपत्वात्, अक्ष्णोः = नेत्रयोः, कस्याश्चिदङ्गनाया इति शेषः । पतन् = निलीयमानः, अल्पधिया=लघुबुद्धया, तया अङ्गनया । करेण = हस्तेन, निरस्तः=क्षिप्तः, ताम्राऽम्बुरुहाऽभिसन्धिः = इदं रक्तकमलमित्यभिप्रायवान्, अत एव—तृष्णाऽऽतुरः = ताम्राऽम्बुरुहमधुलालसऽऽकुलः सन्, पाणितले अपि = हस्ततले अपि, अङ्गनाया इति शेषः । ददंश=दष्टवान् ।

ॐव्युत्पत्तिःॐ धृष्णुः—धर्षणशीलः, "ञिधृषा प्रागल्भ्ये" इति धातोः "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुप्रत्ययः । अल्पधिया—अल्पा धीर्यस्याः सा अल्पधीस्तया । ताम्राऽम्बुरुहाऽभिसन्धिः—अम्बुषु रोहतीति अम्बुरुहम्, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः । ताम्रं च तत् अम्बुरुहं ताम्राऽम्बुरुहं, तस्मिन् अभिसन्धिर्यस्य सः । अत्र भ्रान्तिमदलङ्कारस्तल्लक्षणं यथा—

"साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितः" इति ॥

ॐभाषाऽर्थःॐ प्रगल्भ भ्रमर नीलकमल जानकर लोभसे किसी सुन्दरीके आंखोंमें जाता हुआ अल्प बुद्धिवाली उससे हाथसे हटाये जानेपर उसके हाथमें उस भ्रमर को रक्तकमलकी बुद्धि हुई, अतः तृष्णासे आतुर होकर उसने सुन्दरीके हस्ततलमें भी काट दिया ॥ ३६ ॥

**विलोलतां चक्षुषि हस्तवेपथुं भ्रुवोर्विभङ्गं स्तनयुग्मवल्गितम् ।**
**विभूषणानां क्वणितं च षट्पदो गुरुर्यथा नृत्यविधौ समादधे ॥३७॥**

**अन्वयः**—नृत्यविधौ गुरुः यथा षट्पदः चक्षुषि विलोलतां, हस्तवेपथुं, भ्रुवोः विभङ्गं, स्तनयुग्मवल्गितं, विभूषणानां क्वणितं च समादधे ।

**व्याख्या**—नृत्यविधौ = लास्यविधाने, गुरुः यथा=नृत्याचार्य इव, षट्पदः = भ्रमरः, चक्षुषि = नेत्रे, सुन्दर्या इति शेषः, एवमन्यत्राऽपि । विलोलतां = चञ्चलतां, हस्तवेपथुं = करकम्पं, भ्रुवोः=नेत्रोर्ध्वभागयोः, विभङ्गं=बहुविधं कौटिल्यं, स्तनयुग्मवल्गितं=पयोधरयुगलप्रचलितं, विभूषणानाम् = अलङ्काराणां, क्वणितं च = शिञ्जितं च, समादधे = विहितवान् । यथा नृत्याचार्यः स्वशिष्यायां चतुरविलोलताद्यभिनयप्रकारान् विधत्ते तथैव भ्रमरोऽपि उपगमेन सुन्दर्यां बहुविधानभिनयप्रकारान् विहितवानिति भावः ।

ॐव्युत्पत्तिःॐ चक्षुषि—वैषयिकी सप्तमीयम् । हस्तवेपथुं—हस्तयोर्वेपथुम् । विभङ्गं—"भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्त्योः" इति हैमः । स्तनयुग्मवल्गितं—वल्गनं वल्गितं, "नपुंसके भावे क्तः" इति क्तप्रत्ययः । स्तनयुग्मस्य वल्गितम् । अत्र वंशस्थं वृत्तम् ।

※भाषाऽर्थः※ नृत्यविधिमें आचार्यके सदृश भ्रमरने सुन्दरीगणके नेत्रमें चञ्चलताका, हाथमें कम्पका, भौंहोंमें कौटिल्यका, पयोधरोंमें संचलनका और अलङ्कारोंके शब्दका विधान ( शिक्षण ) किया ॥ ३७ ॥

**अथाऽनुकूलान् कुलधर्मसंपदो विधाय वेशान् सुदिवः पुरीजनः ।**
**प्रबोधकाले शतमन्युविद्विषः प्रचक्रमे राजनिकेतनं प्रति ॥ ३८ ॥**

**अन्वयः**—अथ सुदिवः पुरीजनः कुलधर्मसंपदः अनुकूलान् वेशान् विधाय शतमन्युविद्विषः प्रबोधकाले राजनिकेतनं प्रति प्रचक्रमे ।

**व्याख्या**—अथ=अनन्तरं, सुदिवः=सुन्दरदिवसः, प्रतिदिवसं प्राप्तकल्याणत्वादिति भावः । पुरीजनः=लङ्कावासिजनः, कुलधर्मसंपदः=वंशाऽऽचारविभूतेः, अनुकूलान्=अनुगुणान्, वेशान्=नेपथ्यानि, विधाय = रचयित्वा, शतमन्युविद्विषः = इन्द्रद्वेषिणः, रावणस्येत्यर्थः । प्रबोधकाले=जागरणसमये, राजनिकेतनं प्रति = राजसदनं प्रति, प्रचक्रमे=गन्तुं प्रवृत्तः ।

※व्युत्पत्तिः※ सुदिवः—शोभनं दिवाऽस्य, "सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाऽजपदप्रौष्ठपदाः" इति समासाऽन्तोऽच्प्रत्ययः । कुलधर्मसंपदः—कुलधर्मस्य संपदः । शतमन्युविद्विषः—शतमन्युं विद्वेष्टीति शतमन्युविद्विट्, तस्य । राजनिकेतनं—प्रतियोगे "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि" इति द्वितीया । प्रचक्रमे—"प्रोपाभ्यां समर्थाभ्याम्" इति आत्मनेपदम् ।

※भाषाऽर्थः※ अनन्तर सुन्दर दिनवाला लङ्कानिवासी जन कुल, आचार तथा संपत्तिके अनुकूल वेशोंकी रचनाकर रावणके जगनेके समयमें राजभवनमें जानेका उपक्रम करने लगा ॥ ३८ ॥

**शैलेन्द्रशृङ्गेभ्य इव प्रवृत्ता वेगाज्जलौघाः पुरमन्दिरेभ्यः ।**
**आपूर्य रथ्याः सरितो जनौघा राजाऽङ्गनाऽम्भोधिमपूरयन्त ॥३९॥**

**अन्वयः**—शैलेन्द्रशृङ्गेभ्यः वेगात् प्रवृत्ताः जलौघाः सरितः आपूर्य (अम्भोधिम्) इव पुरमन्दिरेभ्यो वेगात् प्रवृत्ता जनौघा रथ्या आपूर्य राजाङ्गनाऽम्भोधिम् अपूरयन्त ।

**व्याख्या**—शैलेन्द्रशृङ्गेभ्यः = महापर्वतशिखरेभ्यः, वेगात्=जवात्, प्रवृत्ताः= प्रचलिताः, जलौघाः=सलिलसमूहाः, सरितः = नदीः, आपूर्य = प्रपूर्य, ( अम्भोधिं= समुद्रम् ) इव, पुरमन्दिरेभ्यः = लङ्काभवनेभ्यः, वेगात्=जवात्, प्रवृत्ताः=प्रचलिताः, जनौघाः=लोकसमूहाः, रथ्याः=प्रतोलीः, आपूर्य=प्रपूर्य, राजाऽङ्गनाऽम्भोधिं=राजचत्वरसमुद्रम्, अपूरयन्त=पूरितवन्तः ।

ॐव्युत्पत्तिःॐ रथ्याः—रथं वहन्तीति रथ्याः, "तद्वहति रथयुगप्रासङ्गम्" इति यत्। राजाऽङ्गनाऽम्भोधिं—राजाऽङ्गनम् अम्भोधिरिव इति राजाऽङ्गनाम्भोधिः, तम् । उपमाऽलङ्कारः । इन्द्रवज्रा वृत्तम् ।

ॐभाषाऽर्थःॐ बड़े पर्वतकी चोटियोंसे वेगसे बहनेवाले जलसमूह नदियोंको पूर्ण करके जैसे समुद्रको पूर्ण करते हैं, उसी प्रकार लङ्काके भवनोंसे वेगसे चलनेवाले जनसमुदायने रथ्याओं ( सड़कों ) को पूर्णकर समुद्रतुल्य राजाके अङ्गनको पूर्ण किया ॥ ३९ ॥

**प्रबोधकालात् त्रिदशेन्द्रशत्रोः प्रागूर्ध्वशोषं परिशुष्यमाणाः ।**
**हीना महान्तश्च समत्वमीयुर्द्वाःस्थैरवज्ञापरुषाऽक्षिदृष्टाः ॥ ४० ॥**

**अन्वयः**—त्रिदशेन्द्रशत्रोः प्रबोधकालात् प्राक् ऊर्ध्वशोषं परिशुष्यमाणाः हीना महान्तश्च द्वाःस्थैः अवज्ञापरुषाऽक्षिदृष्टाः ( सन्तः ) समत्वम् ईयुः ।

**व्याख्या**—त्रिदशेन्द्रशत्रोः = इन्द्राऽरेः, रावणस्येत्यर्थः । प्रबोधकालात्=जागरणसमयात्, प्राक् = पूर्वम्, ऊर्ध्वशोषं परिशुष्यमाणाः = ऊर्ध्वा एव तिष्ठन्तः परिशोषं नीयमानाः, किमयं विधास्यतीति त्रासादिति भावः । अत्र अन्तर्भावितणिजर्थो ज्ञेयः । हीनाः = अवकृष्टाः, महान्तश्च=उत्कृष्टाश्च, द्वाःस्थैः=द्वारपालैः, अवज्ञापरुषाऽक्षिदृष्टाः= अनादरकठोरनयनाऽवलोकिताः सन्तः, समत्वं = तुल्यभावम्, ईयुः = प्राप्तवन्तः ।

ॐव्युत्पत्तिःॐ प्रबोधकालात्—अञ्चूत्तरपदयोगे "अन्यारादितरर्ते दिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी । ऊर्ध्वशोषम्—"ऊर्ध्वे शुषिपूरोः" इति ऊर्ध्वे कर्तरि णमुल् । "कृन्मेजन्त" इत्यव्ययत्वम् । द्वाःस्थैः—द्वारि तिष्ठन्तीति द्वाःस्थास्तैः, "सुपि-स्थ" इति कप्रत्ययः । "खरवसानयोर्विसर्जनीय" इति विसर्जनीयत्वे "विसर्जनीयस्य स" इति सत्वम् । अवज्ञापरुषाऽक्षिदृष्टाः=अवज्ञया ( हेतुना ) परुषे ये अक्षिणी ताभ्यां दृष्टाः ।

ॐभाषाऽर्थःॐ रावणके जागनेके पहले खड़े रहते हुए ही भयके कारण सूखते हुए छोटे और बड़े सब लोगोंने द्वारपालोंसे अनादरसे कठोर नेत्रोंसे देखे जाकर समभावको प्राप्त किया ॥ ४० ॥

**गुरूरुचञ्चत्करकर्णजिह्वैरवज्ञयाऽग्राऽङ्गुलिसंगृहीतैः ।**
**रक्षांस्यनायासहृतैरुपास्थुः कपोललीनाऽलिकुलैर्गजेन्द्रैः ॥ ४१ ॥**

**अन्वयः**—रक्षांसि गुरूरुचञ्चत्करकर्णजिह्वैः अवज्ञया अग्राऽङ्गुलिसंगृहीतैः अनायासहृतैः कपोललीनाऽलिकुलैः गजेन्द्रैः उपास्थुः ।

**व्याख्या**—रक्षांसि = केचिद्राक्षसाः, गुरूरुचञ्चत्करकर्णजिह्वैः = महापरिमाण-

विशालचलच्छुण्डाश्रोत्ररसनैः, अवज्ञया = अनादरेण, अग्राऽङ्गुलिसंगृहीतैः=पादाऽङ्गुष्ठधृतैः, अनायासहृतैः = अप्रयासाऽऽकृष्टैः, कपोललीनाऽलिकुलैः = गण्डश्लिष्टभ्रमरसमूहैः, मत्तत्वादिति भावः। एतादृशैः, गजेन्द्रैः = श्रेष्ठहस्तिभिः, उपास्थुः=सेवितवन्तः, रावणमिति शेषः।

॥व्युत्पत्तिः॥ गुरूरुचञ्चत्करकर्णजिह्वैः—गुरव उरवः चञ्चन्तः कराः कर्णा जिह्वा येषां तैः। अग्राऽङ्गुलिसंगृहीतैः—अङ्गुलेः अग्रम् अग्राऽङ्गुलि, "राजदन्तादिषु परम्" इत्यग्रस्य पूर्वनिपातः, तेन संगृहीतैः। कपोललीनाऽलिकुलैः-कपोलयोः लीनानि अलिकुलानि येषां तैः।

॥भाषाऽर्थः॥ कुछ राक्षसोंने महापरिमाण विशाल चलनेवाले सूँड कान और जिह्वासे युक्त, अनादरसे पैरके अंगूठेसे परिगृहीत, विना प्रयासके खींचे गये और कपोलोंमें भ्रमरसमूहोंसे युक्त ऐसे हाथियोंसे रावणकी सेवा की ॥ ४१ ॥

**निकृत्तमत्तद्विपकुम्भमांसैः सम्पृक्तमुक्तैर्हरयोऽग्रपादैः।**
**आनिन्यिरे श्रेणिकृतास्तथाऽन्यैः परस्परं वालधिसन्निबद्धाः ॥ ४२ ॥**

**अन्वयः**—तथा अन्यैः निकृत्तमत्तद्विपकुम्भमांसैः सम्पृक्तमुक्तैः अग्रपादैः ( उपलक्षिताः ) श्रेणिकृताः परस्परं वालधिसन्निबद्धाः हरय आनिन्यिरे।

**व्याख्या**—तथा = तेन प्रकारेण, अन्यैः = अपरैः, राक्षसैरित्यर्थः। निकृत्तमत्तद्विपकुम्भमांसैः = छिन्नप्रभिन्नहस्तिशिरःपिण्डपललैः, अत एव संपृक्तमुक्तैः = संयुक्तहस्तिमौक्तिकैः, एतादृशैः, अग्रपादैः=पादाऽग्रैः, उपलक्षिताः इति शेषः। श्रेणिकृताः = पङ्क्तीकृताः, परस्परम् = अन्योन्यं, वालधिसन्निबद्धाः=पुच्छाग्रभागसंयताः, हरयः = सिंहाः, आनिन्यिरे=आनीताः, रावणसेवाऽर्थमिति शेषः।

॥व्युत्पत्तिः॥ निकृत्तमत्तद्विपकुम्भमांसैः—निकृत्तानि मत्तद्विपानां कुम्भमांसानि यैस्तैः। "प्रभिन्नो गर्जितो मत्त" इति, "कुम्भौ तु पिण्डौ शिरस" इति चाऽमरः। संपृक्तमुक्तैः—सम्पृक्ता मुक्ता येषु ते सम्पृक्तमुक्तास्तैः। अग्रपादैः—"इत्थंभूतलक्षणे" इति तृतीया। श्रेणिकृताः—अश्रेणयः श्रेणयः कृताः इति, "श्रेण्यादयः कृतादिभिः" इति "श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम्" इति च्व्यर्थे समासः। "श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ" इति मेदिनी। वालधिसन्निबद्धाः—वाला धीयन्ते अत्रेति वालधिः, "कर्मण्यधिकरणे च" इति किप्रत्ययः। "वालहस्तश्च वालधिः" इत्यमरः। वालधिना सन्निबद्धाः।

॥भाषाऽर्थः॥ उसी तरह और राक्षस मत्त हाथियोंके कुम्भमांसोंको विदीर्ण

करनेवाले और गजमुक्ताओंसे संयुक्त पादाओंसे उपलक्षित, पङ्क्तिबद्ध और परस्पर-में पूँछके अग्रभागसे बांधे गये सिंहोंको ले आये ॥ ४२ ॥

**उपेक्षिता देवगणैस्त्रसद्भिर्निशाचरैर्वीतभयैर्निकृत्ताः ।**
**तस्मिन्नदृश्यन्त सुरद्रुमाणां सजालपुष्पस्तबकाः प्रकीर्णाः ॥ ४३ ॥**

**अन्वयः**—तस्मिन् त्रसद्भिः देवगणैः उपेक्षिताः वीतभयैः निशाचरैः निकृत्ताः सुरद्रुमाणां प्रकीर्णाः सजालपुष्पस्तबका अदृश्यन्त ।

**व्याख्या**—तस्मिन् = राजाऽङ्गने, त्रसद्भिः=बिभ्यद्भिः, देवगणैः = सुरसमूहैः, उपेक्षिताः=कृतोपेक्षाः, अत एव वीतभयैः = निर्भीकैः, "वीतदयैः" इति पाठान्तरम्, तत्र किमेतैः स्थितैरिति मत्या निर्दयैरित्यर्थः। निशाचरैः = राक्षसैः, निकृत्ताः = छिन्नाः, सुरद्रुमाणां = देववृक्षाणां, पारिजातानामित्यर्थः । प्रकीर्णाः=विक्षिप्ताः, सजाल-पुष्पस्तबकाः = सकोरककुसुमगुच्छाः, अदृश्यन्त = दृष्टाः, सेवकजनेनेति शेषः ।

※व्युत्पत्तिः※ त्रसद्भिः—त्रसन्तीति त्रसन्तस्तैः, "त्रसी उद्वेगे" इति धातोर्लटः शत्रादेशः। "वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः" इति श्यनो वैकल्पिकत्वात्पक्षे तदभावः। निशाचरैः—निशासु चरन्तीति निशाचरास्तैः, "चरेष्टः" इति टप्रत्ययः। सजालपुष्पस्तबकाः—जालैः सहिताः सजालाः, "जालं गवाक्ष आनाये कोरके दम्भ-भेदयोः" इति विश्वः । सजालाश्च ते पुष्पस्तबकाः ।

※भाषाऽर्थः※ राजाके चत्वरमें सेवकोंने डरनेवाले देवगणोंसे उपेक्षित अत एव निर्भय राक्षसोंसे काटे गये पारिजातोंके बिखरे हुए कलिकायुक्त फूलोंके गुच्छोंको देखा ॥ ४३ ॥

**निराकरिष्णुर्द्विजकुञ्जराणां तृणीकृताऽशेषगुणोऽतिमोहात् ।**
**पापाऽऽशयानभ्युदयाऽर्थमार्चीत् प्राग्ब्रह्मरक्षःप्रवरान् दशाऽऽस्यः ॥४४॥**

**अन्वयः**—निराकरिष्णुः अतिमोहात् द्विजकुञ्जराणां तृणीकृताऽशेषगुणः दशास्यः ( विबुद्धः सन् ) प्राक् पापाऽऽशयान् ब्रह्मरक्षःप्रवरान् अभ्युदयार्थम् आर्चीत् ।

**व्याख्या**—निराकरिष्णुः = निराकरणशीलः, द्विजकुञ्जरानिति शेषः। अति-मोहात् = अतिशयाऽज्ञानात्, द्विजकुञ्जराणां = श्रेष्ठब्राह्मणानां, तृणीकृताऽशेषगुणः = तिरस्कृतसमस्तगुण इत्यर्थः। एतादृशो दशाऽस्यः = रावणः, विबुद्धः सन्निति शेषः। प्राक् = पूर्वं, सभाप्रवेशादिति शेषः। पापाऽऽशयान्=कल्मषपूर्णाऽभिप्रायान्, ब्रह्म-रक्षःप्रवरान् = श्रेष्ठब्रह्मराक्षसान्, अभ्युदयाऽर्थं = स्वकीयाऽभ्युन्नत्यर्थम्, आर्चीत् = पूजितवान् ।

※व्युत्पत्तिः※ द्विजकुञ्जराणां—द्विजाः कुञ्जरा इव द्विजकुञ्जरास्तेषाम्, "उपमितं व्याघ्राऽऽदिभिः सामान्याऽप्रयोगे" इति समासः, "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इत्यमरः। तृणीकृताऽशेषगुणाः—तृणीकृता अशेषा गुणा येन सः। पापाऽऽशयान्—पाप आशयो येषां तान्। "अभिप्रायश्छन्द आशयः" इत्यमरः।

※भाषाऽर्थः※ श्रेष्ठ ब्राह्मणोंको निराकरण करनेवाले और अतिशय अज्ञानसे श्रेष्ठ ब्राह्मणोंके सम्पूर्ण गुणोंको तिरस्कार करनेवाले रावणने जागकर पहले पापपूर्ण अभिप्रायवाले श्रेष्ठ ब्रह्मराक्षसोंकी अभ्युदयके लिए पूजा की ॥ ४४ ॥

**मायाविभिस्त्रासकरैर्जनानामाप्तैरुपादानपरैरुपेतः।**
**सतां विघातैकरसैरविक्षत् सदः परिक्षोभितभूमिभागम् ॥ ४५ ॥**

**अन्वयः**—मायाविभिः जनानां त्रासकरैः उपादानपरैः सतां विघातैकरसैः आप्तैः उपेतः ( सन् , दशाऽऽस्यः ) परिक्षोभितभूमिभागं सदः अविक्षत् ।

**व्याख्या**—मायाविभिः = मायिभिः, जनानां = लोकानां, त्रासकरैः=भीत्युत्पादकैः, अतिरौद्रत्वादिति शेषः। उपादानपरैः=ग्रहणपरैः, स्वाम्यर्थसम्पादनतत्परैरिति भावः । सतां=सज्जनानां, विघातैकरसैः = विनाशैकाऽनुरागैः, आप्तैः = विश्वस्तैः, राक्षसैरिति शेषः । उपेतः=उपगतः सन्, दशास्य इति शेषः । परिक्षोभितभूमिभागं= परिस्खालितधरण्येकदेशं, स्वगत्या इति शेषः। एतादृशं सदः=सभाम्, अविक्षत्=प्रविष्टः।

※व्युत्पत्तिः※ मायाविभिः—मायाऽस्ति एषां ते मायाविनः, तैः, "अस्मायामेधास्रजो विनिः" इति विनिः। व्रीह्यादिपाठादिनिठनौ च – मायी मायिक इत्यपि। त्रासकरैः – त्रासं कुर्वन्तीति तच्छीलास्त्रासकरास्तैः, "कृञो हेतुताच्छील्याऽऽनुलोम्येषु" इति टप्रत्ययः। विघातैकरसैः—एको रसो येषां त एकरसाः, विघात एकरसास्तैः। आप्तैः—"आप्तप्रत्ययितौ समौ" इत्यमरः। परिक्षोभितभूमिभागं—परिक्षोभितो भूमिभागो यस्मिंस्तत्। अविक्षत्—"विश प्रवेशने" इति धातोर्लुङ्। "शल इगुपधादनिटः क्सः" इति क्सः।

※भाषाऽर्थः※ मायावी मनुष्योंको त्रास देनेके स्वभाववाले, स्वामीके प्रयोजनका सम्पादन करनेमें तत्पर और सज्जनोंका नाश करनेमें ही एकमात्र अनुराग रखनेवाले विश्वस्त राक्षसोंसे उपगत होते हुए रावणने अपने आगमनसे हिलनेवाले भूभागसे युक्त सभामें प्रवेश किया ॥ ४५ ॥

**विधूतनिशितशस्त्रैस्तद्युतं यातुधानै-**
**रुरुजठरमुखीभिः सङ्कुलं राक्षसीभिः।**

श्वगणिशतविकीर्णं वागुरावन्मृगीभि-
र्वनमिव सभयाभिर्देवबन्दीभिरासीत् ॥ ४६ ॥

**अन्वयः**—विधृतनिशितशस्त्रैः यातुधानैः युतम् उरुजठरमुखीभिः राक्षसीभिः सभयाभिः देवबन्दीभिः सङ्कुलं तत् श्वगणिशतविकीर्णं वागुरावत् सभयाभिः मृगीभिः सङ्कुलं वनम् इव आसीत् ।

**व्याख्या**—विधृतनिशितशस्त्रैः = गृहीततीक्ष्णायुधैः, यातुधानैः=राक्षसैः, युतं= युक्तम्, उरुजठरमुखीभिः = विशालोदराऽऽननाभिः, राक्षसीभिः=रक्षःस्त्रीभिः, एवं च— सभयाभिः = भीतियुक्ताभिः, देवबन्दीभिः = बन्दीभूतसुरललनाभिश्च, सङ्कुलं=व्याप्तं, तत् = सदः, श्वगणिशतविकीर्णम् = आखेटकशतच्छन्नं, वागुरावत् = मृगबन्धनीयुक्तं, तत एव सभयाभिः = भीतियुक्ताभिः, मृगीभिः = हरिणीभिः, संकुलं = व्याप्तं, वनम् इव=अरण्यम् इव, आसीत् = अभवत् ।

❀व्युत्पत्तिः❀ विधृतनिशितशस्त्रैः—विधृतानि निशितानि शस्त्राणि यैस्तैः । उरु-जठरमुखीभिः—जठरं च मुखं च जठरमुखं, "द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्" इति समाहारद्वन्द्वः । उरु जठरमुखं यासां ता उरुजठरमुख्यस्ताभिः । "स्वाऽङ्गाच्चोपसर्ज-नादसंयोगोपधात्" इति ङीष् । श्वगणिशतविकीर्णं—शुनां गणः श्वगणः, सोऽस्ति एषां ते श्वगणिनः, "अत इनिठनौ" इति इनिप्रत्ययः । श्वगणिनां शतं, तेन विकीर्णम् । वागुरावत्—वागुराऽस्ति यस्मिंस्तत्, मतुप्प्रत्ययः । "वागुरा मृगबन्धनी" इत्यमरः । उपमाऽलङ्कारः । मालिनी वृत्तम् ।

❀भाषाऽर्थः❀ तीक्ष्ण शस्त्रोंको धारण करनेवाले राक्षसोंसे युक्त, विशाल पेट और मुखवाली राक्षसियोंसे एवम् डरनेवाली निरुद्ध देवललनाओंसे व्याप्त वह सभाभवन सैकड़ों शिकारियोंसे और मृगपाशोंसे युक्त एवम् डरनेवाली मृगियासे व्याप्त वनके सदृश हो गया ॥ ४६ ॥

जलद इव तडित्वान् प्राज्यरत्नप्रभाभिः
प्रतिककुभमुदस्यन् निस्वनं धीरमन्द्रम् ।
शिखरमिव सुमेरोरासनं हैममुच्चै-
र्विविधमणिविचित्रं प्रोन्नतं सोऽध्यतिष्ठत् ॥ ४७ ॥

**अन्वयः**—उच्चैः सः प्राज्यरत्नप्रभाभिः तडित्वान् जलद इव प्रतिककुभं धीर-मन्द्रं निस्वनम् उदस्यन् विविधमणिविचित्रं सुमेरोः शिखरम् इव प्रोन्नतं हैमम् आ-सनम् अध्यतिष्ठत् ।

व्याख्या—उच्चैः=उन्नतः, सः=रावणः, प्राज्यरत्नप्रभाभिः=प्रचुरमणिद्युतिभिः, तडित्वान्=विद्युद्युक्तः, जलद इव=मेघ इव, प्रतिककुभं=दिशि दिशि, धीरमन्द्रं=मन्द-गम्भीरं, निस्वनं = शब्दम्, उदस्यन् = क्षिपन्, विविधमणिविचित्रं = नानावर्णरत्न-कर्बुरं, सुमेरोः = हेमाद्रेः, शिखरम् इव=शृङ्गम् इव, प्रोन्नतम् = अत्युच्चं, हैमं = सौवर्णम्, आसनम्=उपवेशनस्थानं, सिंहासनमित्यर्थः। अध्यतिष्ठत्=अधिष्ठितवान्।

ॐव्युत्पत्तिःॐ प्राज्यरत्नप्रभाभिः—प्राज्यानि च तानि रत्नानि प्राज्यरत्नानि, तेषां प्रभाभिः। तडित्वान्—तडितः सन्ति यस्य सः। मतुप्प्रत्ययः। "झय" इति मस्य वः। अत्राऽयं शब्दो यौगिको बोध्यः। प्रतिककुभ—वीप्सायामव्ययीभावः। "अच्प्रत्यन्ववपूर्वात्सामलोम्नः" इत्यत्र "अच्" इति योगविभागात् अन्यत्राऽपि समासान्तोऽच्। अतः पद्मनाभ इत्यत्रेव अत्राऽपि समासाऽन्तोऽच्। आसनम्—अधिपूर्वकस्य स्थाधातोर्योगे "अधिशीङ्स्थाऽऽसां कर्म" इति आधारस्य कर्मत्वम्। अत्रोपमाऽलङ्कारः। मालिनी वृत्तम्।

ॐभाषाऽर्थःॐ उन्नत रावण प्रचुर रत्नोंकी द्युतियोंसे बिजलियोंसे युक्त मेघके सदृश हो प्रतिदिशामें मन्द और गम्भीर शब्दको प्रकट करता हुआ अनेक रत्नोंसे विचित्र सुमेरु पर्वतके शिखरके सदृश अत्युन्नत सौवर्ण सिंहासनपर आरूढ हुआ ॥४७॥

इति श्रीचन्द्रकलाऽऽख्यया नव्यव्याख्यया मण्डिते श्रीभट्टिकाव्ये तृतीये प्रसन्नकाण्डे लक्षणरूपे द्वितीयः परिच्छेदः (वर्गः) तथा लक्ष्य-रूपे कथानके प्रभातवर्णनं नाम एकादशः सर्गः।

ॐ तत्सत्कृष्णार्पणमस्तु।

